# निवेदन ।

मने जणावतां अति हर्ष थाय छे के सदरहु ग्रन्थमाला जेओश्रीना पुण्यनामना स्मरणार्थे मारा तरफथी शरु करवामां आवी छे एओश्रीना प्रबल पुण्योदयथी खेंचाइने एओश्रीना समुदाय तरफथी मने सारो साथ मळ्यो अने दोढ वर्ष जेटला टुंक समयमां सोळमा ग्रन्थांक तरीके आ ' **आवश्यक निर्युक्ति दीपिका** ' नामनो ग्रन्थ प्रथम विभागमां बहार पाडवामां आवे छे । सदरहु ग्रन्थ अद्यापि अमुद्रित छे अने ते आवश्यक निर्युक्ति तथा भाष्यनी मूळ गाथाना अर्थोने टुंकाणमां समजवा इच्छनारने उपयोगी थइ पडे तेम होवाथी ज तेनुं प्रकाशन करवामां आव्युं छे ।

सदरहु ग्रन्थना कर्ता विषे हजी जेवुं जोइए तेवु साहित्य उपलब्ध नहि थवाथी ते संबंधमां कंइ लखवामां आव्युं नथी । ग्रन्थनी समाप्ति थता सुधीमां जो प्राप्त थशे तो आपवामां आवशे ।

सदरहु ग्रन्थना प्रकाशनमां सम्पूर्ण द्रव्यनी सहाय नहि मळेली होवाथी तथा तेना बाकीना भागो प्रकाशित करवा माटे बीजी सहाय नहि मळेल होवाथी आ ग्रन्थनी उपजमांथी बाकीना भागोनुं प्रकाशन करी शकाय ते हेतुथी मूळ किंमत राखवामां आवी छे।

सदरहु ग्रन्थना प्रकाशनमां द्रव्यनी सहाय पू. मुनिराज **श्रीतिलकविजयजी** महाराजना उपदेशथी मळेल छे तथा ते शोधवामां पू. मुनिराज **श्रीमानविजयजी** महाराजे परिश्रम करेल छे तेथी तेओ बन्ने पूज्योनो ग्रन्थमाला तरफथी आभार मानुं छुं अने प्रमाद तथा प्रेस दोषथी जे कांइ भूल रही गइ होय ते सुधारीने वांचवा विनंति छे । एज ॥

वि. सं १९९६ मागसर सुद ५ सुरत

**मास्तर हीरालाल रणछोडभाई**

॥ अर्हम् ॥

आचार्यश्री विजयदानसूरीश्वरगुरुभ्यो नमः ॥

श्रीमद् माणेक्यशेखरसूरीश्वरविरचिता-

# ॥ आवश्यकनिर्युक्तिदीपिका ॥



नत्वा श्रीवीरजिनं तदनु श्रीमेरुतुंगसूरिगुरून् ।
कुर्वे श्रीआवश्यकनिर्युक्तेर्दीपिकाममलाम् ॥ १ ॥

श्रीमेरुतुंगसूरिगुरुभ्यो नमः ॥ श्री आवश्यकसूत्रनिर्युक्तिविषयः प्रायो दुर्गपदार्थः कथामात्रं निर्युक्त्युदाहृतं च लिख्यते—

इह श्रीदेववाचकइत्यपरनामा देवर्द्धिगणिर्ज्ञानपञ्चकरूपं नन्दिग्रन्थं वक्तुकामो मङ्गलार्थं पूर्वमावलिका अभिधित्सुः सामान्यतोऽर्हत्स्तुतिमाह ॥ 'जयइ'—

जयइ जगजीवजोणीवियाणओ जगगुरू जगाणंदो ।
जगणाहो जगबंधू, जयइ जगप्पियामहो भयवं ॥ १ ॥

स्तुतिः द्विधा प्रणामरूपा, असाधारणगुणोत्कीर्तनरूपा च । तत्र आद्याऽनुक्ताऽपि सामर्थ्येन ज्ञायते, कथं ? य इदृग्गुणवान् तं नमामि इति । द्वितीया द्विधा स्वार्थसंपदभिधात्री, परार्थसम्पदभिधात्री च । स्वार्थसम्पन्नो हि परार्थं प्रति समर्थः स्यादिति प्राक् तामाह-जयति, इन्द्रियादीनां जयात्, को असावित्याह जगज्जीवयोनिविज्ञायकः जगद्धर्माऽधर्माकाशपुद्गलास्तिकायकालरूपं । जीवाः स्थावराद्याः, योनयो जीवोत्पत्तिस्थानानि ताः सचिताद्या बहुविधाः तासां विज्ञायको विशेषेण ज्ञाता सर्वज्ञ इत्यर्थः । जगद् गृणाति इति जगद्गुरुः यथास्थितसर्वार्थवक्ता इत्यर्थः । एवं ज्ञानवाक्सामर्थ्याभ्याम् स्वार्थसम्पदुक्ता । जगत् संज्ञिपञ्चेन्द्रियरूपं, तस्य धर्मदेशनादिनाऽऽनन्दहेतुत्वाज्जगदानन्दः, जगतश्चराचररूपस्य यथास्थस्वरूपप्ररूपणलाभेनाऽलीकप्ररूपणापायनिरासेन च योगक्षेमकृत्त्वात् नाथो जगन्नाथः । तत्र अलब्धलाभो योगः लब्धस्य परिरक्षणं क्षेमः । जगतः सर्वजीवरूपस्य सुखकृत्त्वाद्बन्धुः, तथा जयति सर्वोत्कर्षेण वर्त्तते, जगतो भव्यलोकस्य पालनात् पिता धर्मस्तस्याऽपि जनकत्वात्पितामहो जगत्पितामहः । एवं परार्थसंपदपि उक्ता । भगवान् परमैश्वर्यवत्त्वेन स्वार्थपरार्थसम्पन्नोऽर्हन् ॥ १ ॥ अथ आसन्नोपकारिश्रीवीरस्तुतिः ॥ 'जयइ'—

जयइ सुआणं पभवो, तित्थयराणं अपच्छिमो जयइ ।
जयइ गुरू लोगाणं, जयइ महप्पा महावीरो ॥ २ ॥

श्रुतानां सुशास्त्राणां प्रभव उत्पत्तिस्थानं वर्तमानश्रुतस्यार्थतः श्रीवीरोक्तत्वात्, तीर्थकराणां मध्ये न विद्यते पश्चिमो यस्मात्

सोऽपश्चिमः, लोकानां गुरुर्धर्म्मदेष्टा, महानचिंत्यशक्तिः आत्मा यस्य सः महात्मा श्रीमहावीरः, जयतीति पुनः पुनः स्तवाधिकारा-ददुष्टम्। यतः 'सज्झायज्झाणतवओसहेसु, उवएसथुइपयाणेसु। संतगुणकित्तणासु य न हुन्ति पुणरुत्तदोसाउ' ॥१॥ ॥२॥ 'भद्दं'—

**भद्दं सव्वजगुज्जोयगस्स, भद्दं जिणस्स वीरस्स। भद्दं सुरासुरनमंसियस्स, भद्दं धुयरयस्स ॥ ३ ॥**

सर्वजगदुद्योतकस्य भद्रं भवतु। इह किल स्तुतौ चत्वारोऽतिशया वर्ण्यन्ते। ते चात्रैवं—सर्वजगदुद्योतकस्य इति सम्यग् जगदालोकनेन तथैव प्ररूपणेन च ज्ञानवचनातिशयौ, जिनस्य इति भावारिजयादपायापगमातिशयः, सुरासुरनमस्कृतस्य इति पूजातिशयः, एवं समवसरणाऽवस्था। तथा धूतं रजः कर्म्म येन स धूतरजाः तस्य, एवं सिद्धावस्था उक्ता ॥ ३ ॥

अथ अर्हतां संघस्थापकत्वात् संघस्य च अर्हद्वन्द्यत्वात् सङ्घस्तुतिमाह ॥ 'गुणभवणेत्यादि'—

**गुणभवणगहण सुयरयणभरिय दंसणविसुद्धरत्थागा। संघनगर! भद्दं ते, अक्खंडचारित्तपागारा ॥४॥**

गुणाः पिण्डविशुद्धयाद्या उत्तरगुणास्त एव भवनानि तैर्गहनं व्याप्तं, गुणभवनगहनं तस्य आमन्त्रणं हे गुणभवनगहन! हे श्रुतरत्नभृत! श्रुतमेव रत्नं श्रुतरत्नं तेन भृत!, हे दर्शनविशुद्धरथ्याक! दर्शनं सम्यक्त्वमेव विशुद्धा रथ्या मार्गो यस्य, प्राकृतत्वाद् आकारनिर्देशो यथा गोयमा! हे सङ्घनगर! सङ्घ एव नगरं सङ्घनगर! ते भद्रं अस्तु, हे अखंडचारित्र-प्राकार! चारित्रं मूलगुणा महाव्रतरूपाः, अखण्डचारित्र एव प्राकारो यस्य ॥ ४ ॥ 'संजम'—

**संजमतवतुंबारयस्स, नमो सम्मत्तपारियल्लस्स। अप्पडिचक्कस्स जओ, होउ सया संघचक्कस्स ॥५॥**

संयमः १७ भेदः तपांसि द्वादशधा तान्येव क्रमात्तुंबारा यस्य तस्मै संयमतपस्तुंबारकाय, सम्यक्त्वं एव पारियल्लं बाह्यपृष्टस्य बाह्याभ्रमिर्यस्मिन् तस्मै सङ्घचक्राय नमोऽस्तु । तथा नास्ति प्रतिरूपं तुल्यं अन्यत् परमतचक्रं यस्य सोऽप्रतिचक्रः तस्य सङ्घचक्रस्य सदा जयो भवतु ॥ ५ ॥ 'भद्दं'—

**भद्दं सीलपडागूसियस्स, तवनियमतुरयजुत्तस्स । संघरहस्स भगवओ, सज्झायसुनंदिघोसस्स ॥६॥**

उत्सृता शीलमेव पताका यस्य स उत्सृतशीलपताकः तस्य, प्राकृतत्वात् व्यत्ययः, तपोनियमाभ्यां तुरगाभ्यां युक्तस्य, तत्र तपः परिमितकालं इच्छानिग्रहः नियमो यावज्जीवं, सङ्घरथस्य भद्रं अस्तु, भगवतः पूज्यस्य शिवपुरगामित्वात्, स्वाध्यायो वाचनापृच्छनापरावर्तनाऽनुप्रेक्षाधर्मकथारूपः पञ्चधा स एव सुष्ठु नन्दिघोषस्तूर्यनादो यस्य, यतो महारथाऽग्रे तूर्यनादा जायन्ते, यद्वा स्वाध्याय एव सुष्ठु नन्दी वर्द्धमानः घोषो निर्घोषो यस्य, स स्वाध्यायसुनन्दिघोषः तस्य ॥ ६ ॥ 'कम्म'—

**कम्मरयजलोहविणिग्गयस्स, सुयरयणदीहनालस्स । पंचमहव्वयथिरकन्नियस्स, गुणकेसरालस्स ॥७॥**

कर्म द्विधा बध्यमानं प्राग्बद्धं च, तत्र आद्यं रजः पङ्कः तत् समं, द्वितीयं तु जलौघोपमं, ताभ्यां उत्कृष्टस्थित्यादियुक्ताभ्यां विनिर्गतस्य, श्रुतरत्नं जनागमः तदेव दीर्घं नालं यस्य, पञ्चमहाव्रतानि एव स्थिरा कर्णिका सर्वपत्रमूलपीठं यस्य, गुणा उत्तरगुणा एव केसराणि यस्य प्राकृतत्वात् मत्वार्थे आलप्रत्ययः ॥ ७ ॥ 'सावग'—

**सावगजणमहुआरिपरिवुडस्स, जिणसूरतेयबुद्धस्स । संघपउमस्स भद्दं, समणगणसहस्सपत्तस्स ॥८॥**

श्रावकजना एव सुस्वरतयाऽऽसक्ततया च जिनगुणगायित्वेन मधुकर्य इव ताभिः परिवृतस्य, जिन एव सूरः सूर्यः तस्य देशनारूपेण तेजसा बुद्धस्य संघपद्मस्य, भद्रं, श्रमणानां गण एव सहस्रं पत्राणां यस्मिन् तस्य ॥ ८ ॥ 'तव'—

**तवसंजममयलंछण, अकिरियराहुमुहदुद्धरिस निच्चं ।**

**जय संघचंद ! निम्मलसम्मत्तविसुद्धजोण्हागा ! ॥ ९ ॥**

तपःप्रधानः संयम एव मृगरूपं लाञ्छनं यस्य तस्याह्वानम्, अक्रिया नास्तिका एव राहुमुखानि तैः दुर्धृष्य अनभिभवनीय ! हे सङ्घचन्द्र ! नित्यं जय, निर्मलं निरतिचारं सम्यक्त्वमेव विशुद्धाऽऽत्रादिमुक्ता ज्योत्स्ना यस्य तस्य आह्वानं हे सम्यक्त्वविशुद्धज्योत्स्नाक ! ॥ ९ ॥ 'पर'—

**परतित्थियगहपहनासगस्स, तवतेयदित्तलेस्स । नाणुज्जोयस्स जए, भद्दं दमसंघसूरस्स ॥ १० ॥**

परतीर्थिका एव ग्रहाः तेषां प्रभाया नाशकस्य, तपस्तेज एव दीप्ता लेश्या प्रभा यस्य, ज्ञानमेव उद्योतो यस्य तस्य, 'जए' जगति, दमः शमस्तत्प्रधानः संघ एव सूर्यः तस्य भद्रं अस्तु ॥ १० ॥ 'भद्दं'—

**भद्दं धिइवेलापरिगयस्स, सज्झायजोगमगरस्स । अक्खोहस्स भगवओ, संघसमुद्दस्स रुंदस्स ।११।**

धृतिः चारित्रोत्साहः सैव वेला जलवृद्धिः तस्य। परिगतस्य व्याप्तस्य, स्वाध्याययोग एव कर्मदारणकृत् (कृत्त्वात्) मकरो यत्र तस्य, अक्षोभस्य, भगवतो महात्म्यवतः, संघसमुद्रस्य 'रुंदस्स' विस्तीर्णस्य भद्रं ॥ ११ ॥ 'सम्म'—

**सम्मदंसणवरवइरदढरूढगाढावगाढपेढस्स । धम्मवररयणमंडिअचामीयरमेहलागस्स ॥ १२ ॥**

गाथाः षट्र मेरुवर्णने—सम्यग्दर्शनमेव सारत्वाद्वरं वज्रं वज्ररत्नं तन्मयं दृढं निश्चलं निशङ्कितादितया रूढं अनादिसिद्धं, गाढं निविडं सम्यक्त्वरुच्यात्मकतयाऽवगाढं भूमग्नं भव्यजीवान्तर्गतत्वेन स्थित्वात् पीठं मूलं यस्य तं सम्यग्दर्शनवरवज्रदृढरूढगाढावगाढपीठं, सङ्घमहामन्दरगिरिं वन्दे इति सम्बन्धः द्वितीयार्थे षष्ठी । धर्म एव रत्नमंडिता चामीकरमेखला सुवर्णमयं कडणं यस्य तं धर्मवररत्नमंडितचामीकरमेखलाक । धर्मो द्विधा मूलगुणा उत्तरगुणाश्च, इह मूलगुणा मेखला उत्तरगुणास्तु वररत्नानि ॥ १२ ॥ 'निय'—

**नियमूसियकणयसिलायलुज्जलजलंतचित्तकूडस्स । नंदणवणमणहरसुरभिसीलगंधुद्धुमायस्स ॥ १३ ॥**

नियमा एव कनकशिलातलानि, तेषूत्सृतानि उच्चानि शुभाशयवृद्ध्या, उज्ज्वलान्यशुभाशयत्यागात्, ज्वलन्ति सूत्रार्थस्मृतया, दीप्तत्वात् चित्तान्येव (त्राण्येव) कूटानि यस्मिन् तं नियमकनकशिलातलोत्सृतोज्ज्वलज्वलचित्त(त्र)कूटं, प्राकृतत्वात् उत्सृतशब्दव्यत्ययः । मेरुपक्षे नन्दनवनस्य मनोहरेण सुरभिस्वभावेन गन्धेन उद्धुमायं संपूर्णं, सङ्घपक्षे तु नन्दयतीति नन्दनः सन्तोषः, 'वनषन संभक्तौ' वनन्ति सेवन्त इति नन्दनवनाः साधवः तेषां मनोहरेण सुरभिणा शीलगन्धेन यशोरूपेण उद्धुमायं पूर्णं ॥ १३ ॥ 'जीव'—

**जीवदयासुंदरकंदरुद्दरियमुणिवरमइंदइन्नस्स । हेउसयधाउपगलंतरयणदित्तोसहिगुहस्स ॥ १४ ॥**

'जीवदया' जीवदया एव सर्वाभीष्टत्वात् सुन्दराणि कन्दराणि लघुतरविवराणि तेषु उत् प्राबल्येन वादलब्ध्या कुमतजयं कृते दृप्ता दर्पिता मुनिवरा एव मृगेन्द्राः तैः आकीर्णं व्याप्तं जीवदयासुन्दरकन्दरोद्दृप्तमुनिवरमृगेन्द्राऽऽकीर्णं, हेतुशतान्येव धातवो निर्झराः, यथा धमन्ति सुवर्णं स्रवन्ति, रत्नानि ज्ञानादीनि, तथा दीप्ता औषध्यो लब्धयो यासु ईदृशा गुहाः महार्घ्याण्यनल्पानि यस्य तं हेतुशतधातुनिष्यन्दद्रत्नदीप्तौषधिगुहं, गुहास्तु प्रौढविवराणि ॥ १४ ॥ 'संवरं'—

संवरवरजलपगलिअउज्झरपविरायमाणहारस्स । सावगजणपउररवंतमोरनच्चंतकुहरस्स ॥ १५ ॥

संवरः प्रत्याश्रवनिरोधः स एव शीतलस्वादुत्वात् वरजलं तस्य प्रगलितो व्यूढ उज्झरः शमादिप्रवाहः तस्य प्रविराजमाना धारा प्रवाहरूपा यस्य तं संवरवरजलप्रगलितोज्झरप्रविराजमानधारं । श्रावकजना एव प्रचुरा स्तुत्यादिभणनाद् रवन्तः शब्दायमाना नृत्यन्तश्च मयूरा येषु ईदृंशि जिनचैत्यादिरूपाणि कुहराणि कूटान्तराणि यस्य तं श्रावकजनप्रचुररवन्मयूरनृत्यत्कुहरम् ॥ १५ ॥ 'विनय'—

विणयनयपवरमुणिवरफुरंतविज्जुज्जलंतसिहरस्स । विविहगुणकप्परुक्खगफलभरकुसुमाउलवणस्स ॥

विनयनयाभ्यां प्रवरा प्रधाना मुनिवराः ते एव स्फुरन्त्यो विद्युतः ताभिः ज्वलन्ति दीप्यमानानि मुनिरूपाणि शिखराणि यस्य तं विनयनयप्रवरमुनिवरस्फुरद्विद्युज्ज्वलच्छिखरं । विविधगुणा एव कल्पवृक्षकाः, स्वार्थे कप्रत्ययः, तेषां फलभरो स्वर्गापवर्गादिरूपः, कुसुमानि नानाविधातिशयाः तैः आकुलानि वनानि अप्रमत्तसाध्वादिसमूहरूपाणि

यत्र तम् ॥ १६ ॥ 'नाण'—

**नाणवररयणदिप्पंतकंतवेरुलियविमलचूलस्स । वंदामि विणयपणओ, संघमहामंदरगिरिस्स ॥१७॥**

ज्ञानवराणि मत्यादीनि तेषु रत्नं केवलज्ञानं तदेव दीप्यमानं सर्वार्थप्रकाशकत्वात्, कान्ता जगन्मनोहारित्वात् विमला तदावरणकर्मक्षयात् वैडूर्यचूला यस्य तं ज्ञानवररत्नदीप्यमानकान्तविमलवैडूर्यचूलम् । विनयेन प्रणतः सङ्घं महान्तं सर्वोत्तमं मन्दरगिरिं ॥ १७ ॥ 'गुण' 'नगररह'—

**गुणरयणुज्जलकडअं, सीलसुगंधितवमंडिउद्देसं । वंदामि विणयपणओ, संघमहामंदरगिरिस्स ।१८।**

**नगररहचक्कपउमे, चंडे सूरे समुद्दमेरुंमि । जो उवमिज्जइ सययं, तं संघगुणायरं वंदे ॥ १९ ॥**

गाथे वृत्तौ न, आद्या मेरोः सर्वविशेषणोक्त्यै, द्वितीया तु उपमासंग्रहाय, तत्र–गुणा एव रत्नमय उज्वल कटको मेखला यस्य, शीलेन परिमलेन सुगन्धं तपसा वनेन मण्डिता उद्देशाः पार्श्वदेशा यस्य द्वादशाङ्गश्रुतशिखरं, सङ्घमहामन्दरम् ॥ १८ ॥ यः सङ्घो नगरचक्ररथपद्मचन्द्रसूर्यसमुद्रमेरुभिः क्रमेण भव्यलोकनिवासात्, पापोच्छेदित्वात्, सन्मार्गयायित्वात्, लोकमध्यवर्त्तित्वेऽपि लोकधर्मासंश्लेषतः, सौम्यत्वात्, प्रकाशकत्वात्, गंभीरत्वात्, सदास्थिरत्वात् उपमीयते, अहं सततं तं संघं गुणाकरं वन्दे । रथचक्रइति व्यत्ययः प्राकृतत्वात् । मेरुंमि इति विभक्तिव्यत्ययश्च ॥ अथ

जिनगणभृत्स्थविरावलीभेदात् त्रिधाऽऽवलिका आह ॥ 'उसभं' 'विमल'—

उसभं अजियं संभवमभिनंदण, सुमइ सुप्पभ सुपासं ।
ससिपुप्फदंत सीयल, सिज्जंसं वासुपुज्जं च ॥ २० ॥

विमलमणंतय धम्मं, सन्ति कुंथुं अरं च मल्लिं च । मुनिसुव्वय नामि नेमिं, पासं तह वद्धमाणं च ॥

सुप्रभेति पद्मप्रभः, ससिपुप्फदन्तेति चन्द्रप्रभं सुविधिं 'अणंतय' इति अनन्तजित्शब्दो अनन्तजिनवाची ॥ २१ ॥

'पढमित्थ' 'मंडिअ'—

पढमित्थ इंदभूई, बीए पुण होइ अग्गिभूइत्ति । तइए य वाउभूई, तओ वियत्ते सुहम्मे य ॥२२॥
मंडिअमोरियपुत्ते, अकंपिए चेव अयलभाया य । मेअज्जे य पहासे, गणहरा हुंति वीरस्स ॥२३॥

व्यक्तः सुधर्मा मण्डितपुत्रो मौर्यपुत्रः ॥ २२–२३ ॥

सम्प्रति श्रीवीरशासनं विजयते अतः तदेव स्तौति ॥ 'निव्वुइ'—

निव्वुइपहसासणयं, जयइ सया सव्वभावदेसणयं ।
कुसमयमयनासणयं, जिणिंदवरवीरसासणयं ॥ २४ ॥

निर्वृतिपथो मोक्षमार्गः रत्नत्रयरूपः तस्य शासनकं स्वार्थे कः, सर्वभावानां देशनकं प्ररूपकं, कुसमयानां अन्यतीर्थिकानां मदस्य नाशकं, कलावपि प्रवर्तमानतीर्थत्वात्, जिनेन्द्रेषु वरस्य श्रीवीरस्य शासनं जयति, अन्यदपि शासनं निधानपत्रं यथावस्थितस्वर्णादिज्ञापनेन, निर्वृतेः समाधेः प्रभायाश्च शासनकं शिक्षकं, सर्वभावानां अभिज्ञानरूपाणां देशनकं, कुसमयो दुर्भिक्षं तन्मदस्य नाशनकं स्यात् ॥ २४ ॥ 'सुह'—

**सुहम्मं अग्गिवेसाणं, जंबूनामं च कासवं । पभवं कच्चायणं वंदे, वच्छं सिज्जंभवं तहा ॥ २५ ॥**

सुधर्माणं गणधरं अग्निवेश्यायनं अग्निवेश्यगोत्रं, जम्बूनामानं काश्यपगोत्रं । प्रभवं कात्यायनगोत्रं, शय्यंभवं वत्सगोत्रं ॥ २५ ॥ 'जस'—

**जसभद्दं तुंगियं वंदे, संभूयं चेव माढरं । भद्दबाहुं च पाइन्नं, थूलभद्दं च गोयमं ॥ २६ ॥**

यशोभद्रं तुंगिकगणं व्याघ्रापत्यगोत्रं, तस्य द्वौ शिष्यौ संभूतिविजयो माढरगोत्रः, भद्रबाहुः प्राचीनगोत्रः, तथा संभूतिशिष्यं स्थूलभद्रं गौतमगोत्रं ॥ २६ ॥ 'एला'—

**एलावच्चसगोत्तं, वंदामि महागिरिं सुहत्थिं च । तत्तो कोसिअगोत्तं, बहुलस्स सरिवयं वंदे ॥२७॥**

स्थूलभद्रस्य द्वौ शिष्यौ एलापत्येन पूर्वपुरुषेण समानं गोत्रं यस्य तं एलापत्यगोत्रं इत्यर्थः महागिरिं तथा वशिष्ठगोत्रं सुहस्तिनं च । तत्र सुहस्तिनं आरभ्य सुस्थितसुप्रतिबद्धादिक्रमेणावलिकाः श्रीकल्पात् ज्ञेयाः । महागिरिशिष्यौ बहुलबलि-

स्सहौ कौशिकगोत्रौ यमलबन्धू तयोर्मध्ये बलिस्सहो युगप्रधानोऽभूत् अत आह 'तत्तो' ततो महागिरेरनु बलस्य सदृशवयसं तुल्यवयसं यमलभ्रातृत्वात् बलिस्सहं वन्दे ॥ २७ ॥ 'हारि'—

**हारियगुत्तं साइं च, वंदिमो हारियं च सामज्जं । वंदे कोसियगोत्तं, संडिल्लं अज्जजीयधरं ॥ २८ ॥**

तच्छिष्यं हारीतगोत्रं स्वातिं तच्छिष्यं हारीतगोत्रं श्यामार्यं प्रज्ञापनादिग्रन्थकारं, तच्छिष्यं कौशिकगोत्रं शाण्डिल्यं किंभूतं आर्याणां पूर्वसाधूनां जीतं सूत्रं धरतीति तं, अन्ये त्वाहुः—शाण्डिल्यशिष्यं आर्यगोत्रं जीतधराख्यं सूरिं ॥२८॥ 'तिस'—

**तिसमुद्दखायकित्तिं, दीवसमुद्देसु गहियपेयालं । वंदे अज्जसमुद्दं, अक्खुभियसमुद्दगंभीरं ॥ २९ ॥**

पूर्वदक्षिणापरदिक्स्थाः त्रयः समुद्राः त्रिसमुद्रं उत्तरतो वैताढ्यः ततः त्रिसमुद्रं यावत् ख्याता कीर्तिर्यस्य, द्वीपसमुद्रेषु गृहीतं पेयालं प्रमाणं येन द्वीपसागरप्रज्ञतेः अधिकविज्ञायकत्वात्, अक्षुभितसमुद्रवत् गंभीरं ॥ २९ ॥ 'भण'—

**भणगं करगं झरगं, पभावगं णाणदंसणगुणाणं । वंदामि अज्जमंगुं, सुयसागरपारगं धीरं ॥ ३० ॥**

आर्यसमुद्रशिष्यं आर्यमङ्गुं, कालिकसूत्रार्थं भणति इति भाणकं, तदुक्तक्रियां करोति इति कारकं, आर्षत्वात् ह्रस्वः, तं ध्यायतीति ध्यायकं, ज्ञानं जीवादितत्त्वबोधः, दर्शनं सम्यक्त्वं, गुणा मूलगुणादयः तेषां प्रभावकं, प्रकर्षेण संपादकं अहं आर्यमंगुं वन्दे किम्भूतम्? श्रुतसागरपारकं, पुनः किम्भूतम्? धीरम् ॥ ३० ॥ 'वन्दामि'—

वंदामि अज्जधम्मं तत्तो वन्दे य भद्दं गुत्तं च ।
तत्तो य अज्जवैरं तवनियमगुणेहिं वइरसमं ॥ ३१ ॥

आर्यधर्मं वाचकं, ततो भद्रगुप्तं, ततः श्रीवज्रं तपोनियमगुणैः वज्रतुल्यं अभेद्यत्वात् ॥ ३१ ॥ 'वन्दामि'—

वन्दामि अज्जरक्खियं खमणे रक्खिय चारित्ते सव्वस्से ।
रयणकरडंगभूओ अणुओगो रक्खिओ जेहिं ॥ ३२ ॥

क्षपकान् कर्मक्षयकरान् रक्षितचारित्रसर्वस्वान् विचाररत्नानां करण्डकभूतोऽनुयोगः पृथक्करणेन साधूनां विस्मृतिं गच्छन् रक्षितः, एतद् गाथाद्वयं पदानुक्रमाभावेऽपि तत्समययुगप्रधानागमसूरीणां ज्ञापकं, क्षेपकत्वाद् वृत्तौ न उक्तं । अत्र केऽपि मंगोरार्यधर्मेति नामान्तरं आहुः ॥ श्रीमहागिरेः श्रीवज्रं यावद्दशपूर्विणः, आर्यरक्षितः तत् शिष्यः दुर्बलिकापुष्पश्च नवपूर्विणौ ॥ ३२ ॥ 'नाणं'—

नाणंमि दंसणंमि अ, तवविणए णिच्चकालमुज्जुत्तं । अज्जं नंदिलक्खमणं, सिरसा वंदे पसन्नमणं ॥३३॥

ज्ञाने दर्शने तपोविनये नित्यकालं उद्युक्तं आर्यमङ्गुशिष्यं आर्यं नंदिलक्षपणं तपस्विनं ॥ ३३ ॥ 'वड्ढउ'—

१ एते द्वे गाथे नन्दौ न स्तः

वागरणकरणभंगिय--कम्मपयडीपहाणाणं ॥ ३४ ॥

**वड्ढउ वायगवंसो, जसवंसो अज्जनागहत्थीणं ।**

पूर्वगतसूत्रं अन्यच्च वाचयन्ति इति वाचकाः तेषां नागहस्तिनां नन्दिशिष्याणां वंशो वर्द्धतां किं भूतः यशसो वंश इव यशोवंशः, अनुक्रमेण वाचकानां यशस्वित्वात्, व्याकरणं प्रसिद्धम् करणं पिण्डविशोध्यादिसप्ततिभेदं, 'भंगिय'त्ति भङ्गैः निर्वृत्तं भाङ्गिकं भङ्गबहुलं श्रुतं, कर्मप्रकृतिः नामा ग्रन्थः तैः प्रधानानां ॥ ३४ ॥ 'जच्चं'—

**जच्चंजणधाउसमप्पहाण, मुद्दियकुवलयनिहाणं । वड्ढउ वायगवंसो, रेवइनक्खत्तनामाणं ॥ ३५ ॥**

जात्यांजनधातुः जात्यं अञ्जनाख्यं रत्नं तत्समप्रभाणां, मा भूद् अत्यंतकालिम्नि प्रत्यय इत्याह-मृद्विकाकुवलयनिभानां, पक्वद्राक्षया नीलोत्पलेन च तुल्यानां, रेवतिनक्षत्रनाम्नां वाचकवंशो वर्द्धतां ॥ ३५ ॥ तत् शिष्यान् 'अय'—

**अयलपुरा णिक्खंते, कालियसुयआणुओगिए धीरे । बंभद्दीवगसीहे, वायगपयमुत्तमं पत्ते ॥ ३६ ॥**

ब्रह्मद्वीपशाखोपलक्षितान्सिंहनामकान् अचलपुरे निःक्रान्तान् दीक्षितान् कालग्रहणेन पच्यते यत्तत्कालिकश्रुतं तस्याऽनुयोगे नियुक्ताः कालिकश्रुतानुयोगिकाः तान् उत्तमं वाचकपदं प्राप्तान् वन्दे ॥ ३६ ॥ तत् शिष्यान् 'जेसि'—

**जेसि इमो अणुओगो, पयरइ अज्जावि अड्ढभरहम्मि ।**
**बहुनयरनिग्गयजसे, ते वंदे खंदिलायरिए ॥ ३७ ॥**

येषां अयं अनुयोगः प्रचरति प्रवर्तते, बहुनगरेषु निर्गतं प्रसृतं यशो येषां तान्वन्दे । यतो द्वादशवर्षदुर्भिक्षे 'भत्तट्ठफिडियमुणीणं सुयं पणट्ठं, सुभिक्खे जाए समुदाए मिलए खंदिलायरियपमुहसंघेण जो संभरइ त्ति संघटितं कालियसुयं, जम्हा एयं महुराए कयंति माहुरी वायणा भन्नइ, एगे भणंति सुयं न नट्ठं अणुओगधरा विनट्ठा एगो खंदिलायरिओ धरेइ'। भक्तार्थं स्थानेभ्यो गुरुभ्यश्च भ्रष्टानां मुनीनां श्रुतं प्रणष्टं ॥ ३७ ॥ 'तत्तो'—

**तत्तो हिमवन्तमहंतविक्कमे धिइपरक्कममणंते । सज्झायमणंतधरे, हिमवंते वंदिमो सिरसा ॥ ३८ ॥**

तत् शिष्यान् हिमवत इव महान् विक्रमो विहारः प्रभूतक्षेत्रव्याप्तिरूपो येषां तान् हिमवन्महाविक्रमान्, 'धिइपरक्कममणंते'त्ति अनंतधृतिपराक्रमान् मकारोऽलाक्षणिकः, पराक्रमः कर्मारीणां जयार्थं, अनंतस्वाध्यायधरान्, अनन्तत्वं अर्थतो ज्ञेयं, जीवान्त्यादिज्ञानात्, हिमवतः सूरीन् वन्दामहे ॥ ३८ ॥ पुनर्हिमवत्स्तुतिमाह—'कालि'—

**कालियसुय अणुओगस्स, धारए धारए य पुव्वाणं । हिमवंतखमासमणे, वंदे णागज्जुणायरिए ।३९।**

कालिकश्रुतानुयोगस्य धारकान् हिमवतो वन्दे, तत् शिष्यान् नागार्ऽजुनान् वन्दे ॥ ३९ ॥ 'मिउ'—

**मिउमद्दवसंपन्ने, अणुपुव्वी वायगत्तणं पत्ते । ओहसुयसमायारे, नागज्जुणवायए वंदे ॥ ४० ॥**

मृदून् मधुरवाग्भिर्मार्दवोपलक्षितत्वात्, क्षान्त्यादिभिरपि संपन्नान् आनुपूर्व्या वयःपर्याययोः परिपाट्या वाचकत्वं प्राप्तान्, ओघश्रुतं उत्सर्गमार्गयुतं तत्समाचरंति इति ओघश्रुतसमाचरकान् ॥ ४० ॥ 'गोविं' 'तत्तो'—

गोविंदाणं पि नमो अणुओगो विउलधारिणिं दाणं ।
निच्चं खंतिजुयाणं परूवणे दुल्लभिंदाणं ॥ ४१ ॥
तत्तो य भूयदिन्नं निच्चं तव संजमे अनिव्विणं ।
पंडियजणसम्माणं वंदामि संजमविहिण्णु ॥ ४२ ॥

एतद् गाथाद्वयं वृत्तौ नास्ति । गोविन्दाचार्येभ्योऽपि नमोऽस्तु अनुयोगेऽर्थकथने विपुला धारणा स्मृतिः येषां ते विपुलधारणाः तेषु, इन्द्रेभ्यः नित्यं क्षान्तिप्रधानादया येषु तेभ्यः, सम्यगर्थप्ररूपणे इन्द्राणामपि दुर्लभेभ्यः, ततो भूतदिन्नं वन्दे तपःप्रधाने संयमेऽनिर्विण्णं खेदरहितं पण्डितजनसन्मान्यं संयमविधिज्ञं । गोविन्दाचार्यो युगप्रधानोऽपि शिष्यक्रमाभावात् वृत्तौ न उक्तः ॥ ४१–४२ ॥ 'वर'—

वरकणगतवियचंपग, विमउलवरकमलगब्भसरिवन्ने ।
भविअजणहियियदइए, दयागुणविसारए धीरे ॥ ४३ ॥

वरं तप्तकनकं चंपकं चम्पकपुष्पं, विमुकुलं फुल्लं वरं कमलं हेमकमलं तद्गर्भः कर्णिका तैः सदृशवर्णान् पीतवर्णान् भविकजनानां हृदयेषु दयितानभीष्टान् दयागुणे विशारदान् ॥ ४३ ॥ 'अड्ढ'—

अड्ढभरहप्पहाणे, बहुविहसज्झायसुमुणियपहाणे । अणुओगियवरवसभे, नाइलकुलवंसनंदिकरे ॥

अर्धभरते प्रभाणं इति प्रभा येषां तान् अर्धभरतप्रभाणान्, 'सुमुणिय'त्ति प्राकृतत्वात् व्यत्ययः सुष्ठु मुणितेन विज्ञातेन बहुविधस्वाध्यायेन प्रधानान् अनुयोजिता वैयावृत्ये वरवृषभाः सुसाधवो यैः यद्वाऽनुयोगिकेष्वनुयोगधरेषु वरवृषमान् धौरेयतुल्यान्, नागेन्द्रकुलस्थितमुनिवंशस्य नन्दिकरान् वृद्धिकरान् ॥ ४४ ॥ 'जग'—

जगभूयहिअपगब्भे, वंदेऽहं भूयदिन्नमायरिए । भवभयवुच्छेयकरे, सीसे नागज्जुणरिसीणं ॥४५॥

जगद्भूतहितप्रगल्भान् भूतदिन्नाचार्यान् भवभयव्यच्छेदकरान् नागार्जुनऋषीणां शिष्यान् वन्दे ॥ ४५ ॥ 'सुमु'—

सुमुणियनिच्चानिच्चं, सुमुणियसुत्तत्थधारयं वंदे । सब्भावुब्भावणया तत्थं लोहिच्चणामाणं ॥४६॥

सुज्ञातं नित्यानित्यमिति स्याद्वादमयं वस्तु येन, सुज्ञातसूत्रार्थधारकान्, प्राकृतत्वाद् वचनव्यत्ययः, लोहित्यं वन्दे सतां विद्यमानानां भावानां उद्भावनायां प्रकाशनायां तथ्यं सत्यं ॥ ४६ ॥ 'अत्थ'—

अत्थमहत्थक्खाणिं, सुसमणवक्खाणकहणनिव्वाणिं ।
पयईइ महुरवाणिं, पयओ पणमामि दूसगणिं ॥ ४७ ॥

अर्थाः संक्षेपतः महार्थास्तु सविस्तराः तेषां खानिं, सुश्रमणानां सुशास्त्रार्थव्याख्याने पृष्टाऽर्थ कथने च 'निवाणि' त्ति

निर्वृत्तिः समाधिः यस्य तं सुश्रमणव्याख्यानकथननिर्वृतिं, प्रकृत्या, मधुरवाणिं, प्रयत आदरपरो दूष्यगणिं दूष्यवाचकं यः संपूर्ण आगमं पठितवान् स गणिः उच्यते ॥ ४७ ॥ 'तव'—

तवनियमसच्चसंजम, विणयज्जवखंतिमद्दवरयाणं ।
सीलं गुणगद्दिआणं, अणुओगजुगप्पहाणाणं ॥ ४८ ॥

गाथा वृत्तौ न, तपोनियमादिषु रतानां शीलगुणैः अष्टादशसहस्रशीलांगैः गर्दितानां ख्यातानाम् अनुयोगविषये युगं कालमाश्रित्य सर्वजनेषु प्रधानानाम् ॥ ४८ ॥ 'सुकु'—

सुकुमालकोमलतले, तेसिं पणमामि लक्खणपसत्थे ।
पाए पावयणीणं, पडिच्छयसएहिं पणिवइए ॥ ४९ ॥

तेषां दूष्यगणीनां प्रावचनिकानां प्रवचनस्य सिद्धान्तस्याऽर्थकथने नियुक्तानां पादान्, सुकुमारं मृदु कोमलं ललितं तलं येषां तान्, तथा लक्षणैः प्रशस्तान् प्रणमामि । इह ये अन्यगच्छीयाः स्वाऽऽचार्यं पृष्ट्वा गच्छान्तरे अनुयोगाय यान्ति अनुयोगाचार्येण च प्रतीच्छयन्ते ते प्रातीच्छिकाः, आचार्यप्रतीच्छया चरन्तीति व्युत्पत्तेः, तेषां शतैः प्रणिपतितान् ॥ ४९ ॥ 'जे अ'—

जे अन्ने भगवंते, कालिअसुयआणुओगिए धीरे ।
ते पणामिऊण सिरसा, नाणस्स परूवणं वोच्छं ॥ ५० ॥

ये अन्येऽतीता भाविनश्च भगवंतः श्रुतरत्नैश्वर्यभाजः कालिकश्रुताऽनुयोगिनो धीराः तान् शिरसा प्रणम्य ज्ञानस्य मत्यादि-पञ्चभेदस्य प्ररूपणां प्ररूपणाकारि नन्दिनामकाध्ययनं अहं दूष्यगणिशिष्यो देववाचको वक्ष्ये ॥५०॥ इति स्थविरावलिविवरणं ॥

इह हि श्रीभद्रबाहुः श्रीआवश्यकनिर्युक्तिं विरचयन्नादौ मङ्गलार्थं नोआगमतो भावनन्दिमाह–यतो विशेषावश्यके–'तं मंगलमाईए मज्झे पज्जंतए य सत्थस्स। पढमं सत्थत्थाऽविग्घपारगमणाय निद्दिट्ठं ॥१॥ प्रथमं मङ्गलं शास्त्रार्थाविघ्नपारगमनाय 'तस्से व य थिज्जत्थं मज्झिमयं अन्तिमंपि तस्सेव। अव्वोच्छित्ति निमित्तं सिस्सपसिस्साइ वंसस्स' ॥ २ ॥ तस्यैव स्थैयार्थं मयध्मं मङ्गलं। अंत्यं तस्यैव शास्त्रस्य शिष्यप्रशिष्यादिवंशस्य सम्बन्धेऽव्युच्छित्तिनिमित्तं स्यात्। तत्थ आइमंगलं सामाइय-ज्झयणं मझमंगलं वंदणज्झयणं, अंतमंगलं पच्चक्खाणज्झयणं। भावनंदिस्तु ज्ञानपञ्चकं, तच्चेदं ॥ १ ॥ 'आभि'—

**आभिणिबोहियनाणं, सुयनाणं चेव ओहिनाणं च। तह मणपज्जवनाणं, केवलनाणं च पञ्चमयं ।५१।**

अर्थाऽभिमुखो नियतो मतिरूपो बोधोऽभिनिबोधः अभिनिबोध एव आभिनिबोधिकं, आभिनिबोधिकं च तद्ज्ञानं च आभिनिबोधिकं ज्ञानं मतिज्ञानं। श्रूयते इति श्रुतं–शब्दस्तेन तस्मिन् वा ज्ञानं श्रुतज्ञानं। यतः चूर्णौ–'जमत्थं ऊहिऊण नो निद्दिसइ, तं अभिणिबोहियनाणं, जं पुण अत्थं ऊहिऊण निद्दिसइ तं सुयनाणं' ॥ अवियुक्तं तु एतत् ज्ञानद्वयं स्यात्, 'जत्थ-

इति वचनात् । चशब्दोऽनयोः स्वाम्यादिसाम्योद्योती, कथं ? यथा
मइनाणं तत्थ सुयनाणं, जत्थ सुयनाणं तत्थ मइनाणं' इति वचनात् । चशब्दोऽनयोः स्वाम्यादिसाम्योद्योती, कथं ? यथा मतिः सर्वद्रव्यविषया
सम्यग्दृष्टिः मतेः स्वामी तथा स एव श्रुतस्यापि, यावान् मतेः स्थितिकालः तावान् श्रुतस्याऽपि, यथा मतिः सर्वद्रव्यविषया आत्मनो बाह्येन्द्रियैरर्थग्रह-
तथा श्रुतमपि,इन्द्रियसमुत्थे च द्वे अपि एवकारादेते व्यवहारात् प्रत्यक्षे अपि निश्चयात् परोक्षे, आत्मनो बाह्येन्द्रियैरर्थग्रह-
तथा श्रुतमपि,इन्द्रियसमुत्थे च द्वे अपि एवकारादेते व्यवहारात् प्रत्यक्षे अपि निश्चयात् परोक्षे, च शब्दो मतिश्रुताभ्यां सह स्वामि-
णात् । प्रत्यक्षाण्येवाऽन्यानि । अवधिर्मर्यादा सावधानता वा तया ज्ञानं अवधिज्ञानं, च शब्दो मतिश्रुताभ्यां सह स्वामि-
कालविपर्ययलाभसाम्यार्थः, कथं ? य एव मतिश्रुतयोः स्वामीः स एव अवधेरपि, यावान् मतिश्रुतयोः कालस्तावानवधेरपि,
यथा मिथ्यादृशां मतिश्रुते अज्ञाने तथा इदं विभंगज्ञानं स्याद् इति विपर्ययसाम्यं, विभङ्गज्ञानिनः सम्यक्त्वाप्तौ त्रयाणामपि
युगपद् ज्ञानत्वस्य भावात् लाभसाम्यं, मनसः पर्यवाः पर्याया आकृतिविशेषाः तेषां ज्ञानं मनःपर्यवज्ञानं, तथाशब्दोऽव-
धिना छद्मस्थस्वामित्वरूपिद्रव्यग्राहित्वसाम्यार्थः, केवलं अन्यज्ञानानपेक्षं सम्पूर्णं च ज्ञानं केवलज्ञानं, चः पूर्वेणाऽप्रमत्त-
भावयतिस्वामित्वाऽविपर्ययत्वसाम्यार्थः। अयं च ज्ञानानां क्रमः प्राय इत्थमेव लाभात्, आद्यं स्वावभासि, द्वितीयं स्वपराव-
भासि, तृतीयं प्रत्यक्षं, तुर्यंय तीनामेव, पञ्चमं क्षायिकं (शेषाणि) क्षयोपशमजन्यानि इति यथोत्तरं प्राधान्याच्च। मतिश्रुतयोरऽयं
विशेषः, सर्वेन्द्रियोपलब्धार्थग्राहिणी मतिः, श्रोत्रेन्द्रियोपलब्धार्थग्राहकं तु श्रुतं, यद्वा उत्पन्नाविनष्टार्थग्राहिणी वर्तमानकाल-
विषया मतिः, क्वचित् त्रिकालग्राहिणीत्यपि, श्रुतं तु त्रिकालविषयमुत्पन्नविनष्टाऽनुत्पन्नाऽर्थग्राहि । तत्र मतिज्ञानं द्विधा श्रुत-
निश्रितं अश्रुतनिश्रितं च । अश्रुतनिश्रितं वैनयिकीवर्ज्यौत्पात्तिक्यादिधियः ॥ १ ॥ श्रुतनिश्रितं तु यत्पूर्वं श्रुतोद्भवं विषयग्रहण-
काले तु तदनपेक्षं अवग्रहादि ॥ १ ॥ ' उग्ग '—

**उग्गह ईहाऽवाओ य, धारणा एव हुंति चत्तारि । आभिणिबोहिअनाणस्स, भेयवत्थू समासेणं ।२।**

अव्यक्तं रूपादेः ग्रहणं अवग्रहः ॥ १ ॥ अवगृहीताऽर्थविशेषालोचनमीहा ॥ २ ॥ ईहितार्थनिश्चयोऽवायः ॥ ३ ॥ अवगतार्थस्य हृदि संलग्नं असंलग्नं वा धरणं धारणा ॥ ४ ॥ चशब्दोऽवग्रहादीनां पृथक् पृथक् स्वरूपज्ञापकः, एवमिति क्रमेण आभिनिबोधिकज्ञानस्य भेदवस्तूनि भेदपदानि चत्वारि समासेन संक्षेपेण स्युः ॥ २ ॥ इह विशेषोपयोगो ज्ञानं, सामान्योपयोगो दर्शनम्, तत्र ज्ञानात् दर्शनस्य अल्पावरणत्वात् आदौ छद्मस्थानां दर्शनं स्याद्, अत आह ॥ २ ॥ 'अत्था'—

**अत्थाणं ओगहणम्मि, उग्गहो तह वियारणे ईहा ।**
**ववसायम्मि अवाओ, धरणं पुण धारणं बिंति ॥ ३ ॥**

अर्थानां शब्दादीनां अवग्रहणे निर्विकल्पादाने अवग्रहः। स द्विधा व्यञ्जनाऽवग्रहोऽर्थावग्रहश्च। तत्र व्यंजनानां शब्दादिद्रव्याणां उपकरणेन्द्रियप्राप्तानां अवग्रहोऽव्यक्तं ग्रहणं व्यञ्जनावग्रहः। अयं दृङ्मनोवर्जेन्द्रियाणां स्यात्, दृङ्मनसोस्तु स्वस्वविषयद्रव्यैः सहामिलनात् न, व्यञ्जनावग्रहन्त्यसमये चक्षुर्मनसी त्वाश्रित्याद्यसमये चोपात्तशब्दाद्यर्थानां अवग्रहोऽर्थावग्रहः। कोऽर्थः—सुप्ताद्यवस्थायां शब्दादिद्रव्याणां श्रोत्रादीन्द्रियैः सहयोगे यावन्न चेतयते तावद् व्यञ्जनाऽवग्रहः, स चान्तरमुहूर्त्तं, चेतनासमये तु अर्थाऽवग्रहः, स तु आद्यसमये नैश्चयिकः, शेषकालं हुंकारादिकुर्वन् ईहाया अर्वाग् व्यावहारिकोऽतर्मुहूर्त्तं छद्मस्थोपयोगस्यान्तर्मुहूर्तमात्रत्वात् ॥ तत्र मनसः स्वप्नेऽक्षव्यापारं विना च ध्यायतोऽर्थावग्रहः स्यात्, तथाऽर्थावग्रहगृहीतानां

शब्दादीनां अर्थानां मधुरतादयः शङ्खधर्मा अत्र घटन्ते न तु खरतादयः शार्ङ्गधर्मा, इत्यादौ सद्भूतार्थविशेषाद् ग्राहकेऽसद्भूतार्थविशेषत्यागाभिमुखे इन्द्रियैः मनसा च संजाते विचारणे ईहा । अत्र ईहावग्रहभेदाः सामान्यग्राहित्वात् दर्शनं, ते तु चक्षुदर्शनऽचक्षुदर्शनयोरन्तर्भवनति । शेषभेदाः तु विशेषग्राहित्वाद् ज्ञानं । इह तु बोधरूपत्वात् ज्ञानशब्देन एव द्वयमप्यात्तं ज्ञेयं । तथा शांख एवायं शब्द इत्यादौ व्यवसाये निश्चयेऽवायोऽवगमः । अर्थानां शब्दादीनां धरणं धारणं ब्रुवते अर्हदाद्याः । सा चाविच्युतिस्मृतिवासनाभेदात् त्रिधा । तत्र शब्दादीनां अवाये सति संलग्नः तदुपयोगोऽविच्युतिः । कालान्तरे पुनः तस्य स्मरणं स्मृतिः, तयोरन्तरे स्मृतिहेतुः संस्कारो वासना । पुनः शब्दो निश्चये । इह दृङ्मनोवर्जेन्द्रियाणां भावाच्चतुर्धा व्यञ्जनाऽवग्रहः । सर्वेन्द्रियमनोजातत्वात् पोढाऽर्थावग्रहः । एवं ईहाऽवायधारणा अपि प्रत्येकं पोढा सर्वाक्षमनोभिर्भावित्वात्, ततः सर्वे एते भेदाः २८ अष्टाविंशतिः । इह व्यञ्जनावग्रहो ज्ञानहेतुत्वाद् अव्यक्तबोधात् च ज्ञानत्वेनोक्तः । अमी च बहु १ बहुविध २ क्षिप्र ३ निश्रित ४ निश्चित ५ ध्रुव ६ अबहु ७ अबहुविध ८ अक्षिप्र ९ अनिश्रित १० अनिश्चित ११ अध्रुवाख्यैः १२ द्वादशभेदैः गुणिताः त्रीणि शतानि षट्त्रिंशदधिकानि स्युः । तत्र बहुवाद्यनादे इयन्तो भेरीशब्दा इयन्तोऽन्येषां इत्यवाये बहुनामवायास्तस्येहावग्रहयोरपि बहुसंज्ञा ज्ञेया, स्निग्धत्वमाधुर्याद्यवग्रहणे बहुविधं, शिघ्रावग्रहणे क्षिप्रः, ध्वजादिलिङ्गनिश्रया चैत्येऽमी शब्दा इत्यादिज्ञानं निश्रितः, असंशये निश्चितः, सदैव तथाऽवगमे ध्रुव इति भेदैः स विपक्षैरबह्वादिभिर्विभिन्ना द्वादश, एवं भेदानन्त्यमपि क्षयोपशमवैचित्र्यात् ॥ ३ ॥ 'उग्ग'—

**उग्गह इक्कं समयं, ईहावाया मुहुत्तमंतं(मद्धं) तु । कालमसंखं संखं च, धारणा होइ नायव्वा ।४।**

अवग्रहो नैश्चयिकोऽर्थावग्रह एकं समयं स्यात्, ईहावायौ मुहूर्त्तार्धं स्यातां, इह मुहूर्तशब्देन घटिकाद्वयमानः काल उच्यते, तस्याऽर्धं तुशब्दो विशेषणार्थः तेन मुहूर्तार्धशब्देन तत्त्वतोऽन्तर्मुहूर्तं ज्ञेयं, अन्ये तु 'मुहुत्तमंतं' तु पठन्ति, तत्र मुहूर्तान्तरित्यन्तर्मुहूर्तमेवेत्यर्थः । 'काले'त्यादि कोऽर्थः त्रिविधाया धारणाया मध्येऽविच्युतिस्मृती अन्तर्मुहूर्तं वासना त्वसंख्यातवर्षायुषां असंख्येयं संख्येयवर्षायुषां संख्येयं कालं स्यात्, यद्यप्यभ्यासादिवशाद् रूपादीनां त्वरितं ग्रहणं जायते तथाप्यवग्रहाद्याः क्रमेण सर्वदाऽपि स्युः, परं कालस्य सूक्ष्मत्वात् ते भवन्तो न ज्ञायन्ते । एवं विशिष्टविशिष्टतरज्ञानेऽवग्रहेहावायधारणा परंपरा बह्व्यः स्युः ॥ ४ ॥ इन्द्रियविषयग्रहणयुक्तिमाह ॥ ४ ॥ 'पुट्ठं'—

**पुट्ठं सुणेइ सद्दं, रूवं पुण पासई अपुट्ठं तु । गंधं रसं च फासं च, बद्धपुट्ठं वियागरे ॥ ५ ॥**

जीवः स्पृष्टं तनौ रेणुवत् श्रोत्रे लग्नमात्रं शब्दं शब्दद्रव्यौघं, श्रोत्रस्य घ्राणादिभ्यः पटुत्वात्, शब्दस्य च गन्धादिभ्यः सूक्ष्मत्वभावुकत्वबहुद्रव्यत्वात्, उत्कृष्टत आत्माङ्गुलनिष्पन्नेभ्यो द्वादशयोजनेभ्य आगतं शृणोति, रूपं पुनरस्पृष्टं साधिकं योजनलक्षं यावदभासुरं, भासुरं तु परतोऽपि पश्यति तद्योग्यस्थानस्थमेव, तुरेवार्थः । गन्धं रसं स्पर्शं च बद्धस्पृष्टं व्याकुर्यात्, स्पष्टं च तदात्मप्रदेशः सह बद्धं च बद्धस्पष्टं, नूतनशरावेण सहाम्भोवत् । तत्र गन्धं रसं स्पर्शं उत्कृष्टतो नवयोजनागतं जीवो वेत्ति, गन्धादीनां पुद्गलानां बादरत्वाभावुकत्वाल्पत्वात्, घ्राणादीनां चापटुत्वात्, जघन्यतः तु सर्वेन्द्रियाण्यङ्गुलासंख्येयभागादागतं विषयं जानन्ति । चक्षुस्त्वङ्गुलसंख्येयभागस्थं पश्यति, मनसस्तु न विषयप्रमाणं, पुद्गलानां अमूर्तानां धर्माधर्माकाशकालात्मद्रव्याणां च ग्राहित्वात् केवलज्ञानवत् ॥ ५ ॥ इह मतिभेदाधिकारे रूपरसगन्धादिग्रहणात्, शब्दस्य

ग्रहणयुक्तेः विषमत्वात् शब्दपुद्गलानां च व्यापकत्वात् पञ्चाथाभिः भाषाग्रहणादिविचारमाह ॥ ५ ॥ 'भासा'—

**भासासमसेढीओ सद्दं, जं सुणइ मीसयं सुणई । वीसेढी पुण सद्दं, सुणेइ नियमा पराघाए ॥६॥**

इह वक्त्रा उच्यमानानि शब्दद्रव्याणि भाषा उच्यते, तानि च सर्वलोके सन्ति, तथा श्रेणयो नभःप्रदेशपंक्तयः ताश्च सर्वस्यैव भाषमाणस्य षट्सु दिक्षु सन्ति, यास्तच्छ्रुष्टा भाषाऽऽद्यसमयादारभ्य लोकान्तं अनुधावति, भाषायाः समश्रेणयो भाषासमश्रेणयः ता इतो गतो भाषासमश्रेणीतः, षट्सु दिक्षु समपंक्तिगतोऽयं शब्दं शृणोति, तं भाषकोत्सृष्टं तद्भावितान्तरालस्थशब्दद्रव्यमिश्रितं शृणोति, विश्रेणिं विदिशं इतः पुनः नियमात् पराघाते सति शृणोति, उत्सृष्टभाषाद्रव्याभिघातवासितान्यशब्दद्रव्यौघमित्यर्थः, न तूत्सृष्टं मिश्रं वा, तयोरनुश्रेणिगतेः प्रतिघाताभावाच्च, द्विः शब्दोक्तिः वासितशब्दस्यापि तथाविधशब्दपरिणामज्ञप्तेः । इह भाषकः शब्दपुद्गलान् स्वात्मप्रदेशव्याप्ताकाशदेशस्थानेवाऽऽदत्ते न त्वन्यदेशस्थान् ॥६॥ 'गिण्ह'—

**गिण्हइ य काइएणं, निसिरइ तह वाइएण जोएणं । एगंतरं च गिण्हइ, निसिरइ एगंतरं चेव ॥**

अत्र एक एव कायव्यापारो व्यवहारात् त्रिधा उच्यते, येन तु द्रव्याण्यादत्ते स कायिकः, येन तु वाग्द्रव्याणि मुंचति स वाचिकः, येन मनोद्रव्याणि मनस्त्वेन परिणमयति स मानसः, तत्र कायिकेन योगेन वाग्द्रव्याणि गृह्णाति, च एवार्थे तथा वाचिकेन तु निसृजति मुञ्चति, एकान्तरं च गृह्णाति, एकान्तरं चैव निसृजति यथा ग्रामादन्यो ग्रामो ग्रामान्तरं । तथा एकस्मात् समयात् एक एव अनन्तरोपि समय एकान्तरः, कोऽर्थः आद्यसमये आदत्ते द्वितीये पूर्वाऽऽत्तानि मुञ्चति, युञ्जगपदन्यान्यादत्त अत्रैकसमये निसर्गादानक्रियाद्वयं न दोषाय, यतः एकसमये उपयोगद्वयं न स्यात्, परं क्रियाबह्वयोऽपि स्युः, एवं

तृतीयादिष्वपि, अन्त्ये तु मुञ्चत्येव नाऽऽदत्ते, स्थापना

| | | | |
|---|---|---|---|
| ग्र | नि | नि | नि |
| ० | ग्र | ग्र | ० |

॥ ७ ॥ 'तिवि'—

तिविहम्मि सरीरंमि, जीवपएसा हवंति जीवस्स ।
जेहि उ गिण्हइ गहणं, तो भासइ भासओ भासं ॥ ८ ॥

औदारिकवैक्रियाहारकरूपे त्रिविधे शरीरे जीवस्य जीवप्रदेशा भवन्ति, जीवस्य प्रदेशा इत्येवोच्यमाने भिक्षोः पात्रं इत्यादिवत् जीवात् प्रदेशानां भिन्नताऽपि स्यात् तद् (तस्माद्) उक्तं जीवप्रदेशा जीवस्य आत्मभूता इत्यर्थः, यैः ग्रहणं वाग्द्रव्यौघं गृह्णाति तुशब्दात् न सदैव, किन्तु वक्तव्योपक्रमे सति, ततो गृहीत्वा भाषको भाषां भाषते ॥ ८ ॥ 'ओरा'—

ओरालिय वेउव्विय आहारो, गेण्हई मुयइ भासं । सच्चं सच्चामोसं, मोसं च असच्चमोसं च ॥९॥

औदारिकः, वैक्रियः, आहारकः तद्देहत्रयवान् इत्यर्थः । गृह्णाति मुञ्चति च भाषां, तत्र नृतिर्यंच औदारिकदेहिनः, देवनारका वैक्रियदेहाः, आहारकदेहश्चतुर्दशपूर्विकृतः स्यात्, किंविधां भाषां ? 'सच्च' मित्यादि, सत्यां, सत्यामृषां, मृषां, असत्यामृषां च । इह भाषाभेदान् स्पष्टान् वच्मि । सविद्यमानेभ्यो जीवादितत्वेभ्यो हिता भाषा सत्या, यथास्थितवस्तुस्वरूपाभिधायिनीत्यर्थः, सा दशधा जनपदसत्यं यथा कोंकणादिषु पयः पिच्चमित्यादि ॥ १ ॥ संमतसत्यं कविरूढिः अकिरियराहुमुहदुद्धरिसेत्याद्या, कुमुदादीनामपि पङ्कोत्थत्वे पद्ममेव पङ्कजमित्याद्या च ॥ २ ॥ स्थापनासत्यं लेप्यादिष्वयं जिन इति,

॥ ३ ॥ नामसत्यं निर्धनोऽपि श्रीपतिः ॥ ४ ॥ रूपसत्यं अक्रियोऽपि वेष-वर्णाङ्काद्याकारेष्वयममुको वर्णोऽङ्को वा इति च ॥ ३ ॥ नामसत्यं निर्धनोऽपि श्रीपतिः ॥ ४ ॥ रूपसत्यं अक्रियोऽपि वेष-

भृत्त्वाद् यतिः ॥ ५ ॥ प्रतीत्यसत्यं यथा तृणं दीर्घं वंशाद्यपेक्षया तु ह्रस्वं ॥ ६ ॥ व्यवहारसत्यं क्रियमाणं कृतं इत्यादि, दह्यते गिरिः, गलति कुंडीत्यादि च ॥ ७ ॥ भावसत्यं बहुशुक्लत्वादिभावं आश्रित्य यथा पंचवर्णत्वेऽपि (हंसः श्वेतः) कृष्णः काक इत्यादि ॥ ८ ॥ योगसत्यं दंडयोगात् दंडी समेतीत्यादि ॥ ९ ॥ औपम्यसत्यं समुद्रवत् सरः ॥ १० ॥ सत्यविपरीत-स्वरूपा मृषा सापि दशधा क्रोधात्सत्यमसत्यं च वदतः क्रोधासत्या ॥ १ ॥ एवं मानमायालोभेभ्योऽपि सत्यमसत्यं वा वदतो मानासत्याद्याः ॥ ४ ॥ प्रेमतो दासोऽहं ते ॥ ५ ॥ द्वेषात् जिनादेः अवर्णं वदतः ॥ ६ ॥ हास्यात् त्वं चौरः ॥ ७ ॥ भयात् कृतं निह्नवतः ॥ ८ ॥ आख्यायिकातः कथास्वसंभाव्यकथने ॥ ९ ॥ उपघातात् अभ्याख्याना-दिदाने उपयोगाभावे जिह्वादिस्खलनेऽन्यथा कथने वा ॥ १० ॥ किंचित् सत्यं किंचिदसत्यं च सत्यामृषा, सापि दशधा, उत्पन्नमिश्रा, यथा चतुर्षु जातेषु दश पुत्रा जाताः ॥१॥ एवं विगतमिश्रा दश मृता इति ॥ २ ॥ उत्पन्नविगतमिश्रा उभयोरपि विसंवादे ॥३॥ जीवमिश्रा बहून् जीवान् जीवतोऽल्पांश्च मृतान् दृष्ट्वाऽहो जीवराशिरिति ॥ ४ ॥ एवं अजीवमिश्राऽपि अहो मृतजीवराशिः ॥ ५ ॥ जीवाऽजीवमिश्रा ज्ञात्वा अत्रेयन्तो जीवन्त इयन्तश्च मृता इति निश्चयोक्तौ ॥ ६ ॥ अनन्तमिश्रा शाखादीनामनंत( नां प्रत्येक )कायिकत्वेऽपि च सर्वोऽपि मूलकोऽनन्तकायः ॥७॥ प्रत्येकमिश्रा किशलयादिष्वनन्तकायेषुस त्स्वपि सर्वोऽप्याम्रः प्रत्येकः ॥८॥ अद्धामिश्रा सूर्ये अनस्तमितेऽपि त्वरयन् वदति रात्रिर्जातेति ॥९॥ अद्धाद्धामिश्रा दिनस्य रात्रेश्चैकदे-शोऽद्धाद्धा तया मिश्रा यथाऽऽद्ययामे जातेऽपि त्वरयन् मध्याह्नं जातमिति वक्ति ॥ १० ॥ एतद्भापात्रयलक्षणरहिता शब्दार्थ-

3

स्वभावाऽसत्यामृषा द्वादशधा, आमन्त्रणी, यथा हे देवदत्त ! १ आज्ञापनी इदं कुरु २ याचनी भिक्षां देहि ३ पृच्छनी कथमेतत् ४ प्रज्ञापनी हिंसानिवृत्तो दीर्घायुः स्यात् ५ प्रत्याख्यानी याचमानस्य निषेधवचनं न दास्यामीति ६ इच्छानुलोमा साधुपार्श्वे यामीति केनाप्युक्तोऽन्यः प्राह शोभनमिति ७ अनभिगृहीता बहुकार्येषु पृच्छति सति कोऽप्याह यद्रोचते तत् कुरु, यद्वानभिगृहीतार्थमभिगृह्य योच्यते डित्थादिवत् ८ अभिगृहीता नियतार्थावधारणे, इदं कार्यं इदं नेति, अर्थमभिगृह्य योच्यते सा वा घटादिवत् ९ संशयकरणी अनेकार्थाभिधायिका सैन्धवोऽयमिति, नवकम्बलो नर इत्यादि १० व्याकृता स्पष्टाक्षरा नृशुकादीनां वा ११ अव्याकृता अस्पष्टार्था लल्लरवचनाद्या द्वीन्द्रियादीनां वा १२ ॥ १९ ॥ ननु भाषा कियद् व्याप्नोति ? उच्यते, सर्वं लोकं, तर्हि–'कइ'—

कईहि समएहि लोगो, भासाए निरन्तरं तु होइ फुडो ।
लोगस्सय कइभाए, कइभाओ होइ भासाए ॥ १० ॥

कतिभिः समयैः निरन्तरं, अन्तररहितं यथा स्यात् तथा, 'फुडो' स्पृष्टो व्याप्तः, तथा लोकस्य कतितमे भागे? भाषायाः कतितमो भागः? ॥ १० ॥ अत्रोच्यते 'चउ'—

चउहिं समयेहिं लोगो, भासाए निरंतरं तु होइ फुडो ।
लोगस्स य चरिमंते, चरिमंतो होइ भासाए ॥ ११ ॥

चतुर्भिः समयैर्भाषया भाषापुद्गलैर्लोकः स्पृष्टः स्यात्, चतुर्ग्रहणात् त्रिपंचसमयादानं ज्ञेयं तुलामध्यादाने आद्यन्ताऽऽदा-
नवत् स कथं? इहाऽतिमन्दप्रयत्नो वक्ता भिन्नान्येव वाग्द्रव्याणि मुञ्चेत् तानि स्थूरत्वान्न भिद्यन्ते नाप्यन्यद्रव्याणि वासयन्ति
भिद्यमानानि वा संख्यातयोजनानि गत्वा वाक्परिणतिं त्यजन्ति। महाप्रयत्नो वक्ता त्वादाननिसर्गप्रयत्नाभ्यां भित्त्वोत्कट-
शब्दपरिणामानि च कृत्वैव मुञ्चेत्, स चेल्लोकमध्यस्थः स्यात् तदा तानि सूक्ष्मत्वात् बहुत्वाच्चाऽन्यद्रव्यवासकतयाऽनन्त-
गुणवृद्ध्या वर्धमानान्याद्ये समये षट्दिक्षु षट्दण्डा भूत्वा लोकान्तं यान्ति, जीवसूक्ष्मपुद्गलयोरनुश्रेणिगतित्वात्, द्वितीये दण्डाः
पराघातवासितद्रव्यैर्मन्थानः स्युः, तृतीयेऽन्तरपूरणात् लोकं पूरयन्तीति त्रिभिः। स एव वक्ता त्रसनाड्या बहिर्लोकान्तेऽलोक-
स्यासन्नीभूय पूर्वदिक्स्थो वदेत्, तदाऽऽद्ये वक्त्रमुखप्रसारमानेन चतुरङ्गुलादिबाहुल्यो रज्ज्वायामो दण्डो अन्तर्नाडीं प्रविश्य
स्वयंभूरमणापरप्रान्ते लगति, द्वितीये चतुरंगुलादिबाहुल्यो रज्जुविस्तर ऊर्ध्वाधश्चतुर्दशरज्ज्वायामः पराघातवासितद्रव्याणां
कपाटः स्यात् तिर्यक्लोके च तेषामेव चतुरङ्गुलादि बाहुल्यं सर्वतो रज्जुविस्तरं च्छत्वरं सिद्धम्। तृतीये ऊर्ध्वाऽधः कपाटे
मन्थाः तिर्यक्लोके च्छत्वराच्चोर्ध्वाधस्त्रसनाडीव्याप्तिः, चतुर्थे मन्थान्तरपूर्तिः इति चतुर्भिः। वक्ता नाड्या बहिर्विदिक्स्थ-
श्चेत्तदाऽऽद्ये समये पुद्गलराशिर्विदिशो दिशं याति, द्वितीये नाडीं प्रविशतीत्यादि शेषसमयत्रयं प्राग्वत्, एवं पञ्चभिः। अत्र
त्र्यादिसमयेष्वनुश्रेणिनिष्कुटा एव पूर्यन्ते, वक्रनिष्कुटपूर्तिस्तु स्वल्पत्वान्न विवक्षिता। त्रिसमयस्थापना चतुः समयैः पञ्च
समयैः लोकस्य चरमान्ते भाषायाः सर्वलोकव्यापिन्याश्चरमान्तः स्यात् लोकपूर्तिसमये, शेषसमयेषु तु भाषाया लोक-
संख्येयभागत्वादि स्वयं ज्ञेयं, यथा जीवस्य शब्दाण्वादानमोक्षादियुक्तिस्तथा जीवेष्वपि जीवप्रयत्नतारतम्यात् स्यात्॥ ११॥

तत्त्वभेदपर्यायानुयोगद्वारैर्व्याख्या क्रियते, इति क्रमस्ततो मतिज्ञानतत्त्वभेदावुक्तौ । अथ मतिपर्यायानाह 'ईहा'—

**ईहा अपोह वीमंसा, मग्गणा य गवेसणा । सण्णा सई मई पण्णा सव्वं आभिणिबोहियं ॥१२॥**

अर्थावग्रहादनु वस्तुनः सद्भूतविशेषग्रहणायासद्भूतविशेषत्यागाय चिन्तनं ईहा, अपोहो निश्चयः, ईहाया अनु अपोहात् प्राक् स्थिरत्वादयः, स्थाणुधर्मा अत्र घटन्तेऽसौ विमर्शः, लतारोहप्राप्तिस्थानाद्यन्वयिधर्मालोचो मार्गणा, चलनाभावादि व्यतिरेकधर्मालोचो गवेषणा, आद्यावग्रहादनु शब्दास्पृष्टार्थज्ञानरूपा संज्ञा, कालान्तरे स्मरणं स्मृतिः, ज्ञातेऽर्थे सूक्ष्मधर्मालोचो मतिः प्रभूतधर्मालोचः प्रज्ञा, सर्वमिदं मतिज्ञानम्, किंचित् किंचिद् अर्थभेदेऽपि मतिपर्याया एवैते ॥ १२ ॥ अथ नवानुयोगद्वारैर्मतिज्ञानं प्ररूपयति 'संत'—

**संतपयपरूवणया, दव्वपमाणं च खित्त फुसणाय । कालो य अंतरं भाग, भावे अप्पाबहुं चेव ।१३।**

सत्पदप्ररूपणा मतिज्ञानरूपस्य सतो विद्यमानस्य पदस्य गत्यादिषु विंशतिस्थानेषु प्ररूपणा पूर्वप्रपन्नप्रपद्यमानैर्मार्गणा, १ द्रव्यप्रमाणं मतिज्ञानिजीवद्रव्याणां प्रमाणं २ । क्षेत्रं मतिज्ञानिनामवगाहस्थानं ३ स्पर्शनं मतिज्ञानिनः समीपनभःप्रदेशस्पर्शनम् ४ कालो मतिज्ञानस्थितिः ५ अन्तरं मतिज्ञानं त्यक्त्वा पुनर्ग्रहणेऽन्तरकालः ६ भागो मतिज्ञानिनां शेषजीवापेक्षया ७ भावो मतिज्ञानिनां स्वभावः ८ अल्पबहुत्वं पूर्वप्रपन्नप्रपद्यमानयोर्मध्ये स्तोकबहुत्वविचारणं ९ तत्र सत्पदप्ररूपणा यथा ॥ १३ ॥ 'गइ गाहा' 'भासा गाहा'—

गई–इंदिए य काए, जोए वेए कसाय–लेसासु ।
सम्मत्तनाणदंसण–संजय उवओग आहारे ॥ १४ ॥
भासग परित्त पज्जत्त, सुहुमे सण्णी य भविय चरिमे य ।
पुव्वपडिवन्नए वा, मग्गिज्जइ एसु ठाणेसु ॥ १५ ॥

गतयो नरकगत्याद्याः चतस्रः १ इन्द्रियशब्देनेकेन्द्रियाद्याः पञ्च २ कायाः पृथ्व्याद्याः षट् ३ योगा मनोवाक्कायाः ४ वेदाः पुंस्त्रीक्लीबाः ५ कषाया अनन्तानुबन्धिक्रोधाद्याः षोडशः ६ लेश्या कृष्णवर्णादिकर्मपुद्गलजन्याऽऽत्मनः परिणामाः ७ सम्यक्त्वं रत्नत्रयश्रद्धानं ८ मत्यादिज्ञानानि ९ चक्षुरचक्षुरवधिकेवलदर्शनानि । इह विशेषबोधो ज्ञानं सामान्यबोधो दर्शनं १० संयतः सर्वविरतः ११ साकारानाकारोपयोगौ, ज्ञानदर्शनशब्देन मत्यादिज्ञानानि चक्षुदर्शनादीनि च गृह्यन्ते न त्वज्ञानत्रयं, उपयोगशब्देन तु ज्ञानदर्शनाज्ञानान्यपि गृहीतानि १२ आहारः आहारपर्याप्तिमान् १३ भाषको भाषालब्धिमान् १४ प्रत्येक एकदेहे एकजीववान् १५ पर्याप्तः सम्पूर्णपर्याप्तिमान् १६ सूक्ष्मः सूक्ष्मकर्मोदयवान् १७ संज्ञी दीर्घकालिकीसंज्ञातः १८ भवी भव्यः १९ चरमः चरमो भवो भविष्यति यस्य स भव्यानामनन्तामप्यसामग्र्यां सिद्ध्यभावाच्चरमग्रहणं २० इह गत्यादिस्थानेषु यथासंभवं सविपक्षेषु मतिज्ञानं चिन्त्यते, तत्र सर्वगतिषु विवक्षितकाले मतिज्ञानिनः

पूर्वप्रपन्नाः सन्ति, प्रपद्यमानाः स्युर्न वा, एवं पञ्चेन्द्रिय–त्रसकाय–मिलितयोगत्रय–वेदत्रयाऽन्त्यद्वादशकषायाऽन्त्यलेश्यात्रया–संयत–साकारोपयोगाऽऽहारक–भाषालब्धियुक्त–प्रत्येक–पर्याप्त–बादर–संज्ञि–भव्य–चरमेष्वपि ज्ञेयं, सम्यक्त्वज्ञानद्वारयोर्व्यवहारनयमतेन सम्यग्दृष्टिर्ज्ञानी च मतिज्ञानस्य पूर्वप्रपन्नः स्यान्नान्यः, मतिज्ञानं चेत् पूर्वं प्रपन्नं स्यात्तदा सम्यग्दृष्टिर्ज्ञानी चोच्यते इत्यर्थः,प्रतिपत्तिकाले तस्य मिथ्यादृष्टित्वादज्ञानित्वाच्च। निश्चयनयमतेन तु प्रपद्यमानोऽपि क्रियाकालनिष्ठाकालयोरभेदेन प्रतिपत्तिकाले तस्य सम्यग्दृष्टित्वाद् ज्ञानित्वाच्चानिष्टा निष्पत्तिः। एवं मतिश्रुतावधिज्ञानेष्वपि त्रयाणामपि युगपल्लाभे व्यवहारनिश्चयनयौ ज्ञेयौ, उभयनयमयत्वात् जैनस्य। एवं संयतसंयतासंयतयोरपि सम्यक्त्वचारित्रयोर्युगपल्लाभे सति तथा विकलेन्द्रियाऽमनोयोगिष्वौपशमिक सम्यक्त्वं वमतः उत्पादादपर्याप्तावस्थायां, अनन्तानुबन्धिषु च सास्वादनभावेन पूर्वप्रपन्नाः स्युः, तथाऽवेदाऽकषायाद्यलेश्यात्रयमनःपर्यवज्ञानाद्यदर्शनत्रयानाकारोपयोगानाहारापर्याप्तासंज्ञिषु पूर्वपन्नाः स्युर्नान्ये, एकेन्द्रियाद्यकायपञ्चककाययोगिसम्यग्मिथ्यादृष्ट्यज्ञानाभाषकसाधारणसूक्ष्माभव्याचरमा द्वयशून्याः, केवलज्ञानकेवलदर्शने अपि 'तदा नट्ठंमि उ छाउमत्थिए नाणे' इति वक्ष्यमाणत्वात्, एवं सिद्धिगतिप्राप्तातीन्द्रियाकायायोगालेश्या। केवलज्ञानकेवलदर्शननोसंयतनोप्रत्येकनोपर्याप्तनोसूक्ष्मनोबादरनोसंज्ञिनोभव्याश्च सिद्धानामेवेदृग्रूपत्वात् १ कार्मग्रंथिकैरेकेन्द्रियाः सास्वादनभावेनौपशमिकसम्यक्त्वस्य पूर्वप्रपन्ना उच्यन्ते। उक्ता सत्पदपरूपणा। अथ मतिज्ञानिजीवद्रव्यप्रमाणद्वारे मतिज्ञानिनां पूर्वप्रपन्ना जघन्याः सूक्ष्मक्षेत्रपल्यासंख्येयभागाकाशप्रदेशसमाः, उत्कृष्टास्तु तेभ्यो विशेषाधिकाः प्रपद्यमानास्तु स्युर्न वा, चेत्स्युस्तदैको द्वौ त्रयो वा, उत्कृष्टास्तु जघन्यपूर्वप्रपन्नसमाः। क्षेत्रद्वारे सर्वमतिज्ञानिनो लोकस्याऽ-

संख्येयभागे स्युःएकस्त्विलिकागत्याऽनुत्तरेषु यान् आयान्वा सप्तरज्जुषु वर्तते, षष्ठीं क्ष्मां च यान् आयान्वा पञ्चरज्जुषु सम्यक्त्विनोऽन्त्यपृथ्व्यां गमागमाभावात् ३ । स्पर्शना क्षेत्रादधिका ज्ञेया, यथाऽणोरेकप्रदेशं क्षेत्रं सप्तप्रदेशा स्पर्शना ४ । मतिज्ञानस्थितिकाल एकस्यानेकेषां चोपयोगापेक्षो जघन्य उत्कृष्टोऽप्यन्तमुहूर्तं लब्ध्यपेक्षस्त्वेकस्याऽन्तरतमुहूर्तं घन (उत्कृष्ट)स्तु साधिकषट्षष्टिसागराः, ततो निर्मलसम्यग्दृशो मोक्ष एव स्यात्, प्रमादिनस्तु मिथ्यात्वं । यस्तु द्वौ वारौ विजयादिषु त्रीन् वारानच्युते यात्येवं संलग्नं सम्यक्त्वं षट्षष्टिसागरान् नृभवायुभिरधिकान् पालयति सोऽवश्य सिद्ध्यति । नानाजीवानाश्रित्य सर्वकालं मतिज्ञानं विश्वे स्यात् ५ अन्तरं मतेरेकस्य सम्यक्त्वं त्यक्त्वा पुनर्लाभेऽल्पमन्तर्मुहूर्तं, सम्यक्त्वं वांत्वा पुनरंतर्मुहूर्तेण सम्यक्त्वलाभात्, घनं त्वर्धपुद्गलपरावर्तो देशोनः, नानात्मापेक्षया निरंतरं ६ भागेऽनन्ते सर्वजीवानां मतिवन्तः, ७ भावे क्षायोपशमिके औपशमिके क्षायिके च मतिज्ञानं जायते ८ अल्पबहुत्वे जघन्यप्रपद्यमाना अल्पा, जघन्य-पूर्वप्रपन्नास्तेऽभ्योऽसंख्यगुणाः ९ उत्कृष्टप्रपद्यमानेभ्य उत्कृष्टपूर्वप्रपन्ना विशेषाधिकाः, तथा सामान्यतो मतिज्ञानी सर्वद्रव्य-क्षेत्रकालभावान् विशेषतस्तु सर्वेषामेषामनन्तं भागं जानाति न तु पश्येत् ॥ १५ ॥ अथ निगमयति 'आभि'—

आभिणिबोहियनाणे, अट्ठावीसइ हवन्ति पयडीओ ।
सुयणाणे पयडीओ, वित्थरओ आवि वोच्छामि ॥ १६ ॥

अष्टाविंशतिः प्रकृतयो भेदाः पूर्वोक्ताः भवन्ति । उक्तं मतिज्ञानं, 'सुय'त्यादि चकारात् संक्षेपतश्च । अपिशब्दादवधि-

प्रकृतीरपि यथाक्रमं वक्ष्ये ॥ १६ ॥ 'पत्ते'—

**पत्तेयमक्खराइं, अक्खरसंजोग जत्तिया लोए। एवइया पयडीओ, सुयनाणे होंति नायव्वा ॥१७॥**

प्रत्येकं इति एकैकशोऽक्षराण्यनेकधा यथा सानुनासिकसविसर्गकेवलभेदात्त्रिधाऽकारः, सोऽपि ह्रस्वदीर्घभेदाद् द्विधा ततोऽप्युदात्तानुदात्तस्वरितभेदात्त्रिधैवं भेदा अष्टादश, एवमिकारादिषु, तथा लोके यावन्तोऽक्षराणां संयोगा द्व्यादयः सन्ति यथा घटः पट इति व्याघ्रोहस्तीत्येवमादयः, एते चानन्ता एकैकश्चानन्तपर्यायः, स्वपरपर्यायापेक्षया। ननु संख्येयानामकारादीनां कथमनन्ताः संयोगाः? उच्यते वाच्यस्य पुद्गलास्तिकायादेरनन्तत्वादभिन्नत्वाच्च वाच्यभेदे च वाचकभेदसिद्ध्याऽनन्तसंयोगसिद्धिः वाच्यभेदानन्त्यं च यथा परमाणुर्यावदनन्तप्रादेशिक इत्यादि, इह वाच्यं अर्थो वाचकः शब्दः ॥ १७ ॥ 'कत्तो'—

**कत्तो मे वण्णेउं सत्ती, सुयनाणसव्वपयडीओ ?। चउदसविहनिक्खेवं, सुयनाणे आवि वोच्छामि ॥**

कुतो मे श्रुतज्ञानसर्वप्रकृतीर्वर्णयितु शक्तिः? ततश्चतुर्दशविधं निक्षेपं विन्यासं 'सुय' श्रुतज्ञानविषये चशब्दादज्ञानविषये अपेरक्षरानक्षररूपोभयश्रुतविषये वक्ष्ये ॥ १८ ॥ 'अक्ख'—

**अक्खर सण्णी सम्मं, साईयं खलु सपज्जवसिअं च।**
**गमियं अंगपविट्ठं, सत्तवि एए सपाडिवक्खा ॥ १९ ॥**

अक्षरश्रुतं १ संज्ञिश्रुतं २ सम्यक्श्रुतं ३ सादिश्रुतं ४ सपर्यवसितश्रुतं ५ गमिकश्रुतं ६ अङ्गप्रविष्टश्रुतं ७ श्रुतशब्दः
सर्वत्र योज्यः, अक्षरं त्रिधा संज्ञाक्षरमक्षराकारं १ व्यंजनाक्षरं उच्यमाना घटादिवर्णाः २ लब्ध्यक्षरं अक्षरोपलम्भः इन्द्रिय-
लिङ्गागमसादृश्याद्युत्थः, यथा ध्वनौ श्रुते शङ्खोऽयं, धूमे दृष्टेऽग्निरिहास्ति, कन्दे दृष्टे अनंतकायोऽयं, यथा गौस्तथा गवय
इत्यादिवर्णानां लम्भः, तदावरणक्षयोपशमो वा लब्ध्यक्षरं ३ तत्राद्ये द्रव्याक्षरे लब्ध्यक्षरं तु भावाक्षरं 'सत्तवी'त्यादि सप्ता-
प्यक्षरश्रुतादिभेदाः सप्रतिपक्षाः स्युः, यथा अनक्षरश्रुतं १ असंज्ञिश्रुतं २ इत्यादि ॥ १९ ॥ तत्रानक्षरश्रुतं यथा 'ऊस'—

**ऊससियं नीससिअं, निच्छूढं खासिअं च छीयं च । णीसिंघियमणुसारं, अणक्खरं छेलियाईअं ॥**

'निच्छूढं' निष्ठ्यूतं, चशब्दौ समुच्चये, निःसिंघितं नासिकाया अनुस्वारं मीलितास्येनोच्चार्यमाणं सेण्टितं चौरादिसंज्ञा, आदि-
तश्चप्पुटिकाचक्रचीत्कारादि, अनक्षरश्रुतादीनां श्रुतशब्दः श्रुयते इति व्युत्पत्तितो ज्ञेयः। अथ संज्ञिश्रुतं, संज्ञा त्रिधा दीर्घकालिकोप
देशहेतुवादोपदेशदृष्टिवादोपदेशात्, दीर्घः कालोऽस्येति दीर्घकालिकः स चासावुपदेशश्च दीर्घकालिकोपदेशः। उपदेशो विवक्षा
च तत्रेहादिवान् पूर्वापरकालं विमृश्य कार्यकर्त्ता च, पञ्चेन्द्रियो मनःपर्याप्तिपर्याप्तः संज्ञी ज्ञेयः १। हेतुर्देहपालनार्थं इष्टादा-
नानिष्टहाने तयोर्विवदनं वादः तदुपदेशात् संज्ञी द्वीन्द्रियादि प्रायो वर्तमानार्थचिन्तकः, अल्पमनोलब्धित्वात् २। दृष्टीनां
नयात्मकानां मिथः सापेक्षं वदनं दृष्टिवादः स्याद्वादः तदुपदेशात् संज्ञी सम्यक्त्वी तस्य श्रुतं संज्ञिश्रुतं ३। इह दीर्घकालिकी-
संज्ञया यः संज्ञी तस्य श्रुतेनाऽधिकारः, विपक्षेऽसंज्ञीश्रुतं द्वीन्द्रियादि शब्दाः। 'सम्मं' सम्यक्श्रुतं जिनोक्तं सम्यक्दृष्ट्या-

श्रितं, पुराणादि च प्रतिपक्षे मिथ्याश्रुतं तच्च स्पष्टं, मिथ्यादृगाश्रितः सिद्धान्तोऽपि मिथ्याश्रुतं, 'साई'त्यादि, सादि अनादि, सपर्यवसितं अपर्यवसितं, अत्र भेदद्वयमेकत्र चिन्त्यते। यथा साद्यन्तं श्रुतं द्रव्यत एकजीवमाश्रित्य स्यात् विशेषश्चात्र भिन्नदशपूर्वाणि यावदध्येता देवत्वे सर्वं स्मरेन्न वा ततः परं तु देशत एव स्मरेत् एवं क्षेत्रतो भरतैरवतानि, कालतोऽवसर्प्पिण्युत्सर्प्पिण्यौ, भावत उपयोगस्वरप्रयत्नस्थानविशेषादीन् प्रज्ञापकभावान् गतिस्थानभेदसंघातवर्णरसगन्धस्पर्शादीन् ज्ञेयभावांश्चाश्रित्य साद्यन्तं प्रज्ञापकज्ञेयभावानां अन्यथाऽन्यथाभावात्, प्रतिपक्षे अनाद्यन्तं, तच्च नानाजीवान् विदेहान् अवस्थितकालं क्षायोपशमिकभावं चाश्रित्य, यद्वा सूत्रतः श्रुतं साद्यन्तं अर्थतस्त्वनाद्यन्तं ॥ ५ ॥ गमिकं सदृक् पाठं अगमिकं असदृक् पाठं ॥ ६ ॥ अंगप्रविष्टं गणभृत्कृतं द्वादशागं ध्रुवं अनङ्गप्रविष्टं स्थविरकृतं आवश्यकनिर्युक्त्याद्यध्रुवं। इह दृष्टिवादे सर्वार्थसद्भावेऽपि शेषाण्यंगानंगप्रविष्टश्रुतान्यल्पप्रज्ञहिताय। तथा स्त्रीणां निशीथारुणोपपातादिविशेषाध्ययनानि दृष्टिवादश्च नार्हं इति ॥ ७ ॥ श्रुतज्ञानस्य सत्पदप्ररूणादि मतिज्ञानवत्, द्वयोः सहवर्तित्वात्, तथा श्रुतज्ञानी उपयुक्तः सर्वान् द्रव्यादीन् वेत्ति, न तु पश्येत्, तथा चतुर्दशपूर्विणोऽपि यतो विभिन्नमतित्वाद्भिन्ना स्युः। यतः 'अक्खरलम्भेण समा ऊणहिया हुंति मइविसेसेहिं। तेवि य मईविसेसा सुयनाणब्भितरे जाण' ॥ २० ॥ श्रुतज्ञानलाभयुक्तिमाह 'आग'—

**आगमसत्थग्गहणं जं बुद्धिगुणेहिं अट्ठहिं दिट्ठं। बेंति सुयणाणलंभं, तं पुव्वविसारया धीरा ॥ २१ ॥**

केवलमत्यवधयोऽपि आगम उच्यते तन्निवारणाय शास्त्रशब्दस्यादानं, आगमश्चासौ शास्त्रं चेति समासस्तस्य ग्रहणं,

(यद् बुद्धिगुणैः वक्ष्यमाणलक्षणैः करणभूतैः) अष्टभिरपि नत्वेकद्व्यादिभिर्दृष्टं तदेव ग्रहणं, श्रुतज्ञानलाभं ब्रुवते, धिया बुद्ध्या राजन्ते इति धीराः ॥ २१ ॥ अथ धीगुणाः 'सुस्सू'—

सुस्सूसइ पडिपुच्छइ, सुणेइ गिण्हइय ईहए वावि । तत्तो अपोहए वा, धारेइ करेइ वा सम्मं ।२२।

सुश्रूषते विनयेन श्रोतुमिच्छति १ संशये प्रतिपृच्छति २ पुनर्गुरूक्तं शृणोति ३ श्रुत्वा गृह्णाति ४ तत इत्थं नवेतीहते ५ वा समुच्चयेऽपिः स्वबुद्ध्यापि चिन्तयति, ततोऽपोहते निश्चिनोति वा शब्दश्चार्थे ६ गुरूक्तं नित्यं धारयति ७ करोति तदुक्तानुष्ठानं ८ । क्रियाऽपि श्रुतावरणक्षयोपशमहेतुगुरुचित्तावर्जनादिहेतुत्वेन श्रुताप्तिकारणाद्धीगुणेषूक्ता ॥ २२ ॥ अथ श्रवणविधिः 'मूअं'—

मूअं हुंकारं वा बाढकारपडिपुच्छवीमंसा । तत्तो पसंगपारायणं च, परिणिट्ठ सत्तमए ॥ २३ ॥

प्रथमे श्रवणे संयतगात्रो मूकं तूष्णीं शृणुयात् १ द्वितीये हुंकारं च दद्यात् वदत इत्यर्थः, २ तृतीये बाढकारं तथेति वदेत् ३ चतुर्थे प्रतिपृच्छां कुर्यात् कथमेतदिति ४ पंचमे मीमांसां प्रमाणैर्विचारं करोति ५ षष्ठे ततः प्रसंगायातसर्वार्थपारगमनं ६ सप्तमे श्रवणे परिनिष्ठः पूर्णो गुरुवद् भाषते ७ ॥ २३ ॥ व्याख्याविधिमाह 'सुत्त'—

सुत्तत्थो खलु पढमो, बीओ निज्जुत्ति मीसओ भणिओ ।
तइओ य निरवसेसो, एस विही भणिअ अणुओगे ॥ २४ ॥

सूत्रस्यार्थेन सहानुरूपं योजनं अनुयोगः अर्थकथनं, तस्मिन् गुरोरेष विधिर्भवति यथा—सूत्रार्थः, सूत्रार्थमात्रं, खलु एवार्थे, प्रथमोऽनुयोगो, द्वितीयोऽनुयोगः, सूत्रस्पर्शिकनिर्युक्तिमिश्रकः कार्यः, इति भणितोऽर्हद्भिः तृतीयश्च निरवशेषः प्रसक्ताप्रसक्तरूपः कार्यः ॥ २४ ॥ उक्तं श्रुतज्ञानं । अथावधिज्ञानं 'संखा'—

संखाईआओ खलु, ओहीनाणस्स सव्वपयडीओ ।
काओ भवपच्चइया, खओवसमिआओ काओ वि ॥ २५ ॥

अवधिज्ञानप्रकृतयः संख्यातीताः, क्षेत्रकालापेक्षया, खलुशब्दाद् द्रव्यभावापेक्षया त्वनन्ता, आसां मध्ये काश्चन भव एव प्रत्ययो हेतुर्यासां अवधिप्रकृतीनां, पक्षिणां व्योमगतिवत्, ता भवप्रत्ययाः, सुरनारकेषु तस्मिन् भवे क्षयोपशमेनाऽवश्यं भाव्यमिति । भवप्रत्यया अपि मुख्यतः क्षायोपशमिका एव ज्ञेयाः, तथाऽनुदीर्णकर्माणां रसरूपेणाऽनुभावेनाननुभवः प्रदेशस्त्वनुभवः क्षयोपशमस्तत्र भवाः क्षायोपशमिका काश्चन् ॥ २५ ॥ (ताश्च तिर्यङ्नराणामिति) 'कत्तो'—

कत्तो मे वण्णेउ सत्ती, ओहिस्स सव्वपयडीओ ?। चउद्सविहनिक्खेवं, इड्ढीपत्ते य वोच्छामि ।२६।

चतुर्दशविधं अवधिविषयं निक्षेपं द्वारस्थापनं 'ईड्ढी' प्राप्तर्द्धींश्चामर्षौषधादिलब्धिवतः ॥२६॥ चतुर्दशनिक्षेपानाह 'ओही'—

ओही[1] खित्तपरिमाणे[2], संठाणे[3] आणुगामिएँ। अवट्ठिएँ चले तिव्वमन्दँ, पडिवाउत्पयाइर्य ॥ २७ ॥

अवधिर्नामादिभेदः १ तस्य क्षेत्रपरिमाणं २ संस्थानं ३ प्राकृते प्रथमान्तः एकारान्तः स्यात्, स चानुगामिकः समेदः, ४ अवस्थितः क्षेत्रादिषु कियत्कालमेव स्थितः ५ वृद्धिहानिभ्यां चलः ६ तीव्रो मन्दो मध्यमोऽपि ७ तस्य प्रतिपातोत्पादौ ८ ॥ २७ ॥ 'नाण'—

**नाण[9]दंसण[10]विब्भंगे[11], देसे[12] खित्ते[13] गई[14] इअ । इड्ढीपत्ताणुओगे य, एमेआ पडिवत्तीओ ॥ २८ ॥**

ज्ञान ९ दर्शन १० विभङ्गाः ११ देशे देशतः सर्वतश्च १२ क्षेत्रं सम्बद्धादि १३ गतिरिति तस्य गत्यादिद्वाराणि १४ प्राप्तर्द्धीनामानुयोगो व्याख्या, प्राकृतत्वात् शब्दव्यत्ययः, एवमेताः प्रतिपत्तयो युक्तयो वाच्याः॥२८॥ अवधिद्वारमाह 'नामं'—

**नामं ठवणादविए, खित्ते काले भवे य भावे य ।**
**एसो खलु निक्खेवो, ओहिस्सा होइ सत्तविहो ॥ २९ ॥**

नामादिषु सर्वविभक्त्यन्तेष्ववधिशब्दो योज्यते, तत्र 'यद्वस्तुनोऽभिधानं स्थितमन्यार्थे तदर्थनिरपेक्षं । पर्यायानभिधेयं च नाम यादृच्छिकं च तथा' ॥ १ ॥ यद्वस्तुनोऽभिधानं नाम अन्यार्थेऽन्यस्मिन्नर्थे स्थितमपि तदर्थनिरपेक्षं तेनार्थेन रहितं, यश्चार्थो नाम्नोऽस्ति तस्य पर्यायैर्नाभिधीयते इति पर्यायानभिधेयं, तन्नामोच्यते, नामनामवतोरभेदोपचारान्नामवस्त्वेव नाम्ना ज्ञेयं । तथान्यत्राऽवर्तमानमपि यादृच्छिकं यदृच्छयोत्पन्नं डित्थादिवत्स्यात्, च शब्दाद्यावद् द्रव्यभावि च नाम

स्यात्, नामावधिः कस्यापि जीवस्याजीवस्य वाऽवधिरिति नाम स्याद्यथा मर्यादायाः १ स्थापनावधिरक्षादिष्विदं अवधिज्ञानं इति स्थापना, यतः 'यत्तु तदर्थवियुक्तं तदभिप्रायेण यच्च तत्करणि। लेप्यादिकर्म तत् स्थापनेति क्रियतेऽल्पकालं च' ॥१॥ यद्वस्तु तदर्थवियुक्तं मुख्यतस्तद्भावरहितं तदभिप्रायेण मुख्याभिप्रायेण स्थापितं आकृतिशून्यं अक्षादि, 'यच्च तत्करणि' तदाकारयुक्तं, किं तत् 'लेप्यादिकर्म' तदल्पकालं स्यात् यावद्द्रव्यभावि च, तत् स्थापना उच्यते २ द्रव्यावधिर्द्विधा आगमतो नोआगमतश्च, तत्रागमः श्रुतज्ञानं तं आश्रित्य द्रव्यावधिरवधिशब्दार्थाध्ययनज्ञानपाठनादिकृत् तत्र चाऽनुपयुक्तो, 'अनुपयोगो द्रव्यमि'ति वचनात्, नोआगमतः श्रुताभावमाश्रित्य त्रिधा द्रव्यावधिः, ज्ञशरीरद्रव्यावधि १ भव्यशरीरद्रव्यावधि २ तद्व्यतिरिक्तद्रव्यावधि ३ भेदात्, तत्राद्योऽवधिशब्दार्थज्ञस्याजीवो देहः द्वितीयो येनावधिशब्दार्थं ज्ञास्यति स देहः। तृतीयो यदवधिना द्रव्यं वेत्ति, यच्च देहादि अवधेः सहकारिकारणं तदुक्तं, 'भूतस्य भाविनो वा भावस्य हि कारणं तु यल्लोके। तद्द्रव्यं तत्त्वज्ञैः सचेतनाऽचेतनं गदितं' ॥१॥ भावस्येति परिणामस्य ३ क्षेत्रकालावधी यत्र क्षेत्रे काले वाऽवधिर्जायते वर्ण्यते वा तौ ५ भवावधिर्देवादेः ६ भावावधिर्द्विधाऽऽगमतोनोआगमतश्च । आगमतोऽवधिशब्दार्थज्ञाता तत्र चोपयुक्तः तदुक्तं, 'भावो विवक्षितक्रियानुभूतियुक्तो हि वै समाख्यातः। सर्वज्ञैरिन्द्रादिवदिहेन्दनादिक्रियानुभवात्' ॥ १ ॥ विवक्षिता साधयितुं वाञ्छिता क्रिया तस्या अनुभवयुक्त इन्द्रादिवत्। नोआगमतो भावावधिरवधिज्ञानं, नोशब्दो निषेधै १कदेश २मिश्रार्थोऽस्ति अत्र तु निषेधार्थो ज्ञेयः। भावनन्दिभावमङ्गलादौ तु मिश्रार्थो ज्ञेयः। तत्राऽऽगमस्य तद्व्यतिरिक्तज्ञानचतुष्कस्य

१. देहेन.

च सद्भावात् ७ इह भावावधिनाऽधिकारः । 'ओहिस्सा' अवधेः प्राकृतत्वादाकारः ॥ २९ ॥ उक्तमवधिद्वारं, अथ क्षायोप-
शमिकावधेः क्षेत्रप्रमाणद्वारम् 'जाव'—

**जावइया तिसमया—हारगस्स सुहुमस्स पणगजीवस्स ।**
**ओगाहणा जहण्णा, ओहीखित्तं जहण्णं तु ॥ ३० ॥**

इहाऽयं संप्रदायः—'योजनसहस्रमत्स्यः प्रथमे समये समस्य यो दैर्घ्यं । प्रतरोऽङ्गपृथुरसंख्याङ्गुलांशपिण्डो भवेत् द्वितीये तं ॥ १ ॥ संक्षिप्य प्रतरपिण्डा सूच्यऽङ्गप्रथायता तृतीये । तां संक्षिप्य मृतः पनकः स्वाङ्गेऽसंख्याङ्गुलांशः स्यात् ॥ २ ॥ स्थापना । स उत्पत्तेरनु त्रीन् समयानाऽहारं करोतीति त्रिसमयाहारकः, सूक्ष्मनामकर्मोदयात् सूक्ष्मः स आद्यद्वितीय-समयोरतिसूक्ष्मत्वाच्चतुर्थादिष्वतिस्थूरत्वादयोग्यः, पनको वनस्पतिभेदः तस्य यावती अवगाहना देहः जघन्याऽल्पाऽन्यत्रि-सामायिकसूक्ष्मपनकेभ्यः यतोऽस्यैव मत्स्यस्यैवंमृत्वाऽविग्रहेण स्वाङ्गोत्पन्नस्य सूक्ष्मो देहः अन्यत्रोत्पत्तौ जीवप्रदेशविस्तारे देहवृद्धेः न सूक्ष्मो देहः । 'ओही'त्यादि जघन्यमवधिक्षेत्रं एतावन्मात्रं स्यात् । इह सूक्ष्मपनकोऽनन्तकायो ज्ञेयः, तद्देह एकजीवनिष्पादितो अनंतजीवाश्रितः स्यात् । एवं पनकाः सूक्ष्मा असंख्या अपि बादरपनकाश्रये घटन्ते ॥ ३० ॥ 'सव्व'—

**सव्वबहुअगणिजीवा, निरन्तरं जत्तियं भरिज्जासु । खित्तं सव्वदिसागं, परमोही खित्त निद्दिट्ठो ॥३१॥**

१ संहृत्य.

'जत्तियं'यावत् क्षेत्रं नभो भृतवन्तः सार्वदिकं कोऽर्थः,नृबाहुल्यात् प्रायोऽजितार्हत्काले घना बादराग्निजीवाः स्युः,सूक्ष्माश्चोत्कृष्टपदिनस्तत्रैव मील्यन्तेऽतस्ते सूक्ष्मा बादराग्निजीवा असंख्याकाशप्रदेशरूपस्त्वावगाहनया पंक्त्यैकैकशः स्थापनात् श्रेणीं कृत्वा, यद्यवधिमतोऽङ्गं परितः सर्वदिक्षु भ्राम्यते, ततः सा अलोके लोकमात्राण्यऽसंख्यखण्डानि व्याप्नोति, एतावत् परमावधिक्षेत्रं, न ह्यलोके दृश्यं द्रव्यमस्ति, परमेतावच्छक्तिमान् परमावधिः क्षेत्रमाश्रित्य निर्दिष्टः, स चान्तर्मुहूर्तं स्यात् ततः केवलज्ञानं जायते ॥ ३१ ॥ क्षायोपशमिकमध्यमावधिक्षेत्रकालावाह 'अङ्गु'—

अङ्गुलमावलियाणं, भागमसंखिज्ज दोसु संखिज्जा ।
अङ्गुलमावलिअंतो, आवलिआ अङ्गुलपुहुत्तं ॥ ३२ ॥

अङ्गुलावलिकयोर्भागमसंख्यं, द्वयोस्तु संख्येयं कोऽर्थः क्षेत्रतोऽङ्गुलस्यासंख्यं संख्येयं भागं पश्यन्, कालत आवलिकाया अप्यतीतं एष्यं वा असंख्यं संख्येयं भागं पश्येत्, क्षेत्रकालावमूर्तौ नावधेर्विषयः किन्तु तत्तत्स्थानि द्रव्याण्येव पश्यति । अङ्गुलं क्षेत्राधिकारात् प्रमाणाङ्गुलं अवध्यधिकारादुत्सेधांगुलं वा पश्यन्नावलिकाया अन्तर्मध्ये ऊनावलिकां जानातीत्यर्थः, इहोत्सेधाङ्गुलसहस्रेणैकं प्रमाणाङ्गुलं इति भाष्यं विशेषावश्यकम् । आवलिकां पश्यनङ्गुलपृथक्त्वं, पृथक्त्वं हि द्विप्रभृत्यानवभ्यः । इह मुहूर्त्ते सप्तत्रिंशच्छतानि त्रिसप्तत्यधिकानि ३७७३ आनपानाः, एकैकस्मिन्नानपाने साधिकार्धाः सप्तदश क्षुल्लकभवाः, एकैकक्षुल्लकभवे षट्पञ्चाशदधिकद्विशतमाना आवलिका इति ॥ ३२ ॥ 'हत्थं'—

हत्थंमि मुहुत्तन्तो, दिवसंतो गाउयंमि बोद्धव्वो । जोयण दिवसपुहुत्तं, पक्खंतो पण्णवीसाओ ।३३।

हस्तमात्रेऽवधौ मुहूर्त्तान्तरिति अन्तर्मुहूर्त्तं पश्यति, अष्टसमयोर्ध्वं समयोनं घटीद्वयं यावत् सर्वोऽपि कालोऽन्तर्मुहूर्तं कथ्यते, गव्यूतमात्रेऽवधौ दिवसान्तर्दिवसमध्येऽतीतस्य एष्यस्य च भावस्य विषयो बोधव्यः । योजनं पश्यन् दिवसपृथक्त्वं, पञ्चविं- शति योजनानि पश्यन् पक्षान्तः पश्यति ॥ ३३ ॥ 'भर'—

भरहंमि अद्धमासो, जंबूदीवंमि साहिओ मासो । वासं च मणुअलोए, वासपुहुत्तं च रुयगंमि ॥

भरतक्षेत्रविषयेऽवधौ कालतोऽर्धमासो विषयः, जंबूद्वीपविषयेऽवधौ साधिकमासो विषयः, वर्षं वत्सरं मनुजलोकाऽवधौ, रुचकाख्यद्वीपविषयेऽवधौ वर्षपृथक्त्वं विषयेन ज्ञेयं, वर्षसहस्रमित्यन्ये ॥ ३४ ॥ 'संखि'—

सांखिज्जंमि उ काले, दीवसमुद्दावि हुंति संखिज्जा । कालंमि असंखिज्जे, दीवसमुद्दा उ भइयव्वा ॥

संख्येये तुशब्दात् सहस्रवर्षाधिकेऽवधौ काले कालविषये सति क्षेत्रतस्तस्यैवावधेर्गोचरत्वे द्वीपसमुद्राः संख्येयाः, अपि- शब्दान्महानेकोऽपि तदेकदेशोऽपि स्यात् । कालेऽसंख्येये पल्यादिरूपेऽवधिगोचरे सति क्षेत्रतो द्वीपसमुद्रा अपि भक्तव्या विकल्प्याः, चेत्संख्यातविस्तृतास्तदा असंख्याता, असंख्यातविस्तृतास्तु संख्याता, महतो द्वीपस्याऽब्धेर्वा एकदेशोऽपि स्यात्, यथा स्वयंभूरमणतिरश्चोऽसंख्यकालावधौ तदेकदेशो विषयः, परं योजनापेक्षया सर्वपक्षेष्वसंख्येयमेव क्षेत्रं ज्ञेयं ॥ ३५ ॥ 'काले'—

काले चउण्ह वुड्ढी, कालो भइयव्वु खित्तवुड्ढीए ।
वुड्ढीइ दव्वपज्जव, भइयव्वा खित्तकाला उ ॥ ३६ ॥

अवधेः काले वृद्धौ चतुर्णामिति द्रव्यक्षेत्रकालभावानां वृद्धिः । तत्र द्रव्यं पुद्गलास्तिकायः १ क्षेत्रं आकाशं २ भावा वर्णगन्धादि पर्यायाः । क्षेत्रवृद्धौ कालो भाज्यः, बहुक्षेत्रवृद्धौ वर्धते नान्यथा यतः क्षेत्रायामप्रदेशादिवृद्धौ कालोऽप्यनुसमयं चेद्वर्धते ततोऽङ्गुलाऽसंख्येयभागमात्रक्षेत्रवृद्धावपि कालतोऽसंख्योत्सर्पिण्यवसर्पिण्यो वर्द्धेरन् न चैतदिष्टं, तत इत्थं उक्तं, द्रव्यपर्यायौ तु वर्धेते, द्रव्यपर्यायवृद्धौ क्षेत्रकालौ भाज्यौ, द्रव्यवृद्धौ पर्यायवृद्धिः, स्यादेव पर्यायवृद्धौ द्रव्यवृद्धिर्भाज्या ॥ ३६ ॥ यतः 'सुहु'—

सुहुमो य होइ कालो, तत्तो सुहुमयरं हवइ खित्तं ।
अङ्गुलसेढीमित्ते, ओसप्पिणीओ असंखेज्जा ॥ ३७ ॥

कालः सूक्ष्मः निमेषमात्रेऽप्यसंख्यसमयत्वात्, ततः सूक्ष्मतरं क्षेत्रं स्यात्, यतोऽङ्गुलमात्रे एकैकनभःप्रदेशश्रेणिरूपे क्षेत्रे प्रतिप्रदेशं समयगणनयाऽसंख्या अवसर्पिण्यः स्युः । स्थापना । क्षेत्राद् द्रव्यं सूक्ष्मं, एकैकप्रदेशोऽनन्ताणुस्कन्धस्थितेः, द्रव्याच्च पर्यायः, प्रतिद्रव्यं पर्यायानन्त्यात् ॥ ३७ ॥ अथोत्पद्यमानोऽवधिर्यानि द्रव्याण्यादौ पश्येद्येषु च द्रव्येषु प्रतिपतेत् तान्याह 'तेआ'—

तेआभासादव्वाण, अन्तरा इत्थ लहइ पट्ठवओ ।
गुरुलहुअअगुरुलहुअं, तंपि अ तेणेव निट्ठाइ ॥ ३८ ॥

तैजसभापाद्रव्याणां अन्तराऽत्र प्रस्थापकोऽवधिज्ञानारंभकः कोऽपि तैजसद्रव्यासन्नं तदयोग्यं गुरुलघुद्रव्यं लभेत, अयोग्यता च तैजसद्रव्येभ्यस्तस्य बहुपरमाणुत्वात् कोऽपि भाषाद्रव्यासन्नं तदयोग्यं अगुरुलघुद्रव्यं लभेत पश्येत्, अत्राऽयोग्यत्वं भापाद्रव्येभ्योऽस्याल्पाणुत्वात् जात्येकवचनं, तत्र गुरुलघुपर्यायोपेतं गुरुलघु अगुरुलघुपर्यायोपेतं अगुरुलघु। सावधिश्चेत् प्रतिपाती तदा तेनैवोक्तद्रव्येणोपलब्धेन निष्ठां याति प्रतिपतति ॥ ३८ ॥ अधिकाराद् वर्गणा आह 'ओरा'—

ओरालविउव्वाहार–तेअभासाणपाणमणकम्मे ।
अह दव्ववग्गणाणं, कमो विवज्जासओ खित्ते ॥ ३९ ॥

सजातीयवस्तुराशिर्वर्गणा सा द्रव्यादिभेदाच्चतुर्धा । तत्र द्रव्यतः सर्वलोकवर्तिनामेकाणूनामेका वर्गणा, द्व्यणुकानामेका, एवमेकैकाणुवृद्ध्या संख्याताणूनां संख्याता असंख्याताणूनां असंख्याता, असंख्यातस्यासंख्यभेदत्वात्, अनन्ताणूनां अनन्ता अग्रहणयोग्या उल्लंघ्य तादृक्परिणामोपेता औदारिकार्हा अनन्तास्ताश्चोल्लंघ्याणुवृद्ध्या अनन्तास्तस्यानर्हा बहुद्रव्यत्वात् सूक्ष्म-

परिणामत्वाच्च । वैक्रियस्य त्वऽल्पाणुत्वाद्बादरपरिणामत्वादयोग्याः । पुनरणुवृद्ध्या अनन्ता उल्लंघ्य तथापरिणामोपेता वैक्रियार्हास्ततोऽनर्हा एवमाहारतैजसभाषानपानमनःकर्मणामप्याद्या अनर्हास्ततोऽर्हाः पुनरनर्हा इति त्रयं सर्वत्र ज्ञेयं । तत्राऽऽनपानौ उच्छ्वासनिश्वासौ ।

अथाऽयं द्रव्यवर्गणाक्रमो विपर्यासतः क्षेत्रविषये वर्गणा स्यात्, कोऽर्थः द्रव्यवर्गणायां आदौ औदारिकवर्गणा उक्ता अभूदत्रत्वादौ कर्मवर्गणा अंते त्वौदारिकवर्गणाः स्युः । कर्मवर्गणासु स्तोकं क्षेत्रं ततो मनोवर्गणास्वसंख्यगुणं, यावदौदारिकवर्गणास्वसंख्येयगुणमिति, यथा सर्वलोकवर्तिनामेकाकाशप्रदेशस्थानां अणूनां स्कंधानां चैकावर्गणा, द्विप्रदेशस्थानां स्कन्धानां द्वितीया एवं प्रदेशवृद्ध्या असंख्यप्रदेशस्थानामसंख्या अयोग्या उल्लंघ्य कर्मणो योग्या असंख्याः, लोकाकाशप्रदेशानामसंख्यत्वादेव, पुनः प्रदेशवृद्ध्याऽसंख्या अयोग्या अल्पाणुत्वात्, बहुक्षेत्रस्थत्वाच्च । ततोऽसंख्याकाशप्रदेशवृद्ध्याऽसंख्या मनोऽयोग्याः स्वल्पक्षेत्रत्वात् बह्वणुत्वाच्च । ततः प्रदेशवृद्ध्याऽसंख्या मनोयोग्यास्ततः प्रदेशवृद्ध्याऽसंख्या मनोऽनर्हाः स्वल्पाणुत्वात् बहुक्षेत्रत्वाच्च, एवं क्षेत्रवृद्ध्या अनर्हा अर्हा अनर्हाश्चेति त्रयं २ आनपानादीनामपि ॥ स्थापना ॥ ३९ ॥ 'कम्मो'—

कम्मोवरिं धुवेयर, सुण्णेयरवग्गणा अणंताओ ।
चउधुवणंतरतणुवग्गणा य मीसो तहाऽचित्तो ॥ ४० ॥

कर्मवर्गणोपर्यणुवृद्ध्याऽनंता वर्गणा ध्रुवाः शाश्वता, अनेन ध्रुवशब्दादानेन प्रागुक्तौदारिकाद्या अपि ध्रुवा ज्ञेयाः, ततोऽणु-

वृद्ध्याऽनन्ता इतरा इत्यध्रुवाः कदाचिल्लोके न स्युरपि । ततः 'सुन्नत्ति' शून्यान्तरा एकोत्तरवृद्ध्या कदाचित् सान्तरा यथा नवभिर्दशभिर्वृद्धास्ततो द्वादशभिः पञ्चदशभिरणुभिर्वृद्धा इत्यर्थः । तत इतरा अशून्यान्तराः एकोत्तरवृद्ध्या, परं ता अध्रुवा अपि ततश्चतस्रो ध्रुवाऽनन्तरा अणुवृद्धाः प्रत्येकमनन्ताः । अत्र चतसृणामप्यासां मध्ये नैरन्तर्येणैकोत्तरवृद्धिरन्ते चाणूनामवृद्ध्या ममत्वं स्थानचतुष्केऽस्ति । चतुष्कत्वे हेतुर्बहु १ बहुतर २ बहुतम ३ अतिबहु ४ प्रादेशवत्त्वं ज्ञेयं । एवं तनुवर्गणास्वपि ज्ञेयं । ततश्चतस्रस्तनुवर्गणाः केषांचित्स्वाणूनां विगमादन्याणूनां च संगमादौदारिकाद्यर्हताभिमुखाः, ततः सूक्ष्म ईषद्बादरत्वार्हो मिश्रः स्कन्धस्ततोऽचित्तमहास्कन्धः स च विश्रसा परिणत्या केवलिसमुद्घातगत्याऽष्टसमयैर्लोकं पिपर्ति स्वं संहरेच्च अयं बहुद्रव्योऽपि चतुःस्पर्श एव, उत्कृष्टद्रव्यस्कन्धस्तु प्रज्ञापनाग्रन्थेऽष्टस्पर्श उक्तोऽतोऽन्येऽपि स्कन्धाः सन्तीति ज्ञेयं । केवलिसमुद्घातकृत्सचित्तकर्माणुमहास्कन्धव्यवच्छित्यै अचित्तविशेषणं । तथा कालतः एकसमयस्थितीनां एका वर्गणा एवमसंख्यसमयस्थितीनामसंख्याः । भावतः एकगुणकृष्णानामेका एवमनन्तगुणकृष्णानामनन्ताः, एवं शेषवर्णसुगन्धदुर्गन्धतिक्तकटुकषायाऽऽम्लमधुररसमृदुखरशीतोष्णस्निग्धरूक्षस्पर्शनामनन्ताः । गुरुलघूनां अगुरुलघूनां चैका वर्गणा स्यात्, एताः सर्वा अपि प्रत्येकं सर्वलोके सन्ति ॥ ४० ॥ 'ओरा'—

ओरालिअवेउव्विअ–आहारगतेअगुरुलहूदव्वा ।
कम्मगमणभासाई, एआइ अगुरुलहुआइं ॥ ४१ ॥

'गुरुयं लहुयं उभयं, नोभयमिति वावहरियनयस्स । दव्वं लेट्टू दीवो वाऊ वोमं जहा संखं ॥ १ ॥ निच्छयओ सव्वगुरुं सव्वलहुं वा न विज्जए दव्वं । बायरमिह गुरुलहूयं, अगुरुलहुं सेसयं सव्वं' ॥ २ ॥ औदारिकवैक्रियाहारकतैजसद्रव्याणि अन्यान्यपि तैजसासन्नानि तदाभासानि बादररूपत्वात् गुरुलघूनि, कार्मणमनोभाषाद्रव्याणि आदिशब्दात् आनपानद्रव्याणि, भाषाद्रव्याऽर्वाग्वर्तीनि भाषाभासानि, तथा व्योमादीनि अणुद्व्यणुकादीनि एतान्यगुरुलघूनि । अत्रायं विशेषः गुरुलघुद्रव्यारब्धोऽवधिर्वर्धमानोऽधो गुरुलघून्यौदारिकादीनि दृष्ट्वा कश्चिद्विशुद्ध्यमानः क्रमाद्भाषाद्यऽगुरुलघूनि पश्यत्यऽविशुद्ध्यमानस्तु तेष्वेवौदारिकादिषु गुरुलघुषु चतुर्षु कियत्कालं स्थित्वा प्रतिपतेत्, यश्चागुरुलघुद्रव्यारब्धः स वर्धमानः क्रमादूर्ध्वं भाषाद्यऽगुरुलघूनि पश्यति, कश्चित्तु विशुद्ध्यमानो युगपद् गुरुलघून्यपि पश्येत्, अविशुद्धस्त्वगुरुलघुषु गुरुलघुषु वा स्थित्वा प्रतिपतेत् ॥ ४१ ॥ क्षेत्रकालावधी उक्तौ । अथ तावेव द्रव्येण सहाह 'संखि'—

संखिज्ज मणोदव्वे, भागो लोगपलियस्स बोद्धव्वो ।
संखिज्ज कम्मदव्वे, लोहे थोवूणगं पलियं ॥ ४२ ॥

मनोद्रव्यविषयेऽवधौ क्षेत्रतो लोकस्य कालतः पल्यस्य च संख्येयो भागो विषयत्वेन ज्ञेयः । कर्मद्रव्यविषये लोकपल्ययोः संख्येयाः भागाः, लोकमात्रेऽवधौस्तोकोनं पल्यं, ध्रुववर्गणादि च विषय इत्यनुत्यक्तमपि ज्ञेयं ॥ ४२ ॥ 'तेया'—

तेयाकम्मसरीरे, तेआदव्वे अ भासदव्वे अ । बोद्धव्वमसंखिज्जा, दीवसमुद्दा य कालो अ ॥४३॥

तैजसकार्मणशरीरावधौ तैजसभाषाद्रव्यावधौ च क्षेत्रं प्रत्येकं असंख्या द्वीपसमुद्राः कालश्चाऽसंख्येयः पल्यासंख्येय-भागो विषयत्वेन बोधव्यः। असंख्यद्वीपसमुद्रोक्तावप्यसंख्यासंख्येययोजनविस्तृतद्वीपाब्धयोरेकदेशोऽपि विषयत्वेन ज्ञेयः, तत्र तैजसदेहात्कार्मणस्य सूक्ष्मत्वात्, ततोऽपि तैजसद्रव्याणां ततश्च भाषाद्रव्याणां सूक्ष्मत्वादवधिविषयक्षेत्रकालानां सामा-न्येनासंख्यत्वेऽपि बृहत्त्वं स्वयं ज्ञेयं ॥ ४३ ॥ इह जघन्यावधिरगुरुलघुद्रव्यं सूक्ष्मं पश्यन्नपि घटादीन् स्थूलान् न पश्यती-त्यादियुक्त्याऽवधेर्वैचित्र्यभावान् स्पष्टत्वेनाह 'एग'—

एगपएसोगाढं, परमोही लहइ कम्मगसरीरं ।

लहइ य अगुरुयलघुअं, तेयसरीरे भवपुहुत्तं ॥ ४४ ॥

एकप्रदेशे एकस्मिन् नभप्रदेशेऽवगाढं स्थितं अणुस्कन्धादि परमावधिर्लभते पश्यति तथा कार्मणशरीरं, तच्च सूक्ष्ममप्यऽ-नेकाकाशप्रदेस्थमेव ज्ञेयं। तथा अगुरुलघु एतत् त्रयं सूक्ष्मत्वादुक्तं, चशब्दाद्गुरुलघुतैजसशरीरविषयेऽवधौ भवपृथक्त्वं पश्य-तीत्युक्त्या प्रागुक्त एव पल्यासंख्यभागमानोऽसंख्यकालो विशिष्योक्तः ॥ ४४ ॥ 'पर'—

परमोहि असंखिज्जा, लोगमित्ता समा असंखिज्जा ।

रूवगयं लहइ सव्वं, खित्तोवमिअं अगणिजीवा ॥ ४५ ॥

परमावधिः क्षेत्रतो लोकमात्राण्यसंख्यखंडानि, कालतोऽसंख्यसमा उत्सर्प्पिण्यवसर्प्पिणीः, द्रव्यतः सर्वं रूपिद्रव्यं, भाव-

तस्त्वनन्तद्रव्याण्याश्रित्यानन्तपर्यायान् लभते जानाति पश्येच्च। क्षेत्रमानमेव विशिनष्टि, क्षेत्रोपमितं क्षेत्रोपमानं त्वग्नि-जीवाः पूर्वोक्ताः ॥ ४५ ॥ 'आहा'—

आहारतेयलंभो, उक्कोसेणं तिरिक्खजोणीसु ।
गाउय जहण्णमोही, नरएसु उ जोयणुक्कोसो ॥ ४६ ॥

तिर्यग्योनिपु तिर्यक्षु उत्कृष्टेऽवधौ आहारतेजोद्रव्याणां लाभोऽवगमः स्यात्, आहारतेजोग्रहणादौदारिकवैक्रियाहारकतैजसद्रव्याणि तदन्तरस्थतदयोग्यद्रव्याणि च ज्ञेयानि, द्रव्यानुसारेण क्षेत्रकालावपि ज्ञेयौ, 'बोधव्वमसंखिज्जा,दीवसमुद्दा य कालो य'। महतः एकदेशो वा। अथ भवप्रत्ययोऽवधिः, तत्र नारकानाश्रित्य सामान्येनाह–'गाउय' नरके गव्यूतं जघन्योऽवधिः, उत्कृष्टस्तु योजनं ॥ ४६ ॥ अथ विशेषेणाह 'चत्ता'—

चत्तारि गाउयाइं, अद्धुट्ठाइं तिगाउया चेव। अड्ढाइज्जा दुण्णि य, दिवड्ढमेगं च निरएसु ॥ ४७ ॥

आद्ये नरके चत्वारि गव्यूतानि, तत्रापि दशवर्षसहस्रायुषोऽर्धचतुर्थानि, सागरायुषस्तु चत्वारि, द्वितीयेऽर्धचतुर्थानि, तृतीये त्रीणि, चतुर्थेऽर्धतृतीयानि, पञ्चमे द्वे, षष्टे द्व्यर्धं, सप्तमे एकं गव्यूतं उत्कृष्टोऽवधिः सप्तमभुव्यप्यवधिविभंगौ स्तः, यतस्तत्रौपशमिकं क्षायोपशमिकं च प्रतिपातिसम्यक्त्वमस्ति नत्वप्रपिपाति, अप्रतिपातिसम्यक्त्विनस्तिर्यगायुषोऽबन्धात् तदुद्वृतानां च तिर्यक्ष्वेव गतेः ॥ ४७ ॥ 'अद्धु'—

जं गाउअं ति भणिअं, तंपिअ उक्कोसगजहण्णं ॥
अब्भुट्टाईयाइ जहण्णयं, अद्धगाउयंताई । 

जघन्यतः अर्धं चतुर्थं येषां तानि अर्धचतुर्थादीनि, अर्धगव्यूतान्तानि नरकेष्ववधिज्ञानानि, तत्र क्रमेणार्धचतुर्थानि, त्रीणि, अर्धतृतीयानि, द्वे, द्व्यर्धं, एकं, अर्धगव्यूतं च, 'गाउयजहन्नमोही'त्यत्र 'जं गाउअं' यद्गव्यूतं भणितं तदुत्कृष्टावधिमाश्रित्य जघन्यं ज्ञेयं नान्यथा नारकाणां सर्वदिक्षु स्वावधिक्षेत्रे स्थूलद्रव्याणि दिवसपृथक्त्वं यावदुत्कृष्टोऽवधिविषयो ज्ञेयः । वर्गणाद्रव्याणां विषयः स्पष्टो न घटते ॥ 'सक्की' 'आण' 'छट्ठिं'—

सक्कीसाणा पढमं, दुच्चं च सणंकुमारमाहिंदा । तच्चं च बंभलंतग, सुक्कसहस्सार य चउत्थीं ॥४८॥
आणयपाणयकप्पे, देवा पासंति पंचामिं पुढवीं । तं चेव आरणच्चुय, ओहीनाणेण पासंति ॥४९॥
छट्ठिं हिट्ठिममज्झिमगोविज्जा सत्तमिं च उवरिल्ला । संभिण्णलोगनालिं, पासंति अणुत्तरा देवा ॥५०॥

शक्रेशानावित्युपलक्षणात् सौधर्मेशानस्थसामानिकादयो देवाः प्रथमां नरकपृथ्वीं पूर्णां पश्यन्ति, सनत्कुमारमाहेन्द्रदेवा द्वितीयां, ब्रह्मलांतकदेवास्तृतीयां, शुक्रसहस्रारदेवाश्चतुर्थीं ॥ ४८ ॥ आनन्तप्राणतकल्पे देवाः पंचमीं पृथ्वीं 'तं चेव'त्ति तां चैव पंचमीं पृथ्वीं आरणाच्युतदेवा विमलां बहुतरां च ॥ ४९ ॥ अधस्तममध्यमग्रैवेयकसुराः षष्ठीं, उपरिमग्रैवेयकसुराः सप्तमीं, संभिन्नां चतसृषु दिक्षु स्वज्ञानेन व्याप्तां लोकनालिं पंचानुत्तरदेवाः पश्यन्ति । नारकदेवानां क्षेत्रमानेन

१. (भाष्यगाथा हारिभद्रीयावश्यकवृत्तावव्याख्याता).

द्रव्यकालभावाः स्वयं ज्ञेयाः ॥ ५० ॥ 'एए'—

**एएसिमसंखिज्जा, तिरियं दीवाय सागरा चेव । बहुअअरं उवरिमगा, उड्ढं सगकप्पथूभाई ॥५१॥**

तिर्यगेषां सौधर्मदेवादीनां विषयोऽसंख्या द्वीपाः सागराश्च । कालोऽसंख्यस्तैजसादिद्रव्याणि मनोद्रव्याऽवाग्वर्त्तीनि, अनुत्तराणां ध्रुववर्गणा द्रव्याणि च, तत्रापि बहुतरं उपरिमका उपर्युपरिवासिनः पश्यन्ति, स्वकल्पस्तुपो निजविमानं आदि-शब्दाद् ध्वजादि । यतश्चूर्णौ 'उड्ढं जाव सकाणं भवणाणं उवरिल्ले चरमंति'त्ति ॥ ५१ ॥ 'संखे'—

**संखेज्जजोयणा खलु, देवाणं अद्धसागरे ऊणे । तेण परमसंखेज्जा, जहण्णयं पंचवीसं तु ॥ ५२ ॥**

वैमानिकवर्जानां ऊनाऽर्धसागरे आयुषि संख्येययोजनान्यवधिः ततः परं अर्धाब्ध्यायुष्यऽसंख्यानि योजनान्यवधिः स्यात्, जघन्यतो दशवर्षसहस्रायुषि पंचविंशतिर्योजनानि, तुरेवार्थः । अत्र क्षेपकगाथाः 'वेमाणियवज्जाणं, सामन्नमिणं तहावि हु विसेसो । उड्ढमहे तिरियंमि य, संठाणवसेण विण्णेओ' ॥ १ ॥ वैमानिकवर्जानां भुवनपतिव्यन्तरज्योतिर्देवानां । इदं 'संखेज्जजोयणा खलु' इत्यादि गाथोक्तं, सामान्यतोऽवधिप्रमाणं उक्तं तथापि अवधेर्विस्तारोच्चत्वादिविशेष ऊर्ध्वं अधस्तिर्यग्वक्ष्यमाणेन 'तप्पागारे 'गाथोक्तेन संस्थानवशेन विज्ञेयः । तथा 'पणुवीसजोयणाइं, दसवाससहस्सिया ठिई जेसिं । दुविहो वि जोइसाणं, संखिज्ज ठिईविसेसेणं' ॥ २ ॥ पंचविंशतिर्योजनानि जघन्यमवधेः क्षेत्रं ज्ञेयं, कालः पक्षमध्ये, द्रव्याणि तत्क्षेत्रस्थानि प्रायः स्थूराणि विषयः येषां दशवर्षसहस्राणि स्थितिरस्ति तेषां भवनपतिव्यन्तराणामित्यर्थः । ज्योतिष्काणां

द्विविधो जघन्य उत्कृष्टश्चावधिः संख्येय एव ज्ञेयः, संख्यातद्वीपाब्धयः कालो वर्षसहस्राधिकः, संख्येयद्रव्याणि स्थूराणि च विषयः, स्थितेर्विशेषेण द्विधापि स्थितेरसंख्यत्वात् । यत्र 'संखेज्जा' इति पाठस्तत्र संख्येययोजनान्यवधिरिति ज्ञेयं, असुरकुमाराणां उत्कृष्टोऽसंख्ययोजनानि स्यात्, कालोऽसंख्यो, द्रव्याणि तैजसभाषावर्गणाः सूक्ष्माणि स्थूराणि च विषयः। 'वेमाणियाणमङ्गुलभागमसंखं जहन्नओ होइ । उववाए परभविओ तब्भवजो होइ तो पच्छा' ॥ ३ ॥ प्राग्भवेऽवधिमतां जन्तूनां मृत्वा वैमानिकानां जातानामुपपातकाले पारभविकः परभवसम्बन्धी अङ्गुलासंख्येयभागमात्रो जघन्यतोऽवधिः स्यात् । उत्कृष्टः प्राग्भवमानः पश्चात्तद्भवजस्तद्भवसम्बन्धी, 'सक्कीसाणा पढममि'त्यादि पूर्वोक्तावधिः स्यात् ॥ ५२ ॥ 'उक्को'—

उक्कोसो मणुएसुं, मणुस्सतिरिएसु य जहण्णो य ।
उक्कोस लोगमित्तो, पडिवाइ परं अपडिवाई ॥ ५३ ॥

उत्कृष्टाऽवधिर्मनुष्येष्वेव, जघन्यस्तु मनुष्यतिर्यक्षु स्यात् । तत्र य उत्कृष्टो लोकमात्रः स प्रतिपाती, ततः परं प्रदेशाधिकोऽप्यप्रतिपाती ॥ ५३ ॥ उक्तं क्षेत्रपरिमाणं ॥ २ ॥ अथ संस्थानद्वारं ३–'थिबु'—

थिबुयायार जहण्णो, वट्टो उक्कोसमायओ किंची ।
अजहण्णमणुक्कोसो य, खित्तओ णेगसंठाणो ॥ ५४ ॥

जघन्यतोऽवधिस्स्तिबुको बिन्दुस्तदाकारः, पनकक्षेत्रवृत्तत्वाद्वृत्तः, उत्कृष्टस्तु वृत्तः परं किंचिदायतोऽग्निजीवश्रेणी-

परिभ्रममितत्वात् । तत्र चाऽङ्गदैर्घ्येणायतत्वस्यापि भावात्, अजघन्यानुत्कृष्टः क्षेत्रतोऽनेकसंस्थानः स्यात् ॥ ५४ ॥ यथा 'तप्पा'—

तप्पागारे—१ पल्लग—२ पडहग—३ झल्लरि—४ मुइंग—५ पुप्फ—६ जवे—७ ।
तिरियमणुएसु ओही, नाणाविहसंठिओ भणिओ ॥ ५५ ॥

तप्र उडुपः आकारः सर्वत्र योज्यते स चायतत्र्यस्रः ॥१॥ पल्लको धान्यमानं ऊर्ध्वायत ऊर्ध्वं किंचित् संक्षिप्तः २ पटहो नात्यायतोऽधः ऊर्ध्वं समः ३ चर्मनद्धोभयपार्श्वविस्तीर्णाऽऽस्या ढक्का झल्लरी ४ मृदंग ऊर्ध्वायतोऽधोविस्तीर्ण ऊर्ध्वं तनुः ५ पुष्पेति पुष्पभृता छब्बिका ६ यवो यवनालकं कन्याङ्गमण्डनं ७ स्थापना चैषां, क्रमान्नारक १ भवन २ व्यन्तर ३ ज्योतिः ४ कल्प ५ ग्रैवेयका ६ ऽनुत्तर ७ सुराणां यादृगवधिः स्यात्, तथा भवनव्यन्तरेषूर्ध्वं शेषेष्वधो, ज्योतिर्नारकेष्ववधिस्तिर्यग् बहु स्यात्, तिर्यग्मनुष्येष्ववधिर्नानाविधसंस्थानोऽनेकप्रकारसंस्थानो जिनैर्भणितः ॥ ५५ ॥ 'अणु'—

अणुगामिओ उ ओही, नेरइयाणं तहेव देवाणं ।
अणुगामी अणणुगामी, मीसो य मणुस्सतेरिच्छे ॥ ५६ ॥

स्पष्टा, किन्तु मनुष्यतिरश्चां आनुगामिकोऽनानुगामिको मिश्रश्च । तत्र आनुगामिको यत्र यत्र अवधिमान् याति तत्र तत्र अनुगच्छति, संख्यातान्यसंख्यातानि वा योजनानि, स चावधिमतोऽग्रे, पृष्ठौ, पार्श्वे, पार्श्वयोर्वा मध्ये च स्यात्, तत्र मध्यानुगा-

यत्र स्थितस्य ज्ञानमुत्पन्नं ततोऽन्यत्र गतो न पश्येत् पुनस्तत्रैवा-
मिकः सर्वासु दिक्षु स्यात् । अनानुगामिकः स्थितदीपवत्, यत्र स्थितस्य ज्ञानमुत्पन्नं ततोऽन्यत्र गतो न पश्येत् पुनस्तत्रैवा-
गतः पश्यति, मिश्रः किञ्चिदन्वेति किञ्चिन्न ॥ ५६ ॥ उक्त आनुगामिकादिः, द्वारम् ४ । अथावस्थितद्वारम्, ५ 'खित्त'—

**खित्तस्स अवट्ठाणं, तित्तीसं सागरा उ कालेणं । द्व्वे भिण्णमुहुत्तो, पज्जवलंभे य सत्तट्ठ ॥ ५७ ॥**

अवधेः क्षेत्रस्येति क्षेत्रमाश्रित्यावस्थानं कालेन त्रयस्त्रिंशत्सागरा अनुत्तरसुराणां यतो अनुत्तरसुरा यत्र शय्यायां उत्पन्ना-
स्तत्रैवाभवक्षयं तिष्ठन्ति । चूर्णौ तु भवरूपं क्षेत्रं आश्रित्याऽवधिः सुरनारकाणां त्रयस्त्रिंशत् सागराः, तुरेवार्थः । द्रव्ये उपयोगा-
वस्थानं अन्तर्मुहूर्त्तं अवधेः पर्यायलाभे पर्यायदर्शने सप्ताष्ट च समया अवस्थानं स्यात्, तत्र पर्यायेषु समयाः सप्त गुणेषु चाष्ट
सहवर्तिनो गुणाः शुक्लादयः, क्रमवर्तिनः पर्याया नवपुराणादयः ॥ ५७ ॥ 'अद्धा'—

**अध्धाइ अवट्ठाणं, छावट्ठी सागरा उ कालेणं । उक्कोसगं तु एयं, इक्को समओ जहण्णेणं ॥ ५८ ॥**

अद्धा अवधिलब्धिकालः तस्यावस्थानं कालेन षट्षष्टिसागराः, तु शब्दात् साधिकाः उत्कृष्टकं त्वेतत् 'इक्को' नृति-
रश्चां एकसमयोऽवधिज्ञानादनुद्वितीयसमये मृतेरवधेः प्रतिपाताद्वा । देवनारकाणां तु च्युतिसमये सम्यक्त्वाप्तौ विभङ्गस्याऽव-
धित्वापत्तेर्ना भाव्यः ॥ ५८ ॥ उक्तोऽवस्थितः, द्वारम् ५ । अथ वृद्धिहानिभ्यां चल इति द्वारम् ६ । 'वुड्ढी'—

**वुड्ढी वा हाणी वा, चउव्विहा होइ खित्तकालाणं ।**
**द्व्वेसु होइ दुविहा, छव्विह पुण पज्जवे होइ ॥ ५९ ॥**

वृद्धिहानी षोढा ६ । अनन्तभागेन वृद्धिः ॥ १ ॥ असंख्यभागेन । २ । संख्यातभागेन । ३ । संख्यातगुणेन ॥ १ ॥ असंख्यातगुणेन ॥ २ ॥ अनन्तगुणेन वृद्धिः ॥ ३ ॥ एवं हानिरपि षोढा ४ तत्र चतुर्विधापि वृद्धिर्हानिर्वा क्षेत्रकालयोरसंख्यभाग ॥ १ ॥ संख्यातभाग ॥ २ ॥ संख्यातगुणा ॥ ३ ॥ ऽसंख्यगुण ॥ ४ ॥ रूपा । द्रव्येष्वनन्तभागाऽनंतगुणरूपा द्विविधा वृद्धिर्हानिर्वा । ओघात् सर्वद्रव्याण्याश्रित्य पर्याये षड्विधाऽपि वृद्धिर्हानिर्वा स्यात् न त्वेकद्रव्यं, तत्र 'दव्वाओ असंखिज्जे संखेज्जे आवि' इत्याद्युक्तेः ॥ ५९ ॥ उक्तश्चलः, द्वारम् ६ । अथ तीव्रमन्दद्वारम् ७ ॥ 'फड्ड'—

फड्डा य असंखिज्जा, संखेज्जा यावि एगजीवस्स ।
एकप्फड्डुवओगे, नियमा सव्वत्थ उवउत्तो ॥ ६० ॥

अवधिज्ञानावरणस्य क्षयोपशमो येष्वात्मप्रदेशेषु तेऽत्राधिफड्डा अवधिनिर्गमद्वाराणि, गवाक्षजालनिर्गतदीपभाफड्डवत्, तें एकजीवस्याऽसंख्याः संख्येया वा स्युः । एक फड्डोपयोगे सति नियमात् सर्वत्र सर्वफड्डेषूपयुक्तः स्यात्, एकोपयोगत्वाज्जन्तोः ॥ ६० ॥ 'फड्डा'—

फड्डा य आणुगामी, अणाणुगामी य मीसगा चेव ।
पडिवाइ अपडिवाई, मीसो य मणुस्सतेरिच्छे ॥ ६१ ॥

फड्डानि षोढा आनुगामिकान्यनानुगामिकानि मिश्राणि, प्रतिपातीन्यप्रतिपातीनि मिश्राणि च, तेषु प्राय आनुगामिकाऽप्र-

तिपातिलक्षणे द्वे फड्डे तीव्रे अन्ये मन्दे, द्विस्वभावानि मिश्राणि । स्पर्धकावधिस्तु मनुष्यतिरश्चां स्यात् केषांचित् ॥ ६१ ॥
उक्तस्तीव्रो मन्दोऽवधिः, द्वारम् ७ । अथावधिप्रतिपातादिद्वारम् ८ । 'बाहि'—

बाहिरलंभे भज्जो, दव्वे खित्ते य कालभावे य ।
उप्पा पडिवाओऽविय, तं उभयं एगसमएणं ॥ ६२ ॥

द्रष्टुर्बहिर्योऽवधिः एकस्यां दिशि स बाह्यलाभो बाह्यावधिः, भाष्ये तु योऽवधिमत एकस्यां दिशि स्यादथवाऽनेकास्वपि
दिक्षु यः फड्डकावधिरन्योन्यं विछिन्नः सान्तरः स्यात्, सोऽपि बाह्यावधिरिति, तस्मिन् सति द्रव्यक्षेत्रादिषु एकसमयेन कदा-
चिदुत्पादः कदाचित्प्रतिपातः कदाचिदुभयभावश्चेति भाज्यः ॥ ६२ ॥ 'अब्भिं'—

अब्भिंतरलद्धीए उ तदुभयं नत्थि एगसमएणं ।
उप्पा पडिवाओऽविय, एगयरो एगसमएणं ॥ ६३ ॥

स्पष्टा, किन्तु द्रष्टुः सर्वतः संबद्धोऽवधिरभ्यंतरस्तस्य लब्धौ अभ्यंतरलब्धौ सत्यां तदुभयं उत्पातप्रतिपातलक्षणं एक-
स्मिन् समये नास्ति, एकतर इत्येकः कोऽपि उत्पातः प्रतिपातो वा ॥ ६३ ॥ प्रसङ्गादाह 'दवा'—

दव्वाओ असंखिज्जे, संखेज्जे आवि पज्जवे लहइ ।
दो पज्जवे दुगुणिए, लहइ य एगाउ दव्वाउ ॥ ६४ ॥

एकस्माद् द्रव्यादुत्कृष्टं असंख्यान् मध्यमं संख्येयान् पर्यायान् लभते, जघन्यं द्वौ पर्यायौ द्विगुणौ चतुरो वर्णगन्धरसस्पर्शानिति लभते ॥ ६४ ॥ उक्तः प्रतिपातादिः, द्वारम् ८ ॥ अथ ज्ञानादिद्वारत्रयम् ११ ॥ 'सागा'—

सागारमणागारा, ओहिविभंगा जहण्णगा तुल्ला ।
उवरिमगेवेज्जेसु उ, परेण ओही असंखिज्जो ॥ ६५ ॥

१ साकारो विशेषबोधो ज्ञानं । १ । अनाकारः सामान्योपयोगो दर्शनं ॥ २ ॥ तावऽवधिरूपौ विभङ्गरूपौ च, नारकभवनपतिभ्य आरभ्य उपरिमग्रैवेयकेष्वपि जघन्यौ तुल्यौ स्तः न तूत्कृष्टौ, द्रव्यभावानाश्रित्य त्ववधिर्विशुद्धः । भाष्ये तु भवनपतिभ्य आरभ्य यावदुपरिमग्रैवेयकदेवास्तेषां जघन्यमध्यमोत्कृष्टस्थितिनां अवधिविभङ्गज्ञानदर्शने क्षेत्रादिविषयमाश्रित्य क्रमेण जघन्यमध्यमोत्कृष्टे, परस्परं तुल्ये स्तः, ततः परं अवधिरेव, स चासंख्यः क्षेत्रतोऽसंख्येययोजनविषयः, कालतस्त्वसंख्यवर्षविषयः स्यात्, द्रव्यभावैस्त्वनन्त एव मिथ्यादृशां तत्राऽभावात्, नृतिरश्चां त्ववधयोऽतिविचित्रा स्युः ॥ ६५ ॥ उक्तं ज्ञानादिद्वारत्रयम् ११ ॥ अथ देशावधिद्वारं १२ ॥ 'णेरइ'—

णेरइयदेवतित्थंकरा य ओहिस्सऽबाहिरा हुंति ।
पासंति सव्वओ खलु, सेसा देसेण पासंति ॥ ६६ ॥

नैरयिका देवास्तीर्थंकराश्चावधेरबाह्या इति नियतावधयोऽभ्यन्तरलब्धयश्च, 'सेसा' शेषा देशतोऽपि सर्वतोऽपि पश्यन्ति

॥ ६६ ॥ उक्तं देशद्वारम् १२ ॥ अथ क्षेत्रसंवद्धद्वारम् १३ ॥ 'संखि'—

संखिज्जमसंखिज्जो, पुरिसमबाहाइ खित्तओ ओही ।
संबद्धमसंबद्धो, लोगमलोगे य संबद्धो ॥ ६७ ॥

संबद्धोऽवधिः क्षेत्रतः संख्येयोऽसंख्येयो वा स्यादसंबद्धस्तु पुरुषादबाधा अन्तरं तया सह संख्येयोऽसंख्येयो वा, कोऽर्थः संख्येयं अन्तरं संख्येयोऽवधिः १ संख्येयं अन्तरं असंख्येयोऽवधिः २ असंख्येयं अन्तरं संख्येयोऽवधिः ३ असंख्येयं अन्तरं असंख्येयोऽवधिः ४ एवं चतुर्भङ्गी पदत्रयं च व्याख्यातं, 'लोग' तत्र लोकसम्बद्धे चतुर्भङ्गीः नरि सम्बद्धो लोके च लोकमात्रः १ नरि संबद्धो न लोके देशाऽभ्यंतरोऽवधिः २ । न नरि लोके शून्यो भङ्गः ३ न नरि न लोके बाह्यावधिः ४ अलोकसम्बद्धस्त्वात्मसम्बद्ध एव ॥ ६७ ॥ उक्तं क्षेत्रद्वारम् १३ ॥ अथ गत्यादिद्वारम् १४ ॥ 'गइ'

गइनेरइयाईया, हिट्ठा जह वण्णिया तहेव इहं ।
इड्ढी एसा वणिज्जइत्ति तो सेसियाओवि ॥ ६८ ॥

गतिर्नारिकादिका उपलक्षणादिन्द्रियादिद्वाराणि सत्पदप्ररूपणादयश्च यथा 'हिट्ठा' अधो मतेर्वर्णिताः तथैवेहावधेरपि ज्ञेयाः विशेषस्त्वेषः—अवेदका अकषायिणश्च श्रेणिद्वयस्थास्तथा मनोज्ञानिनस्तथा नाहारापर्याप्ताः, पूर्वसम्यग्दृशः सुरनारका अप्यन्तरालगत्यादौ शक्तिमधिकृत्यावधेः प्रपद्यमानाः स्युः । पूर्वप्रपन्नास्तु विकलाऽसंज्ञिवर्जाः । ऋद्धिरेषाऽवधिरूपा वर्ण्य-

तेऽतः शेषा ऋद्धयोप्युच्यन्ते ॥ ६८ ॥ 'आमो' 'चार'

आमोसहि विप्पोसहि, खेलोसहि जल्लमोसही चेव ।
संभिन्नसोउज्जुमइ, सव्वोवसहि चेव बोद्धव्वो ॥ ६९ ॥
चारणआसीविस, केवली य मणनाणिणो य पुव्वधरा ।
अरहंत चक्कवट्टी, बलदेवा वासुदेवा य ॥ ७० ॥

आमर्शः स्पर्श एवौषधिर्यस्याऽसौ स्पर्शादेव रोगच्छित् । एवं विप्रुड् विष्टा, खेलः श्लेष्मा, जल्लो मलः, मोऽलाक्षणिकः, सुगन्धाश्चैते स्युः, संभिन्नश्रोता सर्वाङ्गैः श्रोता १ चक्रिसैन्यसर्वध्वनीनां व्यक्ता श्रोता वा २, संभिन्नानि श्रोतांसि यस्य वा एकैकाक्षेण सर्वाक्षविषयग्राही ३ अक्ष्णा श्रोता श्रुत्या दृष्टेत्यादि वा । ऋजुमतिर्मनोज्ञानिभेदोऽग्रे वक्ष्यते, सर्वं मूत्रकेशादि औषधिर्यस्य स सर्वौषधिः ॥ ६९ ॥ जङ्घाविद्याचारणौ, तत्राद्यस्तपःशक्त्याऽभ्रवातमहिकाऽवश्यायहिमाद्युपरि तेषां मनागपि प्रतिघातमकुर्वन् चलति एवं ससूर्यांशुलूतातन्त्वादीन्निश्रित्यैकेनोत्पातेन रुचकद्वीपं याति, आयांस्त्वाद्येन नन्दीश्वरं द्वितीयेन स्थानं, ऊर्ध्वं त्वेकेन मेरुशीर्षे पांडुकवनम् आयांस्त्वाद्येन नन्दनवनं द्वितीयेन स्थानं, द्वितीयस्तु विद्याशक्त्याऽऽद्येन मानुषाद्रिं, द्वितीयेन नन्दीश्वरं यावत्, अग्रतः शक्त्यभावात्, आयांस्त्वेकेनैव स्थानं, एवमूर्ध्वमपि व्यत्ययः आस्यो—दंष्ट्रास्तासु विषयं येषां ते आसीविषा द्विधा जात्या कर्मणा च, तत्र जात्यां वृश्चिकभेकाऽहिमर्त्या उत्कृष्टं विषेण क्रमादर्धभरतभरतजंबूद्वीपनृक्षेत्रमानाङ्गव्यासिशक्तयः,

कर्मणा तु नृतिर्यंचस्तपसा वाग्लब्ध्या वा, आसहस्रारं देवाश्च शक्त्या शापाद्घातकाः, मनोज्ञानिनोऽत्र विपुलमतयः॥७०॥ 'सोल'

सोलस रायसहस्सा, सव्वबलेणं तु संकलनिबद्धं ।
अंछंति वासुदेवं, अगडतडंमी ठियं संतं ॥ ७१ ॥

षोडश राजसहस्राः संकलनिबद्धं वासुदेवं सर्वबलेन सर्वेभादिसैन्यादिप्राणेन अंछन्त्याऽऽकर्षन्ति, अगडः कूपस्तत्तटे स्थितं सन्तं ॥ ७१ ॥ 'घित्तू'

घित्तूण संकलं सो, वामगहत्थेण अंछमाणाणं ।
भुंजिज्ज व लिंपिज्ज व महुमहणं ते न चायंति ॥ ७२ ॥

स्पष्टा, किन्तु गृहीत्वा शृंखलां तेषां 'अंछमाणाणं' आकर्षतां सतां ताम्बूलं भुंजीत, चन्दनेनाङ्गं विलिंपेत्, तं मधुमथनं वासुदेवं न 'चायन्ति,' न शक्नुवन्त्याक्रष्टुं ॥ ७२ ॥ 'दोसो'

दोसोला बत्तीसा, सव्वबलेणं तु संकलनिबद्धं ।
अंछंति चक्कवट्टिं, अगडतडंमी ठियं संतं ॥ ७३ ॥

द्वौ षोडशकाविति चक्रिणो हरिद्विगुणर्द्धिज्ञप्त्यै, द्वात्रिंशद्राजसहस्राणि ॥ ७३ ॥ घित्तू०

घित्तूण संकलं सो, वामगहत्थेण अंछमाणाणं ।
भुंजिज्ज व लिंपिज्ज व, चक्कहरं ते न चायंति ॥ ७४ ॥

पूर्ववदर्थो ॥ ७४ ॥ 'जं के०' 'मण'

जं केसवस्स उ बलं, तं दुगुणं होइ चक्कवट्टिस्स ।
तत्तो बला बलवगा, अपरिमियबला जिणवरिंदा ॥ ७५ ॥
मणपज्जवनाणं पुण, जणमणपरिचिन्तियत्थपायडणं ।
माणुसखित्तनिबद्धं, गुणपच्चइयं चरित्तवओ ॥ ७६ ॥

यत्केशवस्य बलं शरीरं स्यात् तद्द्विगुणं चक्रिणः स्यात् ततोऽन्यजनापेक्षया 'बला' बलदेवा 'बलवगा' बलवन्तः स्युः । जिनेन्द्राः सर्वजीवेभ्योऽप्यपरिमितबला अनन्तबलाः । एवं गणभृदाहारकवैक्रियाङ्गकृत्क्षीरास्रवकोष्ठबुद्धिबीजबुद्धिपदानुसारिशीततेजोलेश्याऽक्षीणमहानसीपुलाकर्द्धयोऽपि, तत्र चतुर्दशपूर्वकृद्गणधराः, सर्वपूर्वाध्येतुस्तपःशक्त्याहारकदेहकर्तुराहारकलब्धिः, चक्रिभोज्यक्षीरासववन्मधुरवाक् क्षीरासवः, कोष्ठान्नानामिव सूत्रार्थानां धर्ता कोष्ठबुद्धिः, सिक्थेन द्रोणपाकबोधवत् बीजमात्रेण वेत्ता बीजबुद्धिः, एकेन पदेन शेषसूत्रवित्पदानुसारी, चक्रिसैन्यदाहकृत्पुलाकः, एवमष्टाविंशतिर्ऋद्धयः । तत्रार्हच्चक्रिवासुदेवबलसंभिन्नश्रोतश्चारणपूर्वभृद्गणभृत्पुलाकाहारकर्द्धयो न भव्यास्वपि स्त्रीषु । उक्ता दश ऋद्धयः ॥

ऋजुविपुलमतिकेवलित्वं चेति त्रयोदश नाऽभव्यनृषु । अमूः क्षीरासवर्द्धिश्च नाऽभव्यस्त्रीषु ॥ ७५ ॥ उक्तमवधिज्ञानं, यद्यप्युत्कृष्टावधिर्मनांसि पश्यति तथाऽपि सविशेषमनोद्रव्यग्राहित्वादप्रमत्तयतेरेव भावित्वाच्च मनःपर्यवज्ञानं पृथुगुक्तं–'मण' मनःपर्यायज्ञानं पुनर्जनमनःपरिचिंतितार्थप्रकटनं स्यात्, मानुषक्षेत्रनिबद्धं स्यात्, गुणाः क्षान्त्यादयः प्रत्ययो हेतुर्यस्य तद्गुणप्रत्ययं, चारित्रवतोऽप्रमत्तस्यामर्द्धेः स्यात्, तद्द्विधा ऋजुमतिर्विपुलमतिश्च, मननं मतिर्ज्ञानं, ऋज्वी सामान्यग्राहिणी मतिः ऋजुमतिः घटो ध्यात इत्यादि सामान्यमनोद्रव्यज्ञप्तिः, विपुला विशेषग्राहिणीमतिर्विपुलमतिः, द्रव्यक्षेत्रादिविशिष्टघटादिग्राज्यविशेषयुक्तमनोद्रव्यज्ञप्तिरिति । तत्र ऋजुमतिर्द्रव्यतोऽनन्तान् अनन्तप्रदेशस्कन्धान् मनस्त्वपरिणतान् माक्षाद्वेत्ति, ध्यातं तु मूर्त्तं द्रव्यं, यद्यवधिः स्यात्तदा तेन, नोचेन्मुर्त्तामूर्त्ते अपि द्रव्ये मनोद्रव्याणां ईदृशाकारान् यथानुपपत्तेरिदं वस्तु ध्यातमस्तीत्यनुमानरूपेण मानसबलेनैव वेत्ति, क्षेत्रत उर्ध्वं ज्योतिष्कोर्ध्वतलं, अधोऽधोग्रामाधःप्रतरं यावत्, प्रत्यग्विदेहे नलिनावतीवप्रविजययोः सहस्रयोजनावगाढा अधोग्रामाः, 'जोयणसयदस गंतु, समधरणीए अहो अहोगामा । बायालीससहस्से, गंतु मेरुस्स पच्छिमओ' ॥ १ ॥ तिर्यग्नृक्षेत्रांतः, कालतः पल्यासंख्यभागमेष्यमतीतं च, भावतः दीर्घकालिक्युपदेशसंज्ञिमनोद्रव्यपर्यायान् अनन्तान् सर्वभावानां च अनन्तभागं वेत्ति, विपुलमतिस्तु तानेव द्रव्यादीन् विशुद्धतरान्, क्षेत्रं त्वर्धतृतीयोत्सेधांगुलाधिकं वेत्ति, एतच्च ज्ञानमेव न दर्शनं, प्रतिनियतमनोद्रव्याकारस्यैव ग्राहित्वेन दर्शनत्वायोगात् सत्पदपरूपणादि अवधिवद्वाच्यं । किंत्वप्रमत्तयतिरस्योत्पादस्वामी तदनुसारेण सर्वत्र नानात्वं स्वयमूह्यं, अनाहारापर्याप्तौ तु न पूर्वप्रपन्नौ नाप्यन्यौ ॥ ७६ ॥ 'अह'

**अह सव्वद्व्वपरिणाम–भावविण्णत्तिकारणमणंतं। सासयमप्पडिवाइ, एगविहं केवलन्नाणं ॥७७॥**

अथ सर्वद्रव्याणां जीवादीनां परिणामाः प्रयोगविस्रसोभयजन्या उत्पादादयस्तेषां भावः सत्ता, तस्य विशेषेण ज्ञप्तिर्ज्ञानं तस्याः कारणं, अनन्तं ज्ञेयानंत्यात्, शाश्वतं सर्वकालभावि, अप्रतिपाति द्रव्यपर्यायैः सदैव तथाभूतत्वात्, केवलज्ञानं स्यात्, एकविधं आवृत्यभावात् ॥ ७७ ॥ ' केव '

**केवलणाणेणत्थे णाउं, जे तत्थ पण्णवणजोगे। ते भासइ तित्थयरो, वयजोग सुयं हवइ सेसं ॥७८॥**

केवलज्ञानेनार्थान् ज्ञात्वा ये तत्र प्रज्ञापनायोग्याः, श्रोतृशक्त्यपेक्षया कथनार्हास्तान् तीर्थकरो भाषते। इहाऽर्था द्विधा अनभिलाप्या अभिलाप्याश्च, अभिलाप्या द्विधाऽप्रज्ञाप्याः प्रज्ञाप्याश्च, तत्र अनभिलाप्यानामनन्ते भागे अभिलाप्याः तेषामप्यनन्ते भागे प्रज्ञाप्यास्तेपामप्यनन्तभागः पूर्वेषु बद्धः स्यादिति, ' वयजोगे 'ति स शब्दराशिः प्रभोर्वाग्योग एव न श्रुतं नामकर्मोदयहेतुत्वात्, श्रुतस्य तु क्षायोपशमिकत्वात्, श्रोतॄणां तु स भावश्रुतहेतुत्वाच्छेषं–अप्रधानं श्रुतं द्रव्यश्रुतमित्यर्थः। सत्पदप्ररूपणायां नृसिद्धगत्यतींद्रियत्रसकायाकायसयोगायोगावेदाकषायशुक्ललेश्यालेश्यसम्यग्दृष्टिकेवलज्ञानदर्शनसंयतनो-( संयता )संयतसाकारानाकारोपयोगाहारकानाहारकभाषकाभाषकपरीत्तनो( परीत्ता )परीत्तपर्याप्त( नोपर्याप्तापर्याप्त )बादरनोबादर( सूक्ष्म )संज्ञिनो( संज्ञ्य )संज्ञिभव्यनो( भव्या )भव्य( चरमनो )चरमाचरमेषु प्रपद्यमानाः पूर्वप्रपन्नाः, भवस्थकेवलिनः सिद्धाश्च स्वधियोह्याः, चरमः केवली अचरमः सिद्धः। द्रव्यप्रमाणे उत्कृष्टं प्रपद्यमाना अष्टशतं, पूर्वप्रतिपन्नाः कोटीपृथक्त्व-

प्रमाणः सिद्धास्त्वनन्ताः, क्षेत्रस्पर्शना जघन्यं लोकासंख्यभागः, उत्कृष्टं केवलिसमुद्घाते सर्वलोकः, कालः साद्यनन्तः, अप्रतिपातित्वान्नान्तरं, भागो मतिवत्, भावे क्षायिके, अल्पबहुत्वं द्रव्यप्रमाणवत् ॥ ७८ ॥ 'इत्थं'

**इत्थं पुण अहिगारो, सुयनाणेणं जओ सुएणं तु । सेसाणमप्पणोऽवि अ, अणुओगु पईवदिट्ठन्तो ॥७९॥**

अत्र पुनः श्रुतज्ञानेनाधिकारः, यतः श्रुतेनैव, तुरेवार्थः, शेषाणां मत्यादीनां आत्मनोऽपि च श्रुतस्येत्यर्थः, अनुयोगो व्याख्याऽक्रियते दीपवत् स्वान्यप्रकाशित्वात्तस्य ॥ ७९ ॥

॥ इति पीठिका विवरणं समाप्तं ॥

इह श्रुतशब्देन श्रुताऽन्तर्गतमावश्यकं उक्तं, तन्नामस्थापनादिभेदं चतुर्धा, तत्र द्रव्यावश्यकं द्विधा आगमतो नोआगमतश्च, आगमतो यस्य तु आवश्यकमिति पदं शिक्षितं पाठान्तं नीतं १ स्थितं अविस्मृतया चित्ते स्थितं २ जितं परावर्त्तने परप्रश्ने वा शीघ्रं कण्ठस्थं ३ परिजितं क्रमोत्क्रमाभ्यां गुणनं कुर्वतः स्फुरति तत् ४ नामसमं स्वनामवद् जातं ५ घोषसमं गुरुघोषोच्चारसमं शिष्योच्चार्यं ६ अहीनाक्षरं एकेनापि वर्णेनाऽहीनं ७ अनत्यक्षरं एकेनापि नाऽधिकं ८ अव्याविद्धं अविपर्यस्ताक्षरं ९ अस्खलितं विषमभूगंत्रीवत्स्खलनहीनं १० अमिलितं बहुशास्त्रसूत्रैरमिलितं ११ अव्यत्याम्रेडितं अस्थानयतिहीनं १२ स्याद्वाचना १ प्रश्न २ गुणन ३ धर्मकथा ४ अनुप्रेक्षा ५ कलितं च, स नर आगमतो द्रव्यावश्यकं । नोआगमतो द्रव्यावश्यकं त्रिधा ज्ञशरीरद्रव्यावश्यकं, आवश्यकशब्दार्थज्ञस्याऽजीवो देहः । १ । भव्यशरीरद्रव्यावश्यकं येनाऽङ्गेनावश्यकशब्दार्थं ज्ञास्यति । २ । तद्व्यतिरिक्तं नोआगमतो ज्ञभव्यशरीरव्यतिरिक्तं द्रव्यावश्यकं त्रिधा, लौकिकं राजादिलोकानां शय्योत्थानादनु प्रातर्मल्लयुद्धस्नान-

दन्तधावनाद्यं १, कुप्रावचनिकं चरकादीनां प्रातः स्कन्दाद्यर्चादि २, लोकोत्तरं नोआगमतो ज्ञभव्यदेहव्यतिरिक्तं तत् यत् श्रमणगुणहीनाः, षड्जीवनिकायाऽदयाः पार्श्वस्थाद्या देहभूषाऽश्वेतवस्त्रचित्रदंडस्नानादिपराः स्वच्छन्दा वा विहृत्योभयसन्ध्यं आवश्यकं कुर्युः, प्रमत्तर्षयो वा अनुपयुक्ताः कुर्युः फलाऽभावात्तल्लोकोत्तरं द्रव्यावश्यकं ३, अत्र दृष्टान्तः—वसन्तपुरे अगीतार्थसंविग्नो गच्छस्तेष्वेकोऽगीतार्थः श्रमणगुणहीनः सदोदकार्द्रपाण्याधाकर्मादिदोषाहारं कृत्वा विकाले महासंवेगादालोचयत् तस्य गणी अगीतार्थत्वात्प्रायश्चित्तं ददाह—अहो ! अयं श्रेष्ठः साधुः, सुखं सेवितुं दुःखमालोचितुमेवमेष आलोचयन्नशठत्वाच्छुद्ध एव, एतद् दृष्ट्वाऽन्येऽगीतार्था साधवः प्राशंसन् दध्युश्च, यत् तत् कृत्वा आलोच्य शुद्ध्यते । तत्र अन्यदा कोऽपि गीतार्थः संविग्नः आगात् स तत् क्रियालोचनाद्यं दृष्ट्वा गुरुं प्रति दृष्टान्तमूचे—गिरिनगरे कोऽपि वणिग् रत्नैर्गृहं भृत्वाऽदाहयत्तं लोकः प्राशंसदहो धन्योऽग्निं भगवन्तं तर्पयति । अन्यदा तेन रत्नगृहे प्रदीपिते वाते प्रचुरे सर्वं पुरं दग्धं, ततो राज्ञा सर्वस्वदण्डः कृतः । अन्यपुरे एवं कुर्वन्नन्यः सर्वस्वदण्डाद्विसृष्टोऽरण्यम्, कस्मात् प्रदीपयसि गृहं ? । यथा तेन स्वान्यगृहाणि दग्धानि, तथा त्वं गुरुरप्येनं प्रशंसन् स्वमन्यान् दहसि, एवं गुरावुक्तेऽपि अशिक्ष्यमाणे साधूनूचे, एष महानिर्धर्मोऽगीतार्थो, अलमेतस्याऽऽज्ञया, चेदेतस्य निग्रहो न क्रियते तदाऽन्ये विनंक्ष्यन्ति, एवं द्रव्यावश्यकं । भावावश्यकं द्विधा, आगमत आवश्यकज्ञाता तत्र चोपयुक्तः । १ । नोआगमतो भावावश्यकं त्रिधा, लौकिकं यत्पूर्वाह्णे भारतव्याख्याऽपराह्णे रामायणव्याख्या १, कुप्रावचनिकं चरकादीनां स्वस्वसुरस्मृतिमुख्यमनुष्ठानकरणं, लोकोत्तरं नोआगमतो भावावश्यकं ज्ञानक्रियारूपमिश्रं साधुसाध्वीश्राद्धश्राद्धिकाभिरेकांते शुद्धाशयैरुभयकालमावश्यककरणं २, यतः 'समणेण सावएण य, अवस्स कायव्वयं हवइ जम्हा । अंतो अहोनिस्सिस्स य, तम्हा आव-

स्मयं नाम ' ॥ १ ॥ अह्नो निशश्रान्ते । तथा नोआगमतो द्रव्यश्रुतं ज्ञभव्यदेहाऽतिरिक्तं पुस्तकपत्रस्थं, यद्वा सूत्रमंडजं बोंडजं कीटजं वालजं वल्कजं । भावश्रुतं आगमतो ज्ञाता उपयुक्तः । नोआगमतो लौकिकं भारतादि, लोकोत्तरं द्वादशांगावश्यकादि, एकदेशवाचिनोशब्दः श्रुतज्ञानैकदेशत्वात् । स्कन्धः समुदायः सोऽपि द्रव्यभावाभ्यां श्रुतवत्, नोआगमतो ज्ञभव्यदेहातिरिक्तो द्रव्यस्कन्धः, सचित्ताऽचित्तमिश्रस्त्रिधा द्विपद १ द्विप्रदेश २ सेनादिः ३ । भावतो नोआगमतः अयमावश्यकश्रुतस्कन्धः स्कन्धदेशत्वात् देशार्थो नोशब्दः । श्रुतविशेषाणां स्कन्धः श्रुतस्कन्धः, आवश्यकं च तत् श्रुतस्कन्धश्चेति ममागः, आवश्यकश्रुतस्कन्धस्तत्र च षडध्ययनानि तेष्वाद्यं सामायिकं, तस्य च महापुरस्येव चत्वारि अनुयोगद्वाराण्युपक्रमादीनि । अत्र नामस्थापनाद्रव्यक्षेत्रकालभावभेदात् षोढोपक्रमः । तत्र द्रव्योपक्रमः सचित्ताऽचित्तमिश्रद्रव्याणां संस्काराद्विनाशाच्च, तत्र मिश्रो भूषितनरादिः—यथा मर्त्यादीनां घृतादिना संस्कारः खड्गादिना च विनाशः, एवं क्षेत्रस्योपक्रमो वृष्ट्यादिना मलमूत्रादिना च । कालोपक्रमः शङ्कुच्छायादिनाऽपग्रहादिना च, भावोपक्रमः, स्तुत्यादिना निन्दादिना च । इह च योग्यान्नपानादिद्रव्याद्युपक्रमैः गुरुषु संस्कारभावोपक्रमं साधयन्, कुभक्तादिद्रव्योपक्रमैर्विनाशभावोपक्रमं त्यजन् सूत्रमधीते, यद्वाऽऽनुपूर्वीनामप्रमाणवक्तव्यतार्थाधिकारसमवतारभेदात् षोढोपक्रमः, तत्र नामस्थापनाद्रव्यक्षेत्रकालगणनोत्कीर्त्तनसंस्थानसामाचारीभावभेदाद्दशस्वाऽऽनुपूर्वीषु, सामायिकस्योत्कीर्त्तनागणनानुपूर्व्योः समवतारः, यथा सामायिकं चतुर्विंशतिस्तव इत्याद्युत्कीर्त्तना, आद्यं, द्वितीयं, तृतीयं, इत्यादिगणना, सा च पूर्वपश्चानानुपूर्वीभेदात्त्रिधा, तत्र पूर्वानुपूर्व्या

१ हारि० वृत्तौ तु नोआगमतस्तु ज्ञानक्रियोभयपरिणामो भावावश्यकं, उपयुक्तस्य क्रियेति भावार्थः, मिश्रवचनश्च नोशब्दः ।

सामायिकं आद्यं, पश्चानुपूर्व्यां षष्ठं, अनानुपूर्व्यां षडध्ययननिष्पन्नाष्टादशाधिकसप्तशतभङ्गरूपायां अनियतं, तत्र सामायिकप्रतिक्रमणकायोत्सर्गचतुर्विंशतिस्तववन्दनप्रत्याख्यानरूपस्य क्रमस्य १, २, ३, ४, ५, ६, अङ्कस्य पूर्वानुपूर्व्यां गणने समयप्रसिद्धः 'सामाइयं चउवीसत्थउ वंदणयं' इत्यादिक्रमः। अनानुपूर्व्यां १, ४, ५, २, ३, ६, अङ्करूपः, एकषष्टो भङ्गो ज्ञेयः, यतो विंशत्युत्तरं शतं यावत् षट्कोऽन्ते विशति, ततः क्रमेण पञ्चकाद्याः, तथा षट्कस्य पश्चाच्चतुर्विंशतिं यावत् पंचको विशति, तथा पञ्चकस्य पश्चात् षड् यावच्चतुष्कस्ततः त्रिकादयो विशन्ति, एवं २४ स्युः, ततः पंचकः पश्चात् क्रियते, चतुष्कं चतुर्विंशतिं यावत् स्थाप्यते, तथा तृतीयांकात् पश्चाद्वृद्धानुक्रमेण पंक्तिद्वये तृतीयांकः सदृशोऽधोधः स्थाप्यः, ततः पाश्चात्यौ द्वौ अंकौ एकस्यां पंक्तौ क्रमेण द्वितीयस्यामुत्क्रमेण स्थाप्यौ, एवं भङ्गा जायन्ते, यथा १२३४५६। २१३४५६। १३२४५६। ३१२४५६। २३१४५६। ३२१४५६। एष एकः प्राभृतोऽभूदेवमग्रे १२४३५६। २१४३५६। १४२३५६। ४१२३५६। इत्यादिशेषा आनुपूर्व्योऽनुयोगद्वाराद् ज्ञेयाः। नाम एकनामादि दशनामान्तं। यथाऽनुयोगद्वारेषूक्तं। तत्र षड्भावान्तः—क्षायोपशमिके भावे सामायिकस्यावतारः, षण्णामत्वं त्वौदयिकादीनां भावानां षट्त्वात् २। प्रमाणं चतुर्धा द्रव्यप्रमाणं प्रस्थादि, क्षेत्रप्रमाणं अङ्गुलादि, कालप्रमाणं समयादि, भावप्रमाणं त्रिधा गुणनयसंख्याभेदात्। गुणप्रमाणं द्विधा जीवगुणप्रमाणं अजीवगुणप्रमाणं च। तत्र सामायिकस्य जीवगुणत्वात् जीवगुणप्रमाणेऽवतारः। तत्राऽपि ज्ञानदर्शनचारित्रेषु ज्ञानेऽवतारः बोधात्मकत्वात्, तच्च ज्ञानं प्रत्यक्षानुमानोपमानागमरूपं, तत्राऽगमेऽवतारः, तत्राऽपि लोकोत्तरे न तु लौकिके, तत्राऽपि सूत्राऽर्थोभयरूपे त्रिविधेऽपि। नयप्रमाणे त्वधुना मूढनयत्वान्नावतारः। संख्या च नामस्थापनाद्रव्यक्षेत्रकालभावौप-

कालिकश्रुतपरिमाणसंख्यायां अवतारः, कालवेलावर्जकाले पाठात् ।
यथाऽनुयोगद्वारे । तत्र म्यपरिमाणभेदादष्टधा, संख्यातवर्णमानं अर्थतस्त्वनन्तं, अनन्तपर्यायत्वात् । ३ । वक्तव्यता स्वस-
कालग्रहणापेक्षया तूत्कालिके श्रुते । तच्च सूत्रतः अवतारस्तस्य परसमयस्यापि सम्यग्दृष्टिपठितस्य
मयपरसमयोभयभेदात् त्रिधा, तत्राद्यायां अवतारः । एवं परसमयेऽपि प्रतिद्वारं उक्त एव । ६ । अथ निक्षेपः
स्वसमयोपकारित्वात् । ४ । अर्थाधिकारः सावद्यविरतिः । ५ । समवतारस्तु अंगश्रुतस्कन्धाध्ययनादिशब्दरूपं । तत्र ओघेन निष्पन्ने
ओघनिष्पन्नो नामनिष्पन्नः, सूत्रालापकनिष्पन्नश्च, ओघः सामान्यं निक्षेपे कृते भावाध्ययनं इदं ज्ञेय, अधिकं
निक्षेपे सामायिकं अध्ययनं उच्यते । ततो नामस्थापनाद्रव्यभावैरध्ययनस्य निक्षेपे तु सामायिकं नाम, तदपि नामादिभिश्चतुर्धा
अयनं मार्गः बोधस्य संयमस्य मोक्षस्य वा इदमित्यध्ययनं । नामनिष्पन्ने स चाग्रे वक्ष्यते । अथानुगमः ओघादिभिर्निक्षिप्तस्य
निक्षेप्यं । सूत्रालापकनिष्पन्ननिक्षेपः सूत्रपदानां नामादिभिन्यासः, सूत्रानुगमः सूत्रव्याख्या, निर्युक्त्याऽनुगमो निर्युक्त्यनुगमः ।
व्याख्यारूपः स च सूत्रानुगमो निर्युक्त्यनुगमश्च, सूत्रेणानुगमः निक्षेपनिर्युक्तिर्नामादिभिर्निक्षिप्य व्याख्या, सा च निक्षेपद्वार एवोक्ता
निर्युक्तिस्त्रिधा निक्षेपोपोद्घातसूत्रस्पर्शिभेदात्, शास्त्रोत्पत्तिरूपस्य व्याख्या, 'उद्देसे निद्देसे' इत्यादिका । सूत्रस्पर्शिनिर्युक्तिस्त्वग्रे
ज्ञेया, उपोद्घातनिर्युक्तिरुपोद्घातस्य निर्युक्तीनामन्ते वक्ष्यते । अधुना उपोद्घातस्य प्रस्तावः, उपक्रमनिक्षेपाभ्यां उप समीपं
वक्ष्यते । नयरूपं तुर्यमनुयोगद्वारं तु विचारणमुपोद्घातस्तत्प्रारंभे नोआगमतो भावमङ्गलमाह–'तित्थयरे'
प्राप्तस्य उत्प्राबल्येन उद्देशनिर्देशनिर्गमादिप्रकारैर्हननं

तित्थयरे भगवंते, अणुत्तरपरक्कमे आमियनाणी । तिण्णे सुगइगइगए, सिद्धिपहपदेसए वंदे ॥ ८० ॥

तीर्थकरान्, भगवतः सर्वैश्वर्ययुक्तान्, अनुत्तरपराक्रमान् सर्वोत्कृष्टशक्तीन्, अमितज्ञानिनस्तीर्णान्, सुष्ठुगतिर्येषां ते सुगतयः सिद्धाः तेषां गतिः सिद्धिस्तां गतान्, सिद्धिपथप्रदेशकान्, वन्दे स्तौमि ॥ ८० ॥ 'वंदा'

**वंदामि महाभागं, महामुणिं महायसं महावीरं । अमरनररायमहिअं, तित्थयरमिमस्स तित्थस्स ॥८१॥**

महान् भागो भाग्यं यस्य ( स तं ) मनुते वेत्ति त्रैलोक्यमिति मुनिः महान्तं मुनिं केवलिनं महामुनिं, महायशसं, अस्य वर्तमानस्य तीर्थस्य तीर्थकरं ॥ ८१ ॥ 'इक्का'

**इक्कारसवि गणहरे, पवायए पवयणस्स वंदामि । सव्वं गणहरवंसं, वायगवंसं पवयणं च ॥ ८२ ॥**

प्रवाचकान् प्रवक्तॄन्, प्रवचनस्य द्वादशाङ्गस्य, गणधरवंशं आचार्यसंततिं, वाचकवंशं उपाध्यायसंततिं प्रवचनं आगमं च, वन्दे स्तौमि ॥ ८२ ॥ 'ते वं'

**ते वंदिऊण सिरसा, अत्थपुहुत्तस्स तेहि कहियस्स । सुयनाणस्स भगवओ, निज्जुत्तिं कित्तइस्सामि ।८३।**

तानर्हदादीन् शिरसा वन्दित्वा अर्थो वाच्यं, अर्थात् कथंचिद्भिन्नत्वात्सूत्रं पृथगुच्यते, प्राकृतत्वाच्च पृथगेव पृथक्त्वं, अर्थश्च पृथक्त्वं च अर्थपृथक्त्वं तस्य सूत्रार्थोभयरूपस्य, श्रुतज्ञानस्य, तैर्जिनादिभिः, कथितस्य भगवतः पूज्यस्य निर्युक्तिमिथः सूत्रार्थयोर्नियोजनं, यद्वाऽर्थस्य अर्थेन वा पृथुत्वं विस्तीर्णत्वं विद्यते यत्र तस्य, कीर्त्तयिमिष्यामि वक्ष्ये ॥ ८३ ॥ 'आव'

**आवस्सगस्स दसकालिअस्स, तह उत्तरज्झमायारे । सूयगडे निज्जुत्तिं, वुच्छामि तहा दसाणं च ॥८४॥**

उत्तराध्ययनाचारांगयोः, मोऽलाक्षणिकः, सूत्रकृतो, दशानां दशाश्रुतस्कन्धे ख्यातानां निर्युक्तिं वक्ष्यामि ॥८४॥ 'कप्प'

**कप्पस्स य निज्जुत्तिं, ववहारस्सेव परमणिउणस्स। सूरिअपण्णत्तीए, वुच्छं इसिभासिआणं च ॥८५॥**

एवश्चार्थे, ग्रन्थकर्त्तुः परमनिपुणत्वात्तद्ग्रन्थोऽपि परमनिपुणः, सूर्यप्रज्ञप्तेः वक्ष्ये, ऋषिभाषितानां देवेन्द्रस्तवादीनां ॥ ८४ ॥ 'एते'

**एतेसिं निज्जुत्तिं, वुच्छामि अहं जिणोवएसेणं। आहरणहेउकारण—पयनिवहमिणं समासेणं ॥८६॥**

एतेषां निर्युक्तिं सार्थकां वक्ष्ये, विशेषतस्तु 'इणं' इमां आवश्यकनिर्युक्तिं, आहरणं दृष्टान्तः, हेतुर्यथाऽसौ अग्निमान् धूमवत्वात्, कारणं युक्तिमात्रं यथाऽसौ सुशीलत्वाद् यशस्वी, तेषां पदनिवहो यस्यां तां, आहरणहेतुकारणपदनिवहां समासेन संक्षेपेण ॥ ८५ ॥ 'सामा'

**सामाइयनिज्जुत्तिं, वुच्छं उवएसियं गुरुजणेणं। आयरियपरंपरएण, आगयं आणुपुव्वीए ॥८७॥**

आवश्यकनिर्युक्तावपि प्राक् सामायिकनिर्युक्तिं वक्ष्ये, गुरुजनेन ममोपदिष्टां, तस्याऽपि मम गुरोरपि आचार्यपारंपर्येणागतां आनुपूर्व्येति सूत्रतोऽर्थतः क्रियातः क्रमेण, यथा मृगावतीकृते प्रद्योतोपक्रमादवन्तीवप्रशिला जनहस्तपारंपार्येणाऽनुक्रमेणागतास्तथैव स्थापिताः, वप्रस्तथास्थ एवाभूत् ॥ ८७ ॥ 'निज्जु'

**णिज्जुत्ता ते अत्था, जं बद्धा तेण होइ निज्जुत्ती। तहावि य इच्छावेइ, विभासिउं सुत्तपरिवाडी ॥८८॥**

सूत्रे निश्चयेन युक्ता एव सन्तो यदर्था अत्र बद्धा योजितास्तेन निर्युक्तानां युक्तिर्निर्युक्तिर्मध्यपदलोपी समासः, चेत्सूत्रे बद्धास्तदा किं निर्युक्त्येत्याह—तथापि ' च ' एवार्थे दुर्ज्ञेयत्वात्सूत्रपरिपाटिरेव विभाषितुं अर्थान्निर्युक्तिं, एष्यति वाञ्छयति ॥ ८८ ॥ इह तैरर्हदादिभिः कथितस्य श्रुतज्ञानस्येति यदुक्तं तत्र तेषां कथनविधिमाह—' तव '

**तवनियमनाणरुक्खं, आरूढो केवली अमियनाणी। तो मुयइ नाणवुट्ठिं, भवियजणविबोहणट्ठाए ॥८९॥**

नियम इन्द्रियमनःसंवरः, ज्ञानं सम्यग् बोधः, तद्रूपं वृक्षमारूढः। इह श्रुतावधिमनःपर्यायकेवलभेदाच्चतुर्धा केवलीति पुनरमितज्ञानीतिपदं, स च अर्हन् ततो मतिज्ञानहेतुवाग्वृष्टिं भविकजनविबोधनार्थाय मुञ्चति ॥ ८९ ॥ ' तं बु '

**तं बुद्धिमएण पडेण, गणहरा गिण्हिउं निरवसेसं। तित्थयरभासियाइं, गंथंति तओ पवयणट्ठा ॥९०॥**

गणधरास्तां निरवशेषां बुद्धिमयेन पटेन गृहीत्वा ततः प्रवचनार्थं तीर्थकरभाषितानि सूत्रतया ग्रथ्नन्ति ॥ ९० ॥ 'घित्तुं'

**घित्तुं च सुहं सुहगणणधारणा दाउं पुच्छिउं चेव। एएहिं कारणेहिं, जीयंति कयं गणहरेहिं ॥ ९१ ॥**

जिनोक्तं ग्रथितं ग्रहीतुं सुखं स्यात्, गुणनधारणे सुखंस्तः, दातुं प्रष्टुं च सुखं। एतैः कारणैर्जीतं, पूर्वगणधराचार इति गणधरैर्ग्रथनं कृतं ॥ ९१ ॥ ' अत्थं '

**अत्थं भासइ अरहा, सुत्तं गंथंति गणहरा निउणं। सासणस्स हियट्ठाए, तओ सुत्तं पवत्तइ ॥९२॥**

निपुणं सूक्ष्मार्थत्वाच्चिगणधराः, शासनहितार्थाय सूत्रं गथ्नन्ति ॥ ९२ ॥ ननु सूत्रं किमादीत्याद्याह—' सामा '

सामाइयमाईयं, सुयनाणं जाव विन्दुसाराओ। तस्सवि सारो चरणं, सारो चरणस्स निव्वाणं ॥९३॥

सामायिकादि विन्दुसारं चतुर्दशं पूर्वं यावत्, तस्य श्रुतज्ञानस्य, अपि शब्दात् सम्यक्त्वस्य सारश्चरणं चारित्रं तस्य, निर्वाणं मोक्षः सारः। अथ ज्ञानक्रियानयावुद्दिश्योपदेशाय गाथा दशाह ॥ ९३ ॥ 'सुअ'

सुअनाणंमिवि जीवो, वट्टंतो सो न पाउणइ मोक्खं। जो तव संजममइए, जोए न चएइ वोढुं जे ॥९४॥

श्रुतज्ञाने अपिशब्दात् मत्यादिष्वपि वर्तमानः स मोक्षं न प्राप्नोति, यस्तपःसंयममयान् योगान् वोढुं न शक्नोति, 'जे' पादपूर्त्यै ॥ ९४ ॥ 'जह'

जह छेयलद्धनिज्जामओवि, वाणियगइच्छियं भूमिं। वाएण विणा पोओ, न चएइ महण्णवं तरिउं ॥९५॥

लब्धः छेको निर्यामको वेडावाहो येन, सोऽपि पोतो वातेन विना महार्णवं तीर्त्वा वणिगिष्टां भूमिं प्राप्तुं न शक्नोति ॥ ९५ ॥ 'तह'

तह नाणलद्धनिज्जामओवि, सिद्धिवसहिं न पाउणइ। निउणो वि जीवपोओ, तवसंजममारुअविहूणो॥९६॥

तथा लब्धज्ञाननिर्यामकोऽपि जीवपोतः सिद्धिवसतिं मुक्तिस्थानं न प्राप्नोति, तपःसंयममारुतविहीनः ॥ १७ ॥ 'संसा'

संसारसागराओ, उव्वुड्डो मा पुणो निबुड्डिज्जा। चरणगुणविप्पहीणो, बुड्डइ सुबहुंपि जाणंतो ॥९७॥

संसारसागरात् उद्त्रुडितः प्राप्तनृभवादिरपि मा पुनर्निमज्जेत्, चरणगुणाश्चारित्रगुणाः तैर्विप्रहीणो रहितः सुबह्वपि जानन्

त्रुडति ॥ ९७ ॥ ' सुब० '

सुबहुंपि सुयमहीयं किं काही ? चरणविप्पहीणस्स ।
अंधस्स जह पलित्ता, दीवसयसहस्सकोडीवि ॥ ९८ ॥

सुबह्वपि श्रुतमधीतं चरणगुणहीनस्य किं करिष्यति यथा अन्धस्य दीपशतसहस्रकोट्यपि ' पलित्ता ' प्रदीप्ता किं करिष्यति ॥ ९९ ॥ ' अप्पं '

अप्पंपि सुयमहीयं, पयासयं होइ चरणजुत्तस्स। इक्कोवि जह पईवो, सचक्खुअस्सा पयासेइ ॥९९॥

अल्पमपि श्रुतं सचक्षुपः, प्राकृतत्वादाकारः ॥ ९९ ॥ ' जहा '

जहा खरो चंदणभारवाही, भारस्स भागी नहु चंदणस्स ।
एवं खु नाणी चरणेण हीणो, नाणस्स भागी नहु सोग्गईए ॥ १०० ॥

खुरेवार्थे ज्ञानस्य भागी ज्ञानपाठनाद्युत्थक्लेशभागी, न तु सुगतेः ॥ १०० ॥ ' हयं '

हयं नाणं कियाहीणं, हया अन्नाणओ किया। पांसतो पंगुलो दड्ढो, धावमाणो अ अंधओ ॥१०१॥

स्पष्टा ॥ १०१ ॥ ततः ' संजो '

संजोगसिद्धीइ फलं वयंति, न हु एगचक्केण रहो पयाइ ।
अंधो य पंगू य वणे समिच्चा, ते संपउत्ता नगरं पविट्ठा ॥ १०२ ॥

ज्ञानक्रियासंयोगसिद्ध्या फलं मोक्षं, यतो वने दवे लग्ने अन्धपङ्गू समेत्य मिलित्वा तौ संप्रयुक्तावेव सन्तौ नगरं प्रविष्टौ । १०२ । ' णाणं '

णाणं पयासगं, सोहओ तवो संजमो य गुत्तिकरो ।
तिण्हंपि समाजोगे, मोक्खो जिणसासणे भणिओ ॥ १०३ ॥

यथा गृहशुद्धौ दीपप्रकाशाद् भृत्यः कचवरोज्झनात्, जालादिपिधानकचवरागमनिरोधादुपकुर्युस्तथा जीवशुद्धौ ज्ञानं शुभाशुभप्रकाशकं, क्रिया तु तपःसंयमात्मकेति, तत्र तपो दुःकर्मकचवरशोधकं, संयम आगन्तुककर्मकचवररोधित्वाद् गुप्तिकरः । १०३ । अथ श्रुतादिसामायिकाप्तिः कथं स्यादिति गाथा द्वादशाह—' भावे ' ।

भावे खओवसमिए, दुवालसंगंपि होइ सुयनाणं । केवलियनाणलंभो नन्नत्थ खए कसायाणं ॥१०४॥

भावे क्षायोपशमिके भावे सति द्वादशाङ्गं अपिशब्दान्मत्यवधिमनोज्ञानानि, सामायिकचतुष्कं च स्यात, कैवल्यं घातिकर्मवियोगस्तेन ज्ञानं तस्य लाभः नान्यत्र किन्तु कषायाणां क्षये एव क्षायिके भावे इति ॥ १०४ ॥ ' अट्ठ '

**अट्ठण्हं पयडीणं, उक्कोसठिइइ वट्टमाणो उ । जीवो न लहइ सामाइयं, चउण्हंपि एगयरं ॥ १०५ ॥**

अष्टानां ज्ञानावरणादिकर्मप्रकृतीनां उत्कृष्टस्थितौ वर्त्तमानो जीवः, चतुर्णामपि सम्यक्त्वश्रुतदेशविरतिसर्वविरतीनामेकतरत् सामायिकं न लभते, सिद्धान्ते सम्यक्त्वादीनां चतुर्णामपि सामायिकनामत्वात्, तत्र 'मोहे कोडाकोडी सत्तरी वीस नामगुत्तेसु । सेसेसु य तीसं पुण तित्तीसयराउ आउम्मि ॥ १ ॥ एसा उक्कोसठिई अट्ठेव मुहत्त नामगुत्तेसु । बारस वेयणीयम्मी सेसाणेगं जहन्न ठिई, ॥ २ ॥ सप्तोत्कृष्टस्थितौ चतुर्णां पूर्वप्रपन्नोऽपि न स्याद्यतः सम्यक्त्वी ग्रन्थिमुल्लंघ्योत्कृष्टस्थितिर्न बध्नाति, तु शब्दात् जघन्यस्थितावपि वर्त्तमानः पूर्वप्रपन्नत्वान्न प्रपद्यमानः, आयुष उत्कृष्टस्थितौ उपपातकाले अनुत्तरसुराः पूर्वप्रपन्नाः स्युर्न प्रपद्यमानाः, नारकास्तु उत्कृष्टायुषो न पूर्वप्रपन्ना नापि प्रपद्यमानाः, आयुषि हीयमाने तु सम्यक्त्वं लभन्तेऽपि, आयुर्जघन्यस्थितौ नोभये यतः सा क्षुल्लभवग्रहणे तस्य ( क्षुल्लकभवस्य ) प्रायो वनस्पतिषु संभवात्, सम्यग्दृशस्तत्राऽनुत्पादात् । इह यदा मोहस्योत्कृष्टा स्थितिस्तदान्येषामपि सैव, आयुषस्तूत्कृष्टा मध्या वा न तु जघन्या, अन्यतमस्याः प्रकृतेरुत्कृष्टस्थितौ मोहं विना शेषाणां स्थितिः उत्कृष्टा मध्या वा स्यात्, मोहस्य तु मध्या तथा मोहस्य जघन्या स्थितिरनिवृत्तिबादरेऽन्येषां तु सूक्ष्मसम्पराये ॥ १०५ ॥ 'सत्त'

**सत्तण्हं पयडीणं, अब्भिंतरओ उ कोडिकोडीणं । काऊण सागराणं, जइ लहइ चउण्हमण्णयरं॥१०६॥**

सप्तानां कर्मणां सागराणां अन्त्यकोटाकोटेरभ्यन्तरत आत्मानं कृत्वा यदि लभते कोऽपि चतुर्णामन्यतरत् सामायिकं

यदा च सप्तानां कोटाकोटी पल्यासंख्यभागहीना स्यात् तदा घनरागद्वेषपरिणामोऽत्यन्तदुर्भेद्यदारुग्रन्थिवत् कर्मग्रन्थिरुदेति तस्मिंश्च भिन्ने एव सम्यक्त्वादिलाभः स्यात्। इह भव्यानां करणत्रयं स्यात्, करणं च परिणामविशेषः, तत्र आद्यं करणं अनादिकालाद्यथैव प्रवृत्तं यथाप्रवृत्तं करणं ग्रन्थिं यावत्। १। ततो द्वितीयमप्राप्तपूर्वं अपूर्वकरणं ग्रन्थिमतिक्रामतां। २। ततस्तृतीयं न निवर्त्तनशीलं अनिवृत्तिकरणं सम्यक्त्वाप्तिं यावत्। ३। अभव्यानां त्वाद्यमेव ॥ १०६ ॥ 'पल्ल'

पल्लय १ गिरिसरिउवला २ पिवीलिया ३ पुरिस ४ पह ५ जरग्गहिया ६।

कुद्दव ७ जल ८ वत्थाणि ९ य सामाइयलाभदिट्ठन्ता ॥ १०७ ॥

एते सम्यक्त्वसामायिकलाभे दृष्टान्ताः, तत्र पल्यो धान्यस्थानं स यथाऽल्पान्नक्षेपे बह्वन्नशोधने च काले क्षीयते, तथात्मा कर्मपल्येऽल्पकर्माणूनां क्षेपे बहूनां च शोधनेऽनाभोगाद्यथाप्रवृत्तकरणेनाऽल्पकर्म्मीभवन् ग्रन्थिमाप्याऽपूर्वकरणेन तामुल्लंघ्यानिवृत्तिकरणेन सम्यक्त्वमाप्नोति। १। गिरिसरिदुपलोऽन्योन्यघर्षेण वृत्तत्वमेत्येवमाद्यकरणेनात्मा ग्रन्थिं। २। पिपीलिकाः कीटिकाः तासां यथा क्षितौ गतिः। १। स्थाण्वारोहः। २। सपक्षाणां ततोऽप्युत्पातः। ३। कासांचित् स्थाणुतले स्थानं। ४। कासांचित्ततोऽवसर्प्पणं च। ५। तथात्मनां क्रमाद्यथाप्रवृत्ता। १। ऽपूर्वा। २। ऽनिवर्त्तिकरण। ३। ग्रन्थि-देशस्थिति। ४। पुनः कर्मस्थितिवर्धनानि। ५। अथ पुरुषाः—अटव्यां त्रिषु नृषु पुरं प्रति व्रजत्सु सप्ततियोजनमाने पथि एकोनसप्ततियोजनैरतिक्रान्तैर्भीस्थाने रौद्रौ स्तेनौ वीक्ष्यैको वलितो, द्वितीयस्ताभ्यां धृतः, तृतीयस्तौ विलंघ्य सप्ततितमं

योजनं गतः पुरं प्राप्तः, एवं भवाटव्याः सम्यक्त्वपुरं यातां पन्थाः सप्ततिकोटीकोटिमाना दीर्घकर्मस्थितिः, तत एकोनसप्ततिकोटीकोट्यामतिक्रान्तायां भीस्थानं ग्रन्थिश्चोरौ रागद्वेषौ, स तत्र चलितो यो दुष्टाशयेन पुनर्दीर्घकर्मस्थितिकृत्, चौरधृतस्तु प्रबलरागद्वेषोदयो ग्रन्थिकसत्त्वः, तृतीयो ग्रन्थिभेत्ता । ४ । पथभ्रष्टः कोऽपि स्वयमेव मार्गं लभते, कोऽप्युपदेशेन कोऽपि नैव तथा जीवः सम्यक्त्वमपि । ५ । ज्वरगृहीतस्य कस्यापि ज्वरः स्वयं याति, कस्याप्यौषधैः, कस्यापि नैव, एवं मिथ्यात्वज्वरोऽपि । ६ । कोद्रवाणां केषांचिन् मदनभावः स्वयमेव कालान्तरेण याति, केषांचिद् गोमयादिभिः, केषांचिन्नैव तथात्मनां मिथ्यात्वं, अयं भावः–कोऽप्यनादिमिथ्यात्वी गुरूपदेशेन स्वयं वा लब्धेनाऽपूर्वकरणेन शुद्धार्धशुद्धाशुद्धमदनकोद्रवानिव मिथ्यात्वपुद्गलान् सम्यक्त्वमिश्रमिथ्यात्वभेदेन त्रिपुंजीकृत्याऽनिवर्तिकरणेन शुद्धपुञ्जोदयात् क्षायोपशमिकसम्यक्त्वं लभते, पुञ्जत्रयस्थापना □ □■ ■ कोऽपि पुनरपूर्वकरणेन ग्रन्थिं भित्त्वा विशिष्टतरविशुद्ध्यात्मकमनिवर्त्तिकरणमनुभवन् मिथ्यात्वस्थितेरुदयक्षणादारभ्यान्तर्मुहूर्त्तादुपरि तत् प्रदेशवेद्यमिथ्यात्वदलिकवेदनाऽभावरूपमन्तरकरणं करोत्यऽस्मिंश्च कृते मिथ्यात्वमोहनीयस्य स्थितिद्वयं स्यात्, आद्यान्तरकरणादधस्तनी अन्तर्मुहूर्तमात्रा स्थितिः, अन्या तस्मादेवोपरितना अन्तर्मुहूर्त्तोनाऽन्तःसागरकोटीकोटिमाना, स्थापना– ■□■ तत्राद्यस्थितौ मिथ्यात्वदलिकवेदनादसौ मिथ्यात्व्येव, अन्तर्मुहूर्त्तेन पुनस्तस्यामधस्तनस्थितौ क्षपितायामन्तरकरणाद्यसमये मिथ्यात्वदलिकवेदनाऽभावादौपशमिकं सम्यक्त्वमाप्नोति, पुञ्जत्रयं त्वसौ न करोत्येव । ततश्चौपशमिकसम्यक्त्वाच्यवन्, जघन्यं समयेनोत्कृष्टं षडावलिषु शेषास्वनन्तानुबन्ध्युदयः स्यात्, तदा च सास्वादनसम्यक्त्वं लभते, ततो जघन्यतः समयात् उत्कृष्टतः षडावलिकाभ्यः पुनरूर्ध्वमवश्यं

मिथ्यात्वोदयादसौ मिथ्यात्वी स्याद्, ततः पुनरपूर्वानिवृतिकरणाभ्यां क्षायोपशमिकसम्यक्त्वं लभते, सैद्धान्तिकानां मतमिदं, कार्मग्रन्थिकानां तु अन्तरकरणे औपशमिकसम्यक्त्वं लब्ध्वा तेन मिथ्यात्वस्य पुंजत्रयं करोत्येव, ततश्च्युतोऽसौ तत्त-त्पुंजोदयात् क्षायोपशमसम्यक्त्वी मिश्रो मिथ्यात्वी वा स्यात्, अभव्योऽपि कश्चिद्यथाप्रवृत्ताद्ग्रन्थिं लब्ध्वा तत्र स्थितोऽर्ह-दादिश्रीदर्शनाद्धेत्वंतराद्वा एकादशाङ्गरूपं श्रुतसामायिकं लभते, न शेषाणि। तथा, 'जलवत्थाणी' ति जलवस्त्रे मलिनार्धशुद्ध-शुद्धभेदेन त्रिधा तथा दर्शनमपि मिथ्यामिश्रसम्यग्भेदं। ८-९। सम्यक्त्वलाभादनु शेषसप्तकर्मणां पल्यपृथक्त्वस्थितिक्षये देशविरतिस्ततः पृथक् पृथक् संख्येयसागरस्थितिक्षये सर्वविरत्युपशमक्षपकश्रेण्याप्तिः स्यात्, इयं चेयत्कालतो देशविरत्या-द्याप्तिः उत्कृष्टतो पतितसम्यक्त्वस्य देवनरेषूत्पद्यमानस्य स्यादऽन्यथाऽन्यतरश्रेणिवर्जसम्यक्त्वाद्याप्तिरेकभवेऽपि स्यात् कर्मग्रन्थाऽऽशयेन तु श्रेणिद्वयमपि ॥ १०७ ॥ 'पढ'

**सम्मद्दंसणलंभं, भवसिद्धीयावि न लहंति ॥१०८॥**

**पढमिल्लुयाण उदए, नियमा संजोयणा कसायाणं।**

प्रथमिल्लुकानां देश्युक्त्या प्रथमानां, प्राथम्यादि चैषां सम्यक्त्वमुख्यप्रथमादिगुणघातित्वात् क्षपणक्रमाद्वा, 'उदये' उदीरणावलिकागततत्पुद्गलोद्भूतसामर्थ्ये संयोजयन्ति भवेनात्मनामिति संयोजनाख्याः क्रोधमानमायालोभाः कषाया अन-न्तानुबन्धिनस्तेषां, भवे तस्मिन् सिद्धिर्येषां ते भवसिद्धिका अपि नियमात् सम्यग्दर्शनलाभं न लभन्ते। १०८। 'बिइ'

**सम्मद्दंसणलंभं, विरयाविरइं नउ लहंति ॥ १०९ ॥**

**बिइयकसायाणुदए, अपच्चक्खाणनामधेज्जाणं।**

न विद्यते प्रत्याख्यानं देशविरतिर्येषां तेऽप्रत्यख्याननामधेयाः सम्यग्दर्शनलाभं लभन्ते, न तु विरताविरतिं देशविरतिं ॥ १०९ ॥ 'तइ'

**तइयकसायाणुदए, पच्चक्खाणावरणनामधिज्जाणं। देसिक्कदेसविरइं, चरित्तलंभं न उ लहंति ॥११०॥**

प्रत्याख्यानं सर्वविरतिरूपं आवृण्वन्तीति प्रत्याख्यानावरणास्तन्नामधेयं नाम येषां ते, देशो महाव्रतापेक्षया स्थूलप्राणातिपातविरतिः एकदेशस्तु महाव्रतस्यैव यथाहृश्यवनस्पतिकायाद्यतिपातस्तयोर्विरतिं लभन्ते न तु चारित्रलाभं ॥ ११० ॥ 'मूल'

**मूलगुणाणं लंभं, न लहइ मूलगुणघाइणं उदए। उदए संजलणाणं, न लहइ चरणं अहक्खायं ॥१११॥**

सम्यक्त्वाणुव्रतमहाव्रतानि मूलगुणाः (तेषां) घातिनां संयोजनादीनां उदये मूलगुणानां लाभमुक्तरीत्या न लभन्ते, सं ईषत् ज्वलन्तीति संज्वलनाः यथाख्यातं निष्कषायं चारित्रं ॥ १११ ॥ 'सव्वे'

**सव्वेवि अ अइयारा, संजलणाणं तु उदयओ हुंति। मूलच्छिज्जं पुण होइ, बारसण्हं कसायाणं ॥११२॥**

सर्वेप्यालोचनादिच्छेदान्तप्रायश्चित्तशोध्याः अतिचाराः, तुरेवार्थः संज्वलनानामेवोदये स्युः। इह क्रोधमानमायालोभाश्चत्वारः कषाया एकैकः, संज्वलनप्रत्याख्यानाऽप्रत्याख्यानानंतानुबन्धिभेदक्रमात् पक्षचतुर्मासवर्षजन्मावधिः स्यात्, तेन षोडश कषायाः स्युः, तेषु प्रत्याख्यानक्रोधादीनां द्वादशानां उदये मूलच्छेद्यं चारित्रदेशविरत्याद्युच्छेदः स्यात् ॥ ११२ ॥ 'बार'

**बारसविहे कसाए, खइए उवसामिए व जोगेहिं। लब्भइ चरित्तलंभो, तस्स विसेसा इमे पंच ॥११३॥**

योगैः शुभमनोवाक्कायव्यापारैर्द्वादशविधे कषाये क्षपिते विध्याताऽग्निवत्, उपशमिते भस्मच्छन्नाऽग्निवत्, क्षायोपशमिते वार्धविध्याताऽग्निवत् चारित्रलाभो लभ्यते तस्य चारित्रस्य विशेषा भेदा इमे वक्ष्यमाणाः ॥ ११३ ॥ ' सामा '

**सामाइयं च पढमं, छेओवट्ठावणं भवे बीयं। परिहारविसुद्धीयं, सुहुमं तह संपरायं च ॥ ११४ ॥**

समानां ज्ञानदर्शनचारित्राणां आयः समायः स एव सामायिकं सर्वसावद्यनियमरूपं, तद् द्विधा इत्वरं यावत्कथिकं च, तत्र इत्वरं छेदोपस्थापनाऽपेक्षयाऽल्पकालं भरतैरवतेष्वाद्यान्त्यार्हत्तीर्थेऽनारोपितव्रतस्य शिष्यस्य, यावत्कथिकं तु यावत्कथाऽऽत्मनो यावज्जीवमिति, मध्यमजिनविदेहार्हन्मुनीनां उपस्थापनाऽभावात् सामायिककाल एव व्रतारोपाच्च। १। चः पादपूर्त्यै, प्राक्पर्यायच्छेदेन महाव्रतानां उपस्थापनं यत्र तच्छेदोपस्थापनं द्वितीयं चारित्रं भवेत्, तद् द्विधा अनतिचारं सातिचारं च, तत्राऽनतिचारं इत्वरसामायिकयुक्तशिष्यस्योपस्थापने तीर्थांतरसंक्रान्तौ वा, यथा पश्चाद्वीरतीर्थं संक्रामतः पश्चयामप्रपत्तौ। १। सातिचारं तु मूलगुणच्छेत्तुः पुनः व्रतारोपः। २। परिहारेण तपो विशेषेण विशुद्धिर्यस्मिंस्तत्परिहारविशुद्धिकं द्विधा परिहारकाणां निर्विशमानकं, सेवितपरिहाराणां तु निर्विष्टकायिकं। परिहारविशुद्धिसामायिकं नवकोगणः प्रपद्यते, तत्र चत्वारः परिहारकाः चत्वारस्तद्वैयावृत्यकृतोऽनुपरिहारकाः एकस्तु कल्पस्थितो वाचनाचार्यो गुरुभूतः, तत्र ' गिम्हे चउत्थछठट्ठमाइं सिसिरे उ छठमट्ठमयं। दसमं वासासुट्ठमदसमदुवालसतवो होइ। १। एसो जहन्नमज्झुक्कोसो परिहारियाण परिहारो। पारणगे आयामं अंतिमभिक्खापणगगहणं ॥ २ ॥ उववासं वा आयामं सेसाण तवो य जाव छम्मासा। तो परिहारियणुचरा अणुचरया हुंति परिहारी ॥ ३ ॥ कप्पठिओ वि एवं छम्मासतवं करेइ सेसा उ। अणुपरिहारिगभावं वयंति कप्पट्ठियत्तं

च ॥ ४ ॥ इय अट्ठारसमासा काऊण तवं उवेंति जिणकप्पं । गच्छं वा जिणपासे पडिवज्जंता पुण हवंति ॥ ५ ॥ तित्थयरसमीवे सेवगस्स पासे व नेव अन्नस्स । एएसिं जं चरणं परिहारविसुद्धियं तं तु ' ॥ ६ ॥ इदं चारित्रं पंचयामधर्मप्रतिपत्तावेव, नान्यत्र, अस्मिश्चारित्रे स्थिता आवश्यकं कार्यं विना न वदन्ति, उत्थातुकामास्तु वदन्ति, अहमुत्थातुकामोऽस्मि, ततः परिचारकास्तच्चिंतितं सर्वं स्वयमेव विदधति । तथा परिहारकः प्रायः कायोत्सर्गस्थ एव तिष्ठेत्, न निद्राति, नवमपूर्वतृतीयवस्त्वादिश्रुतवान् नवं नाऽधीते प्रागधीतमेव स्मरेत्, प्राणान्तेऽप्यपवादं न सेवते, तथाऽक्षिमलमपि न त्यजति, एतत् सामायिकत्रिकं, क्षायोपशमिकं । ३ । सूक्ष्माः सम्परायाः कषायाः लोभांशशेषत्वाद्यत्र तत्सूक्ष्मसंपरायं तद् द्विधा विशुद्ध्यमानं संक्लिश्यमानं च, तत्र विशुद्ध्यमानं श्रेणावारोहतः । १ । संक्लिश्यमानं त्वाद्यश्रेण्याश्च्यवतः । २ । तथाशब्दो गाथाभङ्गभयात्, ॥ ११४ ॥ ' तत्तो '

**तत्तो य अहक्खायं, खायं सव्वंमि जीवलोगंमि । जं चरिऊण सुविहिआ, वच्चंतयरामरं ठाणं ॥११५॥**

यथाख्यातं यथोक्तं त्रिविधत्रिविधेन सर्वसावद्यत्यागाच्छुद्धसामायिकरूपं चारित्रं, छद्मस्थवीतरागस्योपशामकस्य क्षपकस्य वा, केवलिनस्तु सयोगिनोऽयोगिनो वा स्यात्, सर्वस्मिन् मुनिजीवलोके ख्यातं प्रसिद्धं, यच्चरित्वा सुष्ठु शोभनं विहितं अनुष्ठानं येषां, वच्चंति व्रजन्ति, मरणं मारः न जरामरौ यत्र तदजरामरं स्थानं ॥ ११५ ॥ अधिकारात् श्रेण्यावाह–' अण '

**अणदंसनपुंसित्थी, वेयछक्कं च पुरुसवेयं च । दो दो एगन्तरिए, सरिसे सरीसं उवसमेइ ॥११६॥**

शुद्धाशय आदौ युगपदन्तर्मुहूर्त्तेन अनान् अनन्तानुबन्धिन उपशमयति, एवं सर्वत्रोपशमकालोऽन्तर्मुहूर्त्तं ज्ञेयः, ततो दर्शो दर्शनमोहनीयं मिथ्यात्वमिश्रसम्यक्त्वभेदात्रिधा युगपत्, तदौपशमिकसम्यक्त्वी स्यात्, स चापूर्वकरणोऽनिवर्त्तिबादरो वेत्युच्यते, ततश्चेन्नरः प्रारब्धा तदाऽनुदीर्णमपि नपुंसकवेदं, ततः स्त्रीवेदं, ततो हास्यरत्यरतिभयशोकजुगुप्सारूपं षट्कं, ततो नृवेदं, चेत् स्त्री तदा क्लीबनृवेदषट्कांते स्त्रीवेदं, चेत् क्लीबं तदास्त्रीनृवेदषट्कान्ते क्लीबवेदं, ततो द्वौ द्वौ क्रोधाद्यो एकान्तरितौ संज्वलनान्तरितौ सदृशौ सदृशमुपशमयति, कोऽर्थः अप्रत्याख्यानप्रत्याख्यानावरणक्रोधौ युगपदुपशमय्य ततः संज्वलनक्रोधं, एवं मानमायालोभान्, तत्र संज्वलनलोभमुपशमयंस्त्रिधा कृत्वा द्वावंशौ युगपदुपशमय्य तृतीयांशं संख्येयांशान् कृत्वा पृथक् पृथक् कालेनोपशमयन्नन्त्यांशं यावद् बादरसंपरायोऽनिवर्त्तिबादरो वेत्युच्यते, ततोऽन्त्यांशं असंख्याशान् कृत्वा समये समये तानुपशमयन् सूक्ष्मसंपरायः ॥ ११६ ॥ तदुक्तं । ' लोभा '

**लोभाणुं वेअंतो, जो खलु उवसामओ व खवगो वा। सो सुहुमसंपराओ, अहखाया ऊणओ किंची ॥११७॥**

यः खलु उपशामक उपशमश्रेणिस्थः, क्षपकः क्षपकश्रेणिस्थो वा लोभस्य संज्वलनलोभस्याणून् संख्येयतमखंडस्याऽसंख्यानि खण्डानि वेदयमानोऽनुभवन् स्यात्, सोऽन्तर्मुहूर्त्तं यावत् सूक्ष्मसंपरायचारित्री स्यादयं च गुणैर्यथाख्यातचारित्रात् किंचिदूनः स्यात्, स चान्तर्मुहूर्त्तं सूक्ष्मसम्परायो भूत्वोपशान्तलोभाणुर्यथाख्यातचारित्री स्यात्। आह—सम्यक्त्वासौ आद्यकषायाणां क्षयोपशम उक्तोऽत्र चोपशामकस्ततकोऽनयोर्विशेषः ? उच्यते—क्षयोपशमे ह्युदीर्णस्य क्षयोऽनुदीर्णस्य विपाकानुभव उपशमितत्वान्नास्ति, प्रदेशानुभवस्त्वस्त्येव, उपशमे तु सोऽपि नास्ति, यच्च सम्यग्दृशां अनन्तानुबन्ध्युदयो निषिद्धः सोऽनुभ-

वकर्मांगीकृत्य न तु प्रदेशकर्म, न चैवं सम्यक्त्वघातः प्रदेशकर्मणो मन्दानुभावत्वात् । इहास्याः श्रेण्या आरब्धा आद्यसंहननत्रिके अप्रमत्तो यतिः स्यात्, अन्ये तु व्यवहारयन्ति [कषायोदयात्] अविरतो देशविरतः प्रमत्तोऽपीति । एतच्छ्रेणिप्रपन्ना चेद्बद्धायुः स्यात् तदा देवायुर्बानेव नान्यः, स चेत् श्रेणिमध्यस्थः प्रशान्तमोहो वा म्रियते तदानुत्तरेष्वेवोत्पद्यते, श्रेणिच्युतस्य त्वनियमः नानामतित्वेन नानागतिकत्वात्, अबद्धायुस्त्वन्तर्मुहूर्त्तं उपशामकयतिर्भूत्वा पुनरुदितकषायः कात्स्न्येंन श्रेणिप्रतिलोममावृत्याऽप्रमत्तः प्रमत्तो वा कोऽपि मिथ्यात्वी वा स्यात् ॥ ११७ ॥ तदाह ' उव '

**उवसामं उवणीआ, गुणमहया जिणचरित्तसरिसंपि । पडिवायंति कसाया, किं पुण सेसे सरागत्थे ? ॥११८॥**

उपशममप्युपनीता, गुणमहता नरेण, तं, जिनः केवली तत्सदृशचारित्रमपि कपायाः प्रतिपातयन्ति । किं पुनः शेषान् सरागधर्मस्थानुद्दिश्योच्यते ? ॥ ११८ ॥ ' जइ '

**जइ उवसंतकसाओ, लहइ अणंतं पुणोऽवि पडिवायं । णहु भे वीससियव्वं, थेवेय कसायसेसंमि ॥११९॥**

अनन्तमनन्तकालं संसारे प्रतिपातं, स्तोकेऽपि कपायशेषे भवद्भिर्नैव विश्वसितव्यं ॥ ११९ ॥ ' अण '

**अणथोवं वणथोवं, अग्गीथोवं कसायथोवं च । ण हु भे वीससियव्वं, थेवंपि हु तं बहुं होइ ॥१२०॥**

ऋणस्य स्तोकं, व्रणस्य स्तोकं, इहाद्या श्रेणिरेकभवे वारद्वयं एकजीवस्य, नानाभवापेक्षया वारचतुष्कं च स्यात् ॥ १२० ॥

अथ क्षपकश्रेणिः ' अण '

अण मिच्छ मीस सम्मं, अट्ठ नपुंसित्थीवेयछक्कं च। पुंवेयं च खवेइ, कोहाइए य संजलणे ॥१२१॥

उपशमश्रेणिः

सं० लोभ

अप्र० लोभ | प्र० लोभ

सं० माया

अप्र० माया | प्र० माया

सं० मान

अप्र० मान | प्र० मान

सं० क्रोध

अप्र० क्रोध | प्र० क्रोध

पुंवे०

हास्य | रति | अरति | भय | शोक | जुगुप्सा

स्त्रीवे०

न० वे०

मि० | मिश्र | स०

अन० क्रोध | अन० मान | अन० माया | अन० लोभ

क्षपकश्रेणिः

सं० लोभ

सं० माया

सं० मान

सं० क्रोध

पुं० वेद

हास्य | रति | अरति | भय | शोक | जुगुप्सा

स्त्रीवेद

न० वेद

अप्र० क्रोध | प्र० क्रोध | अप्र० मान | प्र० मान | अप्र० माया | प्र० माया | अप्र० लोभ | प्र० लोभ

सम्यक्त्व

मिश्र

मिथ्यात्व

अन० क्रोध | अन० मान | अन० माया | अन० लोभ

आरब्धा मर्त्योऽष्टवर्षेभ्योऽन्वविरतो देशविरतः, प्रमत्तोऽप्रमत्तो वा आद्यसंहननी धर्मध्यानी, पूर्वधरस्त्वप्रमत्तः शुक्लध्यान्यपि, आदौ अनन्तानुबन्धिनोऽन्तर्मुहूर्त्तेन क्षपयित्वा ततः तदनन्तांशं मिथ्यात्वे क्षिप्त्वा तेन समं मिथ्यात्वं क्षपयेत् यथा तीव्राऽग्निरर्धदग्धेन्धन एवेन्धनान्तरमासाद्योभयमपि दहेत्तथाऽसौ क्षपकोऽप्यवशेषं अग्रेतने अग्रेतने क्षिप्त्वा तेन समं क्षपयेदिति सर्वत्र ज्ञेयं। ततो मिश्रं, ततः सम्यक्त्वमोहनीयं, तदा चाऽस्य सम्यक्त्वाणूनामपि क्षये विशुद्धतरतत्त्वश्रद्धानपरिणामरूपं क्षायिकसम्यक्त्वं स्यात्, श्लक्ष्णाभ्रापगमे स्पष्टतराऽऽलोकवत्; इह चेद् बद्धायुः क्षपकः प्रपद्येतानंतानुबन्धिक्षये च तिष्ठेत्, ततः कोऽपि मिथ्यात्वोदयात्तान्पुनश्चिनुयान्मिथ्यात्वे तद्बीजभावात्, क्षीणमिथ्यात्वस्तु कषायान्नैव चिनोति। अनन्तानुबन्धिक्षये सप्तकक्षये वाऽपतितपरिणामो मृतः सुर एव स्यात्, पतितपरिणामस्तु नानामतित्वात् सर्वगतिभाग्, तत्रापि देवेषु वैमानिकेषु नृतिर्यक्षु चाऽसंख्यवर्षायुष्केषु यातीति चूर्णौ। इह क्षायिकसम्यक्त्वी चेत् स्वर्नरके वा यायात् ततो नृत्वं प्राप्य सिद्ध्येत्, चेत्तिर्यङ्नृषु याति, तदा स्वर्गत्वा नृत्वमाप्य सिध्येदिति। सम्यक्त्वक्षयेऽनिवर्त्तिबादर उच्यते, बद्धायुस्तुसप्तके क्षीणे तिष्ठत्येव, सम्यक्त्वशेषं चाग्रे न क्षिपेत्, अबद्धायुस्तु सर्वां श्रेणीं समापयत्येव स च सम्यक्त्वान्त्यांशं अप्रत्याख्यानप्रत्याख्यानरूपकषायाष्टकान्तः क्षिप्त्वा तेन सम युगपदष्टकक्षयमारभते, तन्मध्यांशं च क्षिपयन् ॥ १२१ ॥ 'गइ' 'साहा'

**गइआणुपुव्वी दो दो, जाइ नामं च जाव चउरिंदी। आयावं उज्जोयं, थावरनामं च सुहुमं च ॥१२२॥**

**साहारणमपज्जत्तं, निद्दानिद्दं च पयलपयलं च। थीणं खवेइ ताहे, अवसेसं जं च अट्ठण्हं ॥१२३॥**

क्षपक-
श्रेणिः ॥

नरकगति १ नरकानुपूर्वी २ तिर्यग्गति ३ तिर्यगानुपूर्वी ४ जातिनाम एकेन्द्रियजातिनाम यावच्चतुरिन्द्रियजातिनाम
८ आतप ९ उद्योत १० स्थावर ११ सूक्ष्म १२ साधारणा १३ ऽपर्याप्तनामानि १४ निद्रानिद्रा १५ प्रचलाप्रचला १६
स्त्यानर्द्धि १७ अमूः प्रकृतीः क्षपयित्वाऽष्टानां शेषं क्षपयेत्; तत्र चूर्णौ प्रकृतयः षोडश सन्ति, आतपोद्योतयोः स्थाने
चाऽशुभविहायोगतिरस्ति, भाष्ये तु षोडशसंख्योक्ताऽपर्याप्तनाम च नास्ति, ततस्तत्त्वज्ञा विदन्ति, ततो नपुंसकाद्युपशमश्रेणि-
वद्वेयं, तत्र नपुंसकवेदं, ततः स्त्रीवेदं, ततो हास्यादि षट्कं, ततः पुंवेदं क्षपयंस्तं त्रिधा कृत्वांशद्वयं युगपत्क्षपयित्वा तृतीयांशं
संज्वलनक्रोधे क्षिप्त्वा तं त्रिधा कृत्वांशौ क्षपयित्वा तृतीयांशं संज्वलनमाने क्षिप्त्वा तं त्रिधा कृत्वांशौ क्षपयित्वा तृतीयांशं
संज्वलनमायायां क्षिप्त्वेत्यादि संज्वलनलोभं खंडत्रयं कृत्वा द्वावंशौ क्षपयित्वा तृतीयांशं संख्येयखण्डानि कृत्वा पृथक्
पृथक् काले क्षपयन्नन्त्यं खण्डं यावदनिवर्त्तिबादरस्ततोऽन्त्यं खण्डमसंख्यखण्डानि कृत्वा समये समये क्षपयन् सूक्ष्मसम्पराय-
चारित्री स्यात् ततः सूक्ष्मखण्डेषु क्षीणेषु क्षोणमोहयथाख्याती ॥ १२२ ॥ 'वीस'

**वीसमिऊण नियंठो, दोहि उ समएहि केवले सेसे। पढमे निद्दं पयलं, नामस्स इमाओ पयडीओ॥१२४॥**

निर्ग्रन्थोऽब्धितरणश्रान्तवत् महामोहं तीर्त्वाऽन्तर्मुहूर्त्तं विश्रम्य द्वाभ्यां समयाभ्यां केवली भविष्यन् शेषे प्रथमे समये निद्रां
प्रचलां च तथा नामकर्मणः एताः प्रकृतीः क्षपयेत् तद्यथा ॥ १२४ ॥ ' देव '

**देवगइआणुपुव्वी–विउव्वि संघयण पढमवज्जाइ । अन्नयरं संठाणं, तित्थयराहारनामं च ॥१२५॥**

देवगतिः देवानुपूर्वी वैक्रियं अंगोपाङ्गानि चेति द्विकं, संहननानि प्रथमवर्जानि ५, यत् स्वस्यास्ति तदन्यतरत् मुक्त्वा अन्यसंस्थानानि ५, यद्यतीर्थकृत् तदा तीर्थकराहारकनाम्नी, तीर्थकृत्तदाऽऽहारकनामैव, परमेतासां नामप्रकृतीनामत्र क्षयो भाष्यकर्मग्रन्थानां न सम्मतः ॥ १२५ ॥ 'चर'

**चरमे नाणावरणं, पंचविहं दंसणं चउवियप्पं। पंचविहमंतरायं, खवइत्ता केवली होइ ॥ १२६ ॥**

चरमेति द्वितीये समये मत्यादिज्ञानावरणं पञ्चविधं, चक्षुरचक्षुरवधिकेवलभेदं शेषं चतुःप्रकारं दर्शनं, दानलाभवीर्यभोगोपभोगभेदात् पञ्चविधमन्तरायं क्षपयित्वा केवली भवति, श्रेणिद्वयसमाप्तिकालोऽप्यन्तर्मुहूर्त्तमात्र एव घटीद्वयान्तरन्तर्मुहूर्त्तानामसंख्यत्वात् ॥ १२६ ॥ 'संभि'

**संभिण्णं पासंतो, लोगमलोगं च सव्वओ सव्वं। तं नत्थि जं न पासइ, भूयं भव्वं भविस्सं च ॥१२७॥**

समेकीभावेन द्रव्यपर्यायैर्भिन्नं व्याप्तं लोकमलोकं च सर्वतः पश्यन्, भव्यं वर्त्तमानं ॥ १२७ ॥

अत्रोपोद्घातनिर्युक्त्यारम्भे निर्युक्तिसमुत्थानाऽधिकारे 'तवनियमनाणरुक्खं' इत्यादि सर्वं प्रसंगेनोक्त्वाऽथ वाच्यप्रसङ्गशेषं शेषवाच्यद्वाराणि चाह–'जिण'

**जिणपवयणउप्पत्ती, पवयणएगट्ठिया विभागो य ।**
**दाराविही य नयविही, वक्खाणविही य अणुओगो ॥ १२८ ॥**

जिनप्रवचनोत्पत्त्यादिद्वाराणि ॥

जिनप्रवचनोत्पत्तिः १ प्रवचनैकार्थिकानि २ प्रवचनैकार्थिकानां विभागो व्यक्ति३रिति त्रयं प्रसङ्गशेषं, तथा द्वारविधि-
रुपोद्घातः ४, नयविधिः ५ व्याख्यानविधिः ६ अनुयोगोऽनुगमः सामायिकादिनिर्युक्तिषु वक्ष्यमाणः ७। स तु सूत्र-
स्पर्शिनिर्युक्तिः सूत्रोच्चारश्च । इहानुगमद्वारादनु नयविधिरिति क्रमे सति यत् प्राग् नयविध्याऽख्यानं तन्नयानुगमयोः प्रतिसूत्रं
युगपद्भावज्ञस्यै ॥ १२९ ॥ जिनप्रवचनोत्पत्तिः 'अत्थं भासइ अरिहा' इत्यत्रोक्तैव, अथैकार्थिकानि तद्विभागं चाह—'एग'

**एगट्ठियाणि तिण्णि उ पवयण सुत्तं तहेव अत्थो अ। इक्किक्कस्स य इत्तो, नामा एगट्ठिआ पंच ॥१२९॥**

प्रवचनं जिनागमः, सूत्रार्थौ तु तद्विशेषौ, तत्र प्रकर्षेण वक्ति तत्त्वानीति प्रवचनं, सूचयत्यर्थमिति सूत्रं, अर्यते ज्ञायते
जीवैरिति अर्थः, अत ऊर्ध्वं एकैकस्य प्रवचनादेर्नामान्येकार्थिकानि पञ्च वक्ष्ये ॥ १२९ ॥ 'सुय'

**सुयधम्म तित्थ मग्गो, पावयणं पवयणं च एगट्ठा। सुत्तं तंतं गंथो, पाठो सत्थं च एगट्ठा ॥१३०॥**

श्रुतरूपो दुर्गतिपतितजन्तुधारणत्वात् धर्मः श्रुतधर्मः, १, तीर्यते भवोऽनेनेति तीर्थं २ मृज्यते शोध्यते आत्माऽनेनेति
मार्गः ३, प्रगतं आ अभिविधिना जीवाद्यर्थेषु वचनं प्रावचनं ४, प्रागुक्तार्थं प्रवचनं एतान्येकार्थानि। तन्यतेऽस्मादर्थ इति
तन्त्रं, ग्रथ्यते इति ग्रन्थः, पठ्यते एतदिति पाठः, शास्यतेऽनेनेति शास्त्रं ॥ १३० ॥ अर्थस्य पर्यायोऽनुयोग इति,
तदेकार्थान्याह—'अणु'

**अणुओगो य नियोगो, भास विभासा य वत्तियं चेव। अणुओगस्स उ एए, नामा एगट्ठिआ पंच ॥१३१॥**

सूत्रस्यार्थेन सहानुकूलो योगोऽनुयोगः, एवं निश्चितो योगो नियोगः, घटनाद् घट इति व्यक्ता वाग् भाषा, घटः कुटः इति पर्यायवाग् विभाषा, सर्वविशेषोक्तिर्वार्त्तिकं, एतानीत्यादि प्राकृतत्वाल्लिङ्गव्यत्ययः ॥ १३१ ॥ उक्तान्येकार्थिकानि २ । अथ विभागः, स तु प्रवचनसूत्रार्थाणां पृथक् एकार्थिकनामकथनेन सामान्यत उक्त एव । अनुयोगैकार्थिकानां तु विभागं दर्शयति—' णामं '

**णामं ठवणा दविए, खित्ते काले य वयणभावे य । एसो अणुओगस्स उ, णिक्खेवो होइ सत्तविहो१३२**

नामाऽनुयोगः इत्यादि । नामस्थापने अवधिवत् । द्रव्यानुयोग आगमतोऽनुयोगपदार्थज्ञस्तत्र चानुपयुक्तः नोआगमतो ज्ञभव्यशरीरव्यतिरिक्तो द्रव्यस्य द्रव्याणां द्रव्येण द्रव्यैर्द्रव्ये द्रव्येषु चाऽनुयोगः स्वरूपज्ञानं; एवं क्षेत्रादिष्वपि षट् योजना कार्या। तत्र द्रव्यानुयोगो द्विधा, जीवद्रव्यानुयोगोऽजीवद्रव्यानुयोगश्च । एकैकश्चतुर्धा द्रव्यादिभिः । तत्र द्रव्यतो जीव एकं द्रव्यं १, क्षेत्रतो असंख्यप्रदेशस्थः २, कालतोऽनाद्यनन्तः ३, भावतोऽनन्तज्ञानदर्शन( चारित्राचारित्रदेश)चारित्रागुरुलघुपर्यायवान् ४ । अजीवद्रव्याण्यण्वादीनि, द्रव्यतोऽणु एकं द्रव्यं १, क्षेत्रत एकप्रदेशस्थः २, कालत एक समयाद्यसंख्योत्सर्प्पिणीस्थितिः ३, भावतः एकरसवर्णगन्धो द्विस्पर्शः ४ । एषां च स्वस्थानेऽनन्ता रसादिपर्याया एकगुणतिक्तादिभेदेन ज्ञेयाः । एवं द्रव्याणां जीवाऽजीवभेदानामपि, द्रव्येण खटिकया भङ्गकानां अनुयोगोऽर्थज्ञानं वा, द्रव्यैरक्षैः । द्रव्ये फलकादौ द्रव्येषु निषद्यासु । एवं क्षेत्रादिष्वपि, तत्र क्षेत्रेणानुयोगो यथाऽऽद्यद्वीपमानप्रस्थेन पृथ्वीजीवा मीयमाना असंख्यलोकाकाशप्रदेशसंख्याः प्रस्थाः स्युः, क्षेत्रैस्तैरेव बहुभिः प्रस्थैः । क्षेत्रस्य भरतादेः, क्षेत्राणां बहूनां, क्षेत्रे तिर्यग्लोके भरतादौ वा,

क्षेत्रेष्वर्धतृतीयद्वीपेषु । कालेन यथा बादरवायुकायिकानां वैक्रियाणि अद्धापल्यस्यासंख्येयभागमात्रेणापह्रियन्ते । कालैर्यथा प्रत्युत्पन्नत्रसाः प्रतिसमयमेकैकापहारेण ह्रियमाणा असंख्योत्सर्पिणीभिर्ह्रियन्ते । कालस्य कालानां (च) अनुयोगः स्पष्टः । काले द्वितीयपौरुष्यां, कालेषु सुषमदुःषमादिषु । वचनेनार्धमागधेन वचनैरष्टादशदेशीभाषाभिः, वचनस्यैकद्विवचनादेर्वचनानां षोडशानां, तत्र ' लिंगतियं वयणतियं कालतियं तह परुक्खपच्चक्खं । उवणयऽवणयचउक्कं, सोलसमं होइ अज्झप्पं ' ॥ १ ॥ लिङ्गत्रिकं स्त्रीलिङ्गादि ३, वचनत्रिकं एकवचनादि ३, कालत्रिकं अतीतादि ३, परोक्षं स इति, प्रत्यक्षं अयमिति, उपनयः स्तुतिः, अपनयो निन्दा, तयोर्वचनचतुष्कं यथा सुरूपा स्त्रीत्युपनयः, कुरूपेत्यपनयः, सुरूपा किन्तु कुशीलेत्युपनयापनयः, कुरूपा किन्तु सुशीलेत्यपनयोपनयः ४, तथा विप्रतारणार्थमन्यद्वक्तुकामोऽपि सहसा यच्चेतसि तदेव वक्ति तत्षोडशमध्यात्मवचनं । वचने क्षयोपशमजे, वचनेषु तु तथैव बहुषु । एवं भावस्यौदयिकादेरनुयोगः, भावानां तेषामेव बहूनां, भावेन संग्रहोपग्रहनिर्जराश्रुतपर्यायजाताऽव्युच्छित्तीनां पञ्चभावानामन्यतमेन, यथा शिष्याः सूत्रार्थसंग्राहकाः सन्तु १ तथा गीतार्थीभूता वस्त्रादिना गच्छोपग्राहकाः सन्तु २, तथा ममाप्यनुयोगदानात् कर्मनिर्जराऽस्तु ३, शिष्यान् वाचयतः श्रुतपर्यायजातं वर्द्धतां ४, श्रुतस्य चाऽव्युच्छित्तिरस्तु ५, भावैस्त्वेतैः सर्वैः, भावे क्षायोपशमिके भावेषु तु न क्षायोपशमिकत्वेन, तस्यैकत्वात्, यद्वा नानाशास्त्रविषयभेदाद् भावेष्वपि । अथवा द्रव्यस्य वस्त्रादेः कुसुंभरागादिना पर्यायेण सहानुरूपो योगो अनुयोग इत्याद्यपि । अनुयोगग्रहणकाले तु सर्वानुयोगानामुपयोगः, एतद्विपरीतोऽननुयोगः, सोऽपि सप्तधा ॥१३२॥

तत्र नाम स्थापने सुगमे द्रव्यक्षेत्रकालाद्यननुयोगानां तदनुयोगानां तु (च) दृष्टान्तानाह—' वच्छ '

वच्छगगोणी १ खुज्जा २ सज्झाए ३ चेव बहिरउल्लावो ४। गामिल्लए ५ य वयणे सत्तेवय हुंति भावंमि ॥१३३॥

वत्सो गौर्दृष्टान्तः, तत्रान्यस्या गोर्वत्समन्यस्यां मुञ्चतोऽननुयोगः पयोऽप्राप्तिश्च, अन्यथाऽनुयोगो दुग्धाप्तिश्च, एवमन्यद्रव्यस्वरूपमन्यस्मिन्वदतोऽननुयोगोऽर्थाऽसिद्धिश्च । अन्यथाऽनुयोगः साध्यसिद्धिश्च । १ । 'खुज्जा' कुब्जा तया शातवाहनं भृगुपुरं रुध्ध्वा स्थितमन्यदा पतद्गृहे धृतेऽप्यास्थानभुवि थुत्कुर्वन्तं दृष्ट्वाऽचिन्ति, अत्र सत्कारार्हे क्षेत्रे थुत्कृतं अननुयोगः ततोऽवश्यं राजैतत् क्षेत्रं मुमुक्षुरित्यादि, एवं नित्यानित्यं व्योमादि क्षेत्रं नित्यमनित्यं वदतोऽननुयोगोऽन्यथाऽनुयोगः । २ । कोऽपि साधुर्निशि पौरुष्यां अनूच्चैः (त्युच्चैः) स्वरं स्वाध्यायं कुर्वन्, सूर्या आभीरीरूपं कृत्वा दधिविक्रयदृष्टांतेन बोधितः अत्र साधोः स्वाध्यायकालाज्ञानेऽननुयोगः, ततोऽनुयोग एवमत्रापि ।३। 'वयणे' वचनाननुयोगे बधिरोल्लापग्रामेल्लुकदृष्टान्तौ, कोऽपि बधिरः क्षेत्रं कृषन् पान्थैर्मार्गं पृष्टो गृहजौ ममैतौ वृषौ इत्यूचे इत्यादि, एवं अन्यस्मिन् पृष्टे अन्यद्वदतो अननुयोगो यथायद् श्रवणप्ररूपणेप्यनुयोगः. कोऽपि ग्रामेयको मात्रा जोत्कारं च्छंदानुवर्तनं चेति विनयं शिक्षितः पथि व्याधैस्तारस्वरं जोत्कुर्वन् मृगत्रासकत्वात् कुट्टितः शिक्षितश्चेदृशान् वीक्ष्य च्छन्नं गम्यं, तथा च यान् रजकैर्वस्त्रचौरधियाऽकुट्टि शिक्षित ऊषं पततु इत्यादि । एवं अन्यस्मिन्वाच्येऽन्यद्वदतोऽननुयोगः, भावाननुयोगे सप्तदृष्टान्ताः ॥ १३३ ॥ यथा ' साव '

सावगभज्जा १ सत्तवइए २ अ कुंकणगदारए ३ नउले ४ ।
कमलामेला ५ संबस्स साहसं ६ सेणिए कोवो ७ ॥ १३४ ॥

श्रावको भार्यासत्कसखीधिया भार्यां भुक्त्वा हा व्रतं भग्नमिति खिदन् पत्न्या संकेतैः प्रत्यायितः ।१। सप्तपदानि निवृत्य घातो देय इति व्रतवान् साप्तपदिको भार्यान्तिके नृवेषां भगिनीं सुप्तां वीक्ष्य नरोऽयमिति घाताय सप्तपदनिवृत्तौ भारपट्ट-स्खलितासिशब्दोन्निद्रामुपललक्षे । २ । कौंकणदेशे पित्रा कन्यास्यै मृतपत्नीसुतो मार्य इति प्राक्क्षिप्तशरानयनार्थं प्रेषितोऽन्येषुणा हतो हन्त्येष इति नाज्ञासीत्ततः पुनः पुनः हन्यमानोऽज्ञासीत् । ३ । भट्टिन्याः सुतक्रीडानकुलः सुतघातकं अहिं हत्वा रक्तास्यं तस्याः खण्डयन्त्या अग्रेऽदर्शयत् । सा सुतहन्ताऽयमिति तं खण्डित्वोपसुतं यांती मृताहिं वीक्ष्य विषन्ना । ४ । सागरचन्द्रः कमलामेलां ध्यायन् शाम्बेन कराभ्यां दृष्टिस्थगने किमेषा कमलामेलेत्यूचे ततः करापनये शाम्बं जज्ञौ ॥ ५ ॥ शाम्बसाहसं, कृष्णजाम्बूवत्योराभीराभीरीरूपेण भ्रमतोः शाम्ब आभीरीं सुरूपां वीक्ष्यैहि तक्रं क्रीणे इति मठान्तराकर्षस्ताभ्यां मुख्यरूपे दर्शिते नष्टः ।६। चिल्लणया सायं शीते नदीतटे साधुं वीक्ष्य निश्युद्घाटितकरं सुप्तया स कथं भवितेत्युक्तौ श्रेणिकस्य कोपः, ततः श्रीवीरेणोक्ते प्रसादः ।७। इह सर्वत्र सद्भावस्याऽज्ञानेऽननुयोगः, ज्ञाने त्वनुयोगः, एवमौदयिकादिभावानां अज्ञाने वितथप्ररूपणे वा अननुयोगः, यथास्थितप्ररूपणे त्वनुयोगः । १ । नियोगेऽप्येवमेव २ ॥ १३४ ॥ भाषादिदृष्टान्तमाह—'कट्ठे'

कट्ठे १ पुत्थे २ चित्ते ३, सिरिघरिए ४ पुंड ४ देसिए ६ चेव ।
भासगविभासए या, वत्तीकरणे अ आहरणा ॥ १३५ ॥

पुस्तं लेप्यकर्म, काष्टपुस्तचित्रेपु कोप्याकारमात्रं करोत्यन्यः स्थूलाऽवयवं, परः सर्वाङ्गोपाङ्गानि, तथा श्रीगृहे कोशे

कोऽपि रत्नानां पात्राणि वक्ति, परः संख्यां, अन्यस्तद्गुणागुणादि, बोण्डं पद्मं तदीषत् १ अर्ध २ पूर्णविकाशि ३ स्यात्, देशकः कथको मार्गं पृष्टः कोऽपि दिग्मात्रं, परस्तत्स्थग्रामादि, अन्यो गुणादि, एवं भाषकः स्थूरमर्थं, विभाषकः सविशेषं, वृत्तिकारः सप्रमाणनयं वक्ति ॥ १३५ ॥ उक्तो विभागः, अथ द्वारविधिं तत्प्रतिबद्धं च नयविधिं महार्थत्वान्मुक्त्वा व्याख्याविधिमाह ' गोणी '

गोणी १ चंदणकंथा २ चेडीओ ३ सावए ४ बहिर ५ गोहे ६ ।
टंकणओ ववहारो ७ पडिवक्खो आयरियसीसे ॥ १३६ ॥

गौर्दृष्टान्तः, यथा कोऽपि निविष्टामेव खंजां गां क्रीत्वा निविष्टामेव विक्रीणन् परीक्ष्यैव लास्यते इति ग्राहकैरुक्तोऽवक् मयैवमात्ता यूयमप्येवं लातैवं यो गुरुः पृष्टो गुरुपार्श्वे मयैवं श्रुतं यूयमप्येवं शृणुतेति वक्ति शिष्यश्च गोग्राहिवदविचार्य योऽधीते तावयोग्यौ । १ । चन्दनकन्थायां विष्णोर्देवदत्ताऽशिवप्रणाशिकाख्या तुर्या चन्दनभेरी सा षण्मासैः २ भाविभूतरुक्शान्त्यै वाद्यते, भेरीपालो लक्षेण २ रोगिणां तत् खण्डं ददत् तां कन्थामस्वरां च चक्रे, तं कृष्णोऽहन्, पुनर्देवार्पितां तामन्यो यत्नाद्रक्षन्नार्चि, एवं गुरुशिष्यौ सिद्धान्तं परग्रन्थैः कन्थाकुर्वन्तौ अनर्हौ, यथावद्व्याख्यान्तौ त्वर्हौ । २। चेटयौ कन्ये, जीर्णश्रेष्ठिपुत्र्या नवश्रेष्ठिपुत्रीशृंगारो हृतो विवादे राज्ञा व्यत्ययभूषणन्यासाच्चौरीं ज्ञात्वा जीर्णश्रेष्ठी हतः, एवं व्यत्ययेनार्थकथनेऽनन्तभवेषु मृतिराप्यते । ३ । श्रावक ४ बधिर ५ गोहाः ६ प्राग्वत्, गोहो ग्रामेयकः, एवं यः पत्नीवत् परिचितमप्यर्थं न वेत्ति ४

अन्यस्मिन्नुक्तेऽन्यद्वक्ति ५ अन्येनाशयेन पृष्टोऽन्यथा वक्ति ६ स गुरुः शिष्यो वानर्हः । टङ्कणदेशे म्लेच्छा वणिजश्च भाषानव-
बोधान्मिथो हेम्नः पण्यानां चेच्छापूर्त्तिं यावत् पुंजं कुर्युः, एवं व्यवहारः । एवं गुरुः पूर्णार्थबोधं यावत्कथयन् शिष्यश्च पृच्छन्
योग्यौ, गवादिषूक्तार्थविपर्ययः प्रतिपक्षः सूरिशिष्ययोर्योज्यः, स च योजित एव ॥ १३६ ॥ ' कस्स '

योग्या-
योग्य-
शिष्य-
विचारणा॥

**कस्स न होही वेसो, अनब्भुवगओ अ निरुवगारी अ। अप्पच्छंदमईओ पट्ठिअओ गंतुकामो अ ॥१३७॥**

कस्य शिष्यः 'वेसो' द्वेष्यो न भविष्यति, अनभ्युपगतः श्रुतभणनं प्रत्यनादरवान्, निरुपकारी गुरुशुश्रूषारहितः, आत्म-
च्छंदकमतिकः, प्रस्थितकः यियासोर्द्वितीयः, गन्तुकामः कोऽत्र तिष्ठतीति वक्ता ॥ १३७ ॥ ' विण '

**विणओणएहिं कयपंजलीहि, छंदमणुअत्तमाणेहिं। आराहिओ गुरुजणो, सुयं बहुविहं लहुं देइ ॥१३८॥**

शिष्यैर्विनयावनतैः प्राञ्जलिपुटैर्योजितकरयुगलैश्छंदमनुवर्त्तमानैर्लघु शीघ्रं दत्ते ॥ १३८ ॥ ' सेल '

**सेलघण कुडग चालणि परिपूणग हंस महिस मेसे अ ।**
**मसग जलूग विराली, जाहग गो भेरि आभीरी ॥ १३९ ॥**

अत्र क्रमेणायोग्ययोग्यशिष्ययोर्दृष्टान्ताः 'चरियं च कप्पियं वा आहरणं दुविहमेव नायव्वं । अत्थस्स साहणट्ठा, इंधणमिव
ओयणट्ठाए' ॥ १ ॥ तत्थिमं कप्पियं जहा–'सेलं' मुद्गशैलं पुष्करावर्त्तो दुर्भेदं ज्ञात्वाऽद्भिर्भेत्स्यामीति सप्ताहानि वर्षन्नयं मग्नः
(इति स्थितः) शैलस्तु विशेषान्नीरजा उज्ज्वलोऽवक् हे अब्देश! ज्योत्कारोऽस्तु, ततोऽब्दो हीणो निवृत्तः, एवं कुशिष्योऽभेद्यो

नाध्याप्यः, घनेऽब्दे कृष्णभुवि द्रोणमानेऽपि वृष्टेऽम्बु न लोढते, किन्तु सा तत् संगृह्णात्येवं सुशिष्यो गुरूक्तं । १ । कुटका घटा नवा जीर्णाश्च भाविताऽभाविताश्च, भाविता असद्द्रव्यैः सद्द्रव्यैर्वा, तेऽपि वाम्या अवाम्या वा । तत्र सद्द्रव्यवासिता वाम्या असद्द्रव्यवासिता अवाम्यास्तेऽनर्हाः । सद्द्रव्यवासिता अवाम्या असद्द्रव्यवासिता वाम्याश्चार्हाः । एवं शिष्या अपि । तत्रासद्द्रव्यं परमतं, सद्द्रव्यं जैनं । अभावितास्तु नैकेनापि मतेन, भाविता, नवा घटास्तु येऽपरिणतमिथ्यादृशः, ते श्रुतं ग्राह्यंते । यद्वा सर्व १ बहु २ अल्पविस्मारक ३ पूर्णश्रुतभृतः ४ शिष्या अधश्छिद्र १ खंड २ बोड ३ पूर्णघट ४ तुल्याः । २ चालन्याम्म्बु न तिष्ठेत् । एतद्विपक्षो वंशचूर्णगुन्दकृतं तापसकर्परं, तत्रांबु न गलेत्, एवं सुशिष्ये शास्त्रं । ३ । परिपूणकः सुगृहीगृहं तद् घृतं मुक्त्वा किट्टं लाति । ४ । हंसो अम्बु त्यक्त्वा पयः पिबेत्, तथा शिष्यो दोषत्यागी गुणग्राही । ५ । महिषो अम्बु विलोड्य स्वान्याऽपेयं कुर्यात्, तथा कुशिष्यो विकथाविग्रहादिभिर्व्याख्याऽन्तरायं कुर्यात् । ६ । मेषो गोष्पदेऽपि पिबन्नंबु न विलयेत् तथा अल्पशास्त्रादपि गुरोर्भणन् सुशिष्यस्तं न दूनयेत् । ७ । मशको अल्पं पिबेद् बहु च तुदेत् एवं कुशिष्यः । ८ । जलूका पिबेद्बहु नत्वर्दते एवं सुशिष्यः । ९ । बिडाली भुवि क्षिप्त्वा पिबेत् तथा कुशिष्यः सभोत्थितान्तिकेऽधीते । १० । जाहकः स्तोकं स्तोकं क्षीरं पीत्वा पार्श्वान् लेढि, तथा जीर्णं २ कृत्वा सुशिष्योऽधीते । ११ । चतुर्णां विप्राणां केनाप्येका गौर्दत्ता ततस्तेषु कल्येऽन्यो दोग्धेति तृणाद्यददत्सु गौर्मृता अयशोऽन्यधेन्वलाभश्च । तथा कुशिष्याणां गुरुमशुश्रूषतामयशःशास्त्रहानी स्तः । १२ । एतद्विपक्षः चत्वारो विप्रा एकस्या गोस्तृणादिदातारो जातास्तेषां लाभ एवाऽभूत् एवं सुशिष्याः । १३ । मेरीपालौ प्राग्वत् । १४ । गन्त्रीस्थाभीरहस्ताद्भूस्थाऽभीर्यां घृतघटानाददत्यामन्तरा घटो भग्नोऽरे त्वया भग्न इति मिथो वाक्कलौ युद्धे जाते

उद्देशादि-द्वार-नामानि॥

गन्त्री पर्यस्ता आज्यं गतं, उत्सूरे तयोः स्वग्रामं यातोः स्तेनैर्वृषपादि हृतं, तथा कुशिष्यगुर्वोर्वितथव्याख्यायां कलौ सूत्रार्थहानी । १५ । एतद्विपक्षे एव घटे भग्ने हा सुष्ठु नाऽचिन्तीत्यऽन्योऽन्यमुक्त्वा ताभ्यां कर्परैर्घृतमात्तं अर्थसिद्धिर्जाता, क्षेमेण गृहं गतौ, एवं सुगुरुशिष्ययोरनुपयोगभणने स्वदोषोक्तौ, यथाऽऽभीरी घटास्यमानेन धारां दत्ते तथा गुरुः शिष्यानुमानेन शास्त्रं, अत्र दृष्टान्तयोजना अयोग्ययोग्यशिष्येषु स्वयं कार्या १६ ॥ १३९ ॥ अथ सनयविधिं द्वारविधिमाह–' उद्दे '

उद्देसे १ निद्देसे २ निग्गमे ३ खित्त ४ काल ५ पुरिसे ६ अ ।

कारण ७ पच्चय ८ लक्खण ९ नए १० समोआरणा ११ ऽणुमए १२ ॥ १४० ॥

उद्देशो वाच्यः, एवं सर्वत्र क्रिया योज्या, तत्र सामान्याभिधानमुद्देशः यथाऽध्ययनमिति १ विशेषाभिधानं निर्देशः यथा सामायिकमिति २ तथाऽस्मिंस्तीर्थे कुतो जीवद्रव्यात् सामायिकस्य निर्गमः ३ एवं कस्मिन् क्षेत्रे ४ काले ५ कुतः पुरुषात् सामायिकं निर्गतं ६ किं कारणं यद्गौतमादयः सामायिकं शृण्वन्ति ७ केन प्रत्ययेनार्हतेदमुपदिष्टं गणधरैश्च श्रुतं ८ तथा लक्षणं सामायिकानां श्रद्धानादि ९ नया नैगमादयः १० नयानां समवतरणं ११ कस्य नयस्य किं सामायिकमनुमतं १२ ॥ १४० ॥ ' किं कइ '

किं १३ कइविहं १४ कस्स १५ कहिं १६ केसु १७ कहं १८ केच्चिरं १९ हवइ कालं ।

कइ २० संतर २१ मविरहिअं २२ भवा १२ गरिस २४ फासण २५ निरुत्ती २६ ॥ १४१ ॥

किं सामायिकं १३ तत्कतिविधं १४ कस्य १५ क १५ केषु द्रव्येषु १७ कथं लभ्यते १८ कियच्चिरं कालं स्यात् १९ कति प्रपद्यमानाः प्रपन्ना वा २० चेत् सान्तरं तदा कियदन्तरं २१ कियत्कालमविरहितं प्रपद्यते २२ कियतो भवान् यावदाप्यते २३ कियन्त आकर्षा एकभवे नाना भवे वा सामायिकस्य ग्रहणानि २४ सामायिकवतः कियत्क्षेत्रस्पर्शना २५ सामायिकशब्दस्य निरुक्तिपर्यायाः २६ । एतानि वाच्यानि एतैर्द्वारैः(यावत् अज्झवसाणग्रन्थ) उपोद्घातनिर्युक्त्याख्यः संपूर्णो भणिष्यते ॥ १४१ ॥ क्रमेणाह–' नामं '

**नामं ठवणा दविए, खेत्ते काले समास उद्देसे । उद्देसुद्देसंमि अ, भावंमि अ होइ अट्ठमओ ॥ १४२ ॥**

सामान्येन नाम्नाऽभिधानं नामोद्देशो यथा वृक्षः । सामान्येन स्थापनाया अभिधानं स्थापनोद्देशः यथा इन्द्रस्थापना । द्रव्योद्देशः आगमनोआगमज्ञशरीरभव्यशरीरतद्व्यतिरिक्तो द्रव्येणोद्देशो यथा द्रव्यपतिरयमित्यादि । क्षेत्रोद्देशो यथा क्षेत्रपतिः । कालोद्देशो यथा कालातीतमिदं वस्तु, समासः स्वस्वभेदसंग्राही संक्षेपः, स चाङ्गश्रुतस्कन्धाध्यनभेदात्रिधा तदुद्देशो यथा अङ्गं अङ्गी तदध्येता तदर्थज्ञो वा । उद्देशोऽध्ययनांशस्तस्योद्देशो यथाऽयमुद्देशः, भावोद्देशोऽयं भावः, द्वारं १ ॥ १४२ ॥ ' एमेव '

**एमेव य निद्देसो, अट्ठविहो सोऽवि होइ णायव्वो । ओविसेसिअमुद्देसो, विसेसिओ होइ निद्देसो ॥१४३॥**

एवमेव निर्देशोऽष्टविधस्तत्राविशेषित उद्देशः, स एव विशेषितो निर्देशः मोऽलाक्षणिकः, तत्र नामनिर्देशो यथाऽऽम्रः, स्था-

पनानिर्देशः सौधर्मेन्द्रस्थापना, द्रव्यनिर्देश आत्मा, एवं अन्येष्वपि ॥ १४३ ॥ इह समासोद्देशनिर्देशाभ्यामधिकारो यथा- अध्ययनमिति सामायिकमिति, इदं च सामायिकं रूढ्या क्लीबं, अस्य च निर्देष्टा लिङ्गत्रयेऽपि, ततः को नयः कं निर्देश- मिच्छतीत्याह—'दुवि'

निर्गमद्वारम् ॥

**दुविहंपि णेगमणओ, णिद्देसं संगहो य ववहारो। निद्देसगमुज्जुसुओ, उभयसरित्थं च सद्दस्स ॥१४४॥**

निर्देश्यनिर्देशकवशात् द्विविधं नैगमनयो लिङ्गनिर्देशमिच्छेत् कोऽर्थः निर्देश्यं वाच्यं तद्वशाद्यथा षड्जीवनिकेत्यध्ययन- नामनिर्देशः, निर्देशको वक्ता तद्वशाद्यथा कापिलीयमध्ययनं, एवं नैगमो निर्देश्यं सामायिकं रूढ्या क्लीबमिति तद्वशात्सामायि- कस्य क्लीबतां निर्देष्टुस्त्रिलिङ्गभावात्तत्परिणामाऽभिन्नत्वेन त्रैलिङ्ग्यमपीच्छेत् । संग्रहो व्यवहारश्च निर्देशकलिङ्गं यथावद्वस्तुपरं, निर्दिष्टं वस्त्वाश्रित्य लिङ्गनिर्देशमिच्छतः, क्लीबतां इत्यर्थः । निर्देशकमाश्रित्य ऋजुसूत्रस्त्रैलिङ्ग्यमिति, उभयसादृश्यं शब्दन- यस्य मतं, कोऽर्थः निर्देशकस्य निर्देश्यार्थोपयोगाऽभिन्नत्वान्निर्देश्यरूपतैवेति द्वयोरपि क्लैव्यमिति द्वारं २ ॥ १४४ ॥ 'नामं'

**नामं ठवणा दविए, खित्ते काले तहेव भावे अ। एसो उ निग्गमस्सा, णिक्खेवो छविहो होइ ॥१४५॥**

द्रव्यान्निर्गमः, निर्गमपदं योज्यं सर्वत्र । सचित्तात्सचित्तस्य बीजादंकुरस्य, सचित्तान्मिश्रस्य भूमेः पतङ्गस्य, सचित्तादचि- त्तस्या भूमेर्बाष्पस्य, मिश्रात्सचित्तस्य देहात् कृमेः, मिश्रान्मिश्रस्य स्त्रीदेहाद्गर्भस्य, मिश्रादचित्तस्य देहान्मलस्य, अचित्तात्सचि- त्तस्य काष्ठात्कृमेः, अचित्तान्मिश्रस्य काष्ठाद् घुणस्य । इह पतंगादीनां सजीवत्वेऽपि मिश्रत्वं किंचिन्निर्जीवपक्षादिमत्वात्,

अचित्तादचित्तस्य काष्ठाच्चूर्णस्य, क्षेत्रादधोलोकादेः, कालनिर्गमो दुःकालात्कस्यापि, भावान्निर्गमः क्रोधाद्दुर्वाक्यस्य। सामायिकनिगमे तु द्रव्यं वीरः, क्षेत्रं महासेनवनं, काल आद्यपौरुषी, भावः क्षायिकः भावपुरुषोऽर्हन्वा ॥ १४५ ॥ तत्रादौ क्षेत्रादौ क्षेत्रादीनां द्रव्याधीनत्वाद्द्रव्यस्यैव मिथ्यात्वान्निर्गममुक्त्वा सामायिकस्य निर्गमो वक्ष्यते—' पंथं '

**पंथं किर देसित्ता, साहूणं अडविविप्पणट्ठाणं। सम्मत्तपढमलंभो, बोद्धव्वो वद्धमाणस्स ॥ १४६ ॥**

दर्शयित्वोक्त्वा, साधुभ्योऽटव्यां मार्गाद्विप्रणष्टेभ्यो भ्रष्टेभ्यः, सम्यक्त्वप्रथमलम्भो बोधव्यः वर्धमानस्य ॥ १४६ ॥

अथ भाष्यगाथाद्वयं ' अव '

**अवरविदेहे गामस्स, चिंतओ रायदारुवणगमणं। साहू भिक्खनिमित्तं, सत्था हीणे तहिं पासे ॥१॥**

अवरविदेहे पश्चिमविदेहे ग्रामस्य चिन्तको नयसारः राजदारुहेतोर्वने गमनं, साधून् भिक्षाहेतोः स्थितत्वेन सार्थाद्धीनांस्तत्रापश्यत् ॥ १ ॥ ' दाण '

**दाणन्न पंथनयणं, अणुकंप गुरू कहण सम्मत्तं। सोहम्मे उववण्णो, पलियाउ सूरो महिड्ढीओ ॥२॥**

साधुभ्योऽन्नदानं, पथि नयनं, अनुकम्पया भक्त्या, गुरोः कथनं, ततः सम्यक्त्वं लब्ध्वा सौधर्मे पल्यायुः सुरो महर्द्धिको जातः ॥ २ ॥ ' लद्धू '

**लद्धूण य सम्मत्तं, अणुकंपाए उ सो सुविहियाणं। भासुरवरबोंदिधरो देवो वेमाणिओ जाओ ॥१४७॥**

अनुकम्पया भक्त्या, बोन्दिर्देहः ॥ १४७ ॥ ' चइ '

चइऊण देवलोगा, इह चेव य भारहंमि वासंमि। इक्खागकुले जाओ, उसभसुअसुओ मरीइत्ति १४८

भारते वर्षे भरतक्षेत्रे, ऋषभस्य सुतसुतः पौत्रः ॥ १४८ ॥ ' इक्खा '

इक्खागकुले जाओ, इक्खागकुलस्स होइ उप्पत्ती। कुलगरवंसेऽईए भरहस्स सुओ मरीइत्ति ॥१४९॥

इक्ष्वाकुकुले कुलकरवंशेऽतीते मरीचिर्जात इतीक्ष्वाकुकुलोत्पत्तिर्वाच्या भवति ॥ १४९ ॥ ' ओस '

ओसप्पिणी इमीसे, तइयाए समाए पच्छिमे भागे। पलिओवमट्ठभाए, सेसंमि उ कुलगरुप्पत्ती ॥१५०॥

अवसर्पिण्यामस्यां तृतीयायां सुषमदुषमायां समायां काले सामान्येन पश्चिमे भागे विशेषतः पल्याऽष्टभागे शेषे कुलकरोत्पत्तिरभूत् ॥ १५० ॥ ' अद्ध '

अद्धभरहमज्झिल्लतिभागे, गङ्गासिंधुमज्झंमि। इत्थ बहुमज्झदेसे, उप्पण्णा कुलगरा सत्त ॥ १५१ ॥

दक्षिणार्द्धभरतस्य गङ्गासिन्धुभ्यां त्रिभागीकृतस्य मध्यमत्रिभागेऽत्र बहुमध्यदेशे न तु तत्प्रान्ते ॥ १५१ ॥ ' पुव '

पुव्वभवजम्मनामं, पमाण संघयणमेव संठाणं। वण्णित्थियाउ भागा, भवणोवाओ य णीई य ॥१५२॥

आद्यकुलकृतः पूर्वभव१स्तथा जन्म २ सर्वकुलकृतां नाम ३ प्रमाणं ४ संहननं ५ संस्थानं ६ वर्णः ७ स्त्री ८ आयु ९ र्भागाः १० भवनपतिपूपपातः ११ नीतिश्च १२ वाच्यानि ॥ १५२ ॥ ' अच '

कुलकर-पूर्वभवादि-द्वाराणि ॥

अवरविदेहे दो वणिय, वयंसा माइ उज्जुए चेव। कालगया इह भरहे, हत्थी मणुओ अ आयाया॥१५३॥

द्वौ वणिजौ वयस्यौ मायिऋजू कालगतौ मृतौ, उक्तं प्राग्भवद्वारं। हस्ती श्वेतश्चतुर्दन्तो मनुजश्च युग्मीह भरते आयातौ जातौ, द्वितीयभवे। उक्तं जन्मद्वारं ॥ १५३ ॥ 'दट्ठुं'

दट्ठुं सिणेहकरणं, गयमारुहणं च नामणिप्फत्ती। परिहाणि गेहि कलहो, सामत्थण विन्नवण हत्ति।१५४।

जातिस्मृत्या गजस्य स्नेहकरणं युग्मिनश्च गजारोहणं दृष्ट्वा विमलवाहनेति नामनिष्पत्तिः, सोऽलाक्षणिकः। स्वद्रूणां दानपरिहाणौ युग्मिनां मिथः कल्पद्रुगृद्धिस्ततः कलहस्ततोऽयं अस्मभ्योऽधिक इति 'सामत्थणा' विमर्शना, ततः कुलकरस्य विज्ञापना, स च हा इति दण्डं चक्रे ॥ १५४ ॥ 'पढ०'

पढमित्थ विमलवाहण, चक्खुम जसमं चउत्थमभिचन्दे। तत्तो अ पसेणइए,मरुदेवे चेव नाभी य।१५५।

तत्पुत्रश्चक्षुष्मान्, एवमग्रेऽपि यशोमान् प्रसेनजित् मरुदेवो नाभिः, द्वारं ३ ॥ १५५ ॥ 'णव'

णव धणुसया य पढमो, अठ्ठ य सत्तद्धसत्तमाइं च। छच्चेव अद्धछट्ठा, पंचसया पणवीसं तु॥ १५६॥

९०० धनुःशतानि, अर्धं सप्तमं येषां धनुःशतानां ६५०, एवमग्रेऽपि ६००, अर्धषष्ठानि ५५०, ५२५ उच्चत्वे, द्वारं ४ ॥ १५६ ॥ 'वज्ज'

वज्जरिसहसंघयणा, समचउरंसा य हुंति संठाणे। वण्णंपि य वुच्छामि, पत्तेयं जस्स जो आसी॥ १५७॥

द्वारं ५ 'सम' द्वारं ६, वर्न्नं ॥ १५७ ॥ 'चक्खु'

चक्खुम जसमं च, पसेणइअं एए पिअंगुवण्णाभा। अभिचंदो ससिगोरो, निम्मलकणगप्पभा सेसा ॥१५८॥

प्रियङ्गु नाम द्रुर्नीलः, द्वार ७ ॥ १५८ ॥ 'चन्द' 'संघ'

चंदजस चंदकंता, सरूव पडिरूव चक्खुकंताय। सिरिकंता मरुदेवी, कुलगरपत्तीण नामाइं ॥ १५९ ॥

संघयणं संठाणं, उच्चत्तं चेव कुलगरेहिं समं। वण्णेण एगवण्णा, सव्वाओ पियंगुवण्णाओ ॥१६०॥

स्त्रीणां संहननादि कुलकरैः समं तुल्यं तथाप्युच्चत्वे ईषत् कुलकरेभ्य ऊनाः, द्वारं ८ ॥ १५९–१६० ॥ 'पलि'

पलिओवमदसभाए, पढमस्साउं तओ असंखिज्जा। ते आणुपुव्विहीणा, पुव्वा नाभिस्स संखेज्जा ॥१६१॥

पल्यदशमभागः प्रथमायुः, ततो अन्येषां असंख्यानि पूर्वाण्यायुस्तानि पूर्वाणि आनुपूर्व्या क्रमेण हीनानि ज्ञेयानि, नाभेः संख्येयपूर्वाण्यायुस्तत्र पल्यं अशीतिभागैः क्रियते, ईदृशा अष्टभागा आद्यकुलकरस्यायुः, शेषाः कुलकरास्तु अशीतिभागीकृतपल्यस्य भागद्वये जाताः। इहाऽयं भावः—प्राक् 'पलिओवमट्ठभाए सेसम्मि उ' इत्युक्त्या पल्याष्टमागे शेषे कुलकरोत्पत्तिरुक्ता, तत्र पल्यमशीतिभागैः कृतं, तन्मध्यात्सप्ततिभागास्तृतीयारमध्ये व्यतीताः, अशीतिभागीकृतपल्यस्य दशभागे सर्वकुलकरा उत्पन्नाः, तत्र प्रथमकुलकरायुः पल्यस्य दशमो भागोऽष्टभागरूपः। एवं पल्यस्याष्टसप्ततिभागा गताः, भागद्वयं अवशिष्यते, शेषाः कुलकृतः श्रीऋषभश्च द्वयोर्भागयोर्मध्ये जाताः। श्रीऋषभस्य

सिद्धेरनु तृतीयारकस्यैकोननवतिपक्षाः शेषा आसन् ॥ १६१ ॥ ' जं चेव '

जं चेव आउयं कुलगराण, तं चेव होइ तासिंपि। जं पढमगस्स आउं, तावइयं चेव हत्थिस्स ॥१६२॥

तासां स्त्रीणामपि, यत्प्रथमकुलकृत आयुस्तावदाद्यहस्तिनः, एवं शेषहस्तिनामपि स्वस्वकुलकृत्तुल्यमेव द्वारं ९ ॥ १६२ ॥ ' जं जस्स '

जं जस्स आउयं खलु, तं दसभागे समं विभइऊणं। मज्झिल्लट्ठतिभागे, कुलगरकालं वियाणाहि।१६३।

तद्दशभागैः समं सदृशं विभज्य मध्यमेऽष्टभागात्मके द्वितीयभागे कुलकरराज्यकालं विजानीहि ॥ १६३ ॥ ' पढमो '

पढमो य कुमारत्ते, भागो चरमो य वुड्ढभावंमि। ते पयणुपिज्जदोसा, सव्वे देवेसु उववण्णा ॥१६४॥

शेषभागद्वयमध्यात् प्रथमो भागः कुमारत्वे चरमो भागश्च वृद्धभावे ज्ञेयः। इह युग्मिधर्मस्यातीतप्रायत्वात् सर्वकुलकृतामायुषोऽन्त्यभागद्वये युग्मजन्म, ततो युग्मिपितुः कुलकृत्कालभागाष्टकान्त्यभागे कुमारभागं भुक्त्वा पितुर्वृद्धत्वभागे कुलकृत्त्वं बिभर्तीति वृद्धाः, द्वारं १० ॥ १६४ ॥ भवनोपपातमाह–ते प्रतनुप्रेमद्वेषाः स्तोकरागद्वेषाः सर्वे भवनदेवेषूत्पन्नाः, कथं ' दो चेव '

दो चेव सुवण्णेसुं, उदहिकुमारेसु हुंति दो चेव। दो दीवकुमारेसुं, एगो नागेसु उववण्णो ॥१६५॥

सुपर्णेषु सुपर्णकुमारदेवेषु ॥ १६५ ॥ ' हत्थी '

हत्थी छच्चित्थीओ, नागकुमारेसु हुंति उववण्णा। एगा सिद्धिं पत्ता, मरुदेवी नाभिणो पत्ती ॥१६६॥

हस्तिनः, पद् च स्त्रियो नागकुमारेषूत्पन्नाः मतेन ( मतान्तरेण ) त्वाद्य एव हस्ती द्वारं ११ ॥ १६६ ॥ 'हकारे'

**हक्कारे मक्कारे धिक्कारे चेव दंडनीईओ । वुच्छं तासि विसेसं, जइक्कमं आणुपुव्वीए ॥१६७॥**

हा, मा, धिक् इति कुलकृतां दण्डनीतयः, वक्ष्ये तासां विशेषं, आनुपूर्व्या विमलवाहनादिपरिपाट्या ॥ १६७ ॥ 'पढम'

**पढमवीयाण पढमा, तइयचउत्थाणअभिनवा बीया । पंचमछट्ठस्स य सत्तमस्स तइया अभिनवाउ॥**

तृतीयेत्यादि, अल्पे मन्तौ आद्या, प्रौढे त्वभिनवा द्वितीया, 'पञ्चमे'त्यादि लघुमध्यमोत्कृष्टागसां क्रमात्तिस्रः ॥१६८॥ 'सेसा'

**सेसा उ दंडनीई, माणवगनिहीओ होंति भरहस्स। उसभस्स गिहावासे, असक्कओ आसि आहारो ॥**

शेषा तु दण्डनीतिर्माणवकनिधेर्भवति भरतस्य, सा च पुरो वक्ष्यते। भवतीति वर्तमानकालोऽतीतास्वेष्यासु चावसर्पिणीष्वियमेवरीतिज्ञप्त्यै । श्रीऋषभस्य गृहवासेऽसंस्कृत आहार 'आसीत् तस्य देवानीतकुरुद्वयकल्पद्रुमफलक्षीराब्ध्यंबुभोगात् अन्याऽर्हतां तु बाल्याऽतिक्रमे सिद्धहारोऽभूत् ॥ १६९ ॥ भाष्यं 'परि'

**परिभासणा उ पढमा, मंडलिबंधंमि होइ बीयाउ। चारग छविछेआई, भरहस्स चउव्विहा नीई ॥३॥**

क्रोधान्विर्भर्त्सनं परिभाषणा १ अतः स्थानान्मा गा इति मण्डलिबन्धः २ चारको गुप्तिः ३ छव्युपलक्षणात्करादिच्छेदः ४ आद्यद्वे श्रीऋषभकृते अन्ये तु द्वे माणवकनिधेरिति केचित्, उक्तं नीतिद्वारं १२ ॥३॥ अथ श्रीऋषभोत्पत्तिमाह—'नाभी'

**नाभी विणीयभूमी, मरुदेवी उत्तरा य साढा य। राया य वइरणाहो, विमाणसव्वट्ठसिद्धाओ ॥१७०॥**

कुलकर-पूर्वभवादि-द्वारम् ॥

नाभिकुलकृद्विनीताभूमौ इक्ष्वाकुभूरित्यपरनाम्न्यां भून्यभूत्, मरुदेवा तत्पत्नी तत्कुक्षौ उत्तराषाढायां राजा वैर-नाभः सर्वार्थसिद्धिविमानाच्च्युत्वाऽवातरत् ॥ १७० ॥ 'धण'

**धणसत्थवाह घोसण, जइगमण अडाविवासठाणं च। बहुवोलीणे वासे, चिंता घयदाणमासि तया॥१७१॥**

धनसार्थवाहः, तेन घोषणाऽकारि, सार्थेन सह यतिगमनं, अटव्यां वर्षासु स्थानं, बहुव्यतीते वर्षे, वर्षणं वर्षः, धनेन चिन्ता कृता, साधूनां घृतदानमासीत्तदा ॥ १७१ ॥ 'उत्त०'

**उत्तरकुरु सोहम्मे, महाविदेहे महब्बलो राया। ईसाणे ललियंगो, महाविदेहे वइरजंघो, ॥१॥** (प्रक्षिप्ता)

उत्तरकुरुषु युग्मी, सौधर्मे सुरः, महाविदेहे गन्धिलावतीविजये वैताढ्ये गन्धसमृद्धपुरे महाबलः, विदेहे पुष्कलावतीविजये लोहार्ग्लपुरेशो वज्रजङ्घो राट्, एषा अन्यकृता गाथा ॥ १ ॥ 'उत्त'

**उत्तरकुरु सोहम्मे, विदेहि तेगिच्छियस्स तत्थ सुओ। रायसुय सेट्ठिमच्चा-सत्थाहसुया वयंसा से ॥१७२॥**

तत उत्तरकुरुयुग्मी, सौधर्मे सुरः, वत्साविजये प्रभङ्करापुर्यां सुविधेश्चिकित्सकस्य सुतः केशवः, राजसुतश्रेष्ठ्यमात्यसार्थवाहसुताः ४ तस्य वयस्याः ॥ १७२ ॥ 'विज'

**विज्जसुअस्स य गेहे, किमिकुट्ठोवहुअं जइं दट्ठुं। बिंति य ते विज्जसुयं, करेहि एअस्स तेगिच्छं ॥१७३॥**

कृमिकुष्ठोपद्रुतं यतिं दृष्ट्वा ते वैद्यसुतं ब्रुवन्ति कुरुतैतस्य चिकित्सां ॥ १७३ ॥ 'तिल्लं'

तिल्लं तेगिच्छसुओ, कंबलगं चंदणं च वाणियओ। दाउं अभिणिक्खंतो, तेणेव भवेण अंतगडो ॥१७४॥

लक्षपाकतैलं वैद्यसुतोऽदात्, रत्नकम्बलगोशीर्षचन्दनं च वणिग्दत्त्वाऽभिनिःक्रान्तो दीक्षितः, तेनैव भवेनान्तकृत्कर्मणां जातः ॥ १७४ ॥ ' साहुं० '

साहुं तिगिच्छिऊणं, सामण्णं देवलोगगमणं च। पुंडरगिणिए उ चुया, तओ सुया वइरसेणस्स॥१७५॥

चिकित्सित्वा श्रामण्यं लब्धः, ततो देवलोके गमनं, तत्राऽच्युतेन्द्रसामानिका भूत्वा च्युता महाविदेहे मङ्गलावत्यां विजये पुण्डरीकिण्यां पुर्यां, ततो वज्रसेनतीर्थकृत्सुता जाताः ॥ १७५ ॥ ' पढ '

पढमित्थं वइरणाभो, बाहु सुबाहू य पीढमहपीढे। तेसिं पिआ तित्थअरो, णिक्खंता तेऽवि तत्थेव ॥१७६॥

ते तत्रैवार्हत्पार्श्वे दीक्षिताः ॥ १७६ ॥ ' पढ '

पढमो चउदसपुव्वी, सेसा इक्कारसंगविउ चउरो। बीओ वेयावच्चं, किइकम्मं तइअओ कासी ॥१७७॥

व्यावृत्तभावो वैयावृत्त्यं अन्नपानादिभिरुपचरणां, कृतिकर्म विश्रामणं ॥ १७७ ॥ ' भोग '

भोगफलं बाहुफलं, पसंसणा जिट्ठ इयर अचियत्तं। पढमो तित्थयरत्तं, वीसहि ठाणेहि कासी य ॥१७८॥

ताभ्यां क्रमाद्भोगफलं बाहुफलं चाऽर्जितं, प्रशंसनं ज्येष्ठोऽकरोदितरयोर्लघ्वोस्त्वप्रीतिः, परं मायया प्रशंसा, प्रथमस्तीर्थकरत्वं विंशतिस्थानैरकार्षीत् ॥ १७८ ॥ ' अरि '

श्रीऋषभोत्पत्तिः ॥

**अरिहंत[1] सिद्ध[2] पवयण[3],गुरु[4] थेर[5] बहुस्सुए[6] तवस्सीसुं[7]। वच्छलया एएसिं,अभिक्खनाणोवओगे[8] य ॥१७९॥**

अर्हन्तो जगद्गुरवः, सिद्धाः कृतकृत्याः, प्रवचनं चतुर्धा सङ्घः, गुरुः धर्म्मदः, स्थविरो जात्या षष्टिवर्षीयः, पर्यायाद्विंशतिवर्षदीक्षितः, श्रुतात्समवायभृत्, बहुश्रुतः सूत्रभृतोऽर्थभृत्ततोऽप्युभयभृत्, अर्हत्सिद्धप्रवचनगुरुस्थविरबहुश्रुततपस्विनः, एकारादि विभक्तिव्यत्ययश्च प्राकृतत्वात्, एषां वत्सलता अनुरागः यथास्थगुणोत्कीर्त्तनार्होपचाररूपा, तथाऽभीक्ष्णं ज्ञानोपयोगः ॥ १७९ ॥ ' दंस '

**दंसण[9] विणए[10] आवस्सए[11] य, सीलव्वए[12] निरइआरो। खणलव[13] तवच्चियाए[14][15], वेयावच्चे[16] समाही[17] य ॥१८०॥**

दर्शनं सम्यक्त्वं, विनयो ज्ञानादिविषयः, आवश्यकं अवश्यकार्यः संयमव्यापारः, शीलान्युत्तरगुणाः १८००० शीलाङ्गानि, व्रतानि मूलगुणाः, एषु सम्यक्त्वादिषु निरतिचारः, क्षणलवादेः संवेगभावना, तथा तपः, त्यागो द्रव्यतोऽकल्पानां अन्नपानोपधीनां वर्जनं, कल्पानां यतिषु दानं, भावतः क्रोधादेस्त्यागः, वैयावृत्यं आचार्यो १ पाध्याय २ स्थविर ३ तपस्वि ४ ग्लान ५ शैक्षक ६ साधर्मिक ७ कुल ८ गण ९ सङ्घा १० नामिति दशधा, एकैकं च भक्त १ पाना २ सन ३ वस्त्रौ ४ षधदानो ५ पकरणप्रत्युपेक्षा ६ पादप्रमार्जन ७ मार्गसाहाय्य ८ दुष्टस्तेनादिरक्षण ९ कायिकी १० संज्ञा ११ श्लेष्ममात्रकार्पण १२ दण्डकग्रहण १३ भेदात्रयोदशधा, साधर्मिका अन्यसामाचारीकाः साधवः, सङ्घः सुविहितसर्वसाधुगणजः। एषु तपस्त्यागादिषु समाधिररक्तद्विष्टतया प्रवृत्तिः, गुर्वादीनां कार्यकरणात् समाधिकरणं च ॥ १८० ॥ ' अपु '

अप्पुव्वनाणगहणे, सुयभत्ती पवयणे पभावणया। एएहिं कारणेहिं, तित्थयरत्तं लहइ जीवो ॥ १८१ ॥

अपूर्वापूर्वज्ञानस्य श्रुतस्य ग्रहणं, श्रुतभक्तिः श्रुतबहुमानं, प्रवचनप्रभावनता सम्यग्देशनादिना ॥ १८१ ॥ 'पुरि'

पुरिमेण पच्छिमेण य, एए सव्वेऽवि फासिया ठाणा। मज्झिमएहिं जिणेहिं, एक्कं दो तिण्णि सव्वे वा ॥ १८२ ॥

पूर्वेण पश्चिमेन जिनेन एतानि स्थानानि स्पृष्टानि पुनः पुनः करणेन, मध्यमैरेकं द्वे त्रीणि सर्वाणि वा कैश्चित् स्पृष्टानि ॥ १८२ ॥ 'तं च'

तं च कहं वेइज्जइ? अगिलाए धम्मदेसणाईहिं। बज्झइ तं तु भगवओ, तइयभवोसक्कइत्ताणं ॥१८३॥

तत्तीर्थकृन्नामकर्म कथं वेद्यते? उच्यतेऽग्लान्या धर्मदेशनादिभिः, आदिशब्दाद्देहसौगन्ध्यादिचतुस्त्रिंशदतिशयैः पञ्चत्रिंशद्वचनातिशयादिभिः। बध्यते तत्त्वर्हतो भवाद्यस्तृतीयभवस्तं अवष्वष्क्य प्राप्य, तस्य चोत्कृष्टा स्थितिरब्धिकोटाकोटिः। तत्र बन्धसमयादारभ्य नित्यं चिनुयाद्यावदपूर्वकरणस्य सङ्ख्येयभागा इति, केवलकाले तु तस्योदयः ॥ १८३ ॥ 'निय'

नियमा मणुयगईए, इत्थी पुरिसेयरो य सुहलेसो। आसेवियबहुलेहिं, वीसाए अण्णयरएहिं ॥१८४॥

नियमान्मनुजगतौ, स्त्री, पुरुषः, इतरः पण्ढो वा, शुभलेश्यः, बहुलासेवितैरनेकधा सेवितैर्विंशतेरन्यतरैः स्थानैस्तद्बध्नाति ॥ १८४ ॥ 'उव'

उववाओ सव्वट्ठे, सव्वेसिं पढमओ चुओ उसभो। रिक्खेण असाढाहिं, असाढबहुले चउत्थीए ॥१८५॥

सर्वेषां वज्रनाभादीनां सर्वार्थसिद्धौ उपपातोऽभूत्। प्रथमं ऋषभजीवश्च्युतः, भाविनीभूतवदुपचाराद् ऋषभ इति। ऋक्षे नक्षत्रे। आषाढासु उत्तराषाढासु आषाढे मासे बहुलपक्षे ॥ १८५ ॥ 'जम्म'

**जम्मणे नाम वुड्ढी अ, जाईए सरणे इअ। वीवाहे अ अवच्चे, अभिसेए रज्जसंगहे ॥ १८६ ॥**

अर्हतो जन्म १ वंशनामकरणं २ अर्हतो वृद्धिः ३ जातिसरणं ४ विवाहः ५ अपत्यं ६ अभिषेकः ७ राज्यसङ्ग्रहः ८ एतानि द्वाराणि वाच्यानि ॥ १८६ ॥ 'चित्त'

**चित्तबहुलट्ठमीए,जाओ उसभो असाढणक्खत्ते। जम्मणमहो अ सव्वो, णेयव्वो जाव घोसणयं ॥१८७॥**

जन्ममहोत्सवादनु द्वात्रिंशत्कोटीस्वर्णादिवृष्टिं कृत्वा प्रभोर्मातुश्चाशुभं ध्यातुः शिरोऽर्जकमंजरीव स्फुटितेतीन्द्रकृतां घोषणां यावन्नेतव्यः ॥ १८७ ॥ 'संव'

**संवट्ट मेह आयंसगा य, भिंगार तालियंटा य। चामर जोई रक्खं, करेंति एयं कुमारीओ ॥१८८॥**

'भोगंकरा १ भोगवती २ सुभोगा ४ भोगमालिनी ४, तोयधारा ५ विचित्रा च ६ पुष्पधारा ७ अनन्दिताः ८'। १। एता अष्टौ लोके गजदन्ताधोवासिन्यः, तदा भरते गृहाद्यभावादीशाने सूतिगृहं कृत्वा संवर्त्तवातं विकुर्व्य योजनान्तः कचवरं हरन्ति। 'मेघंकरा १ मेघवती २ सुमेघा ३ मेघमालिनी ४, सुवत्सा ५ वत्समित्रा ६ वारिषेणा ७ बलाहकाः ८'। २। एता अष्टौ ऊर्ध्वलोके नन्दनवनकूटवास्तव्या मेघं कृत्वा गन्धांबुपुष्पवृष्टिं। 'नन्दोत्तरा १ तथा नन्दा २ चानन्दा २ नन्द-

वर्द्धनी ४ । विजयाख्या ५ वैजयन्ती ६ जयन्ती ७ चापराजिता ' । ३ । एता अष्टौ रुचकाद्रेः पूर्वस्या एत्य मातुरग्रे आदर्शान् । ' समाहारा १ सुप्रसिद्धा २ सुप्रदत्ता ३ यशोधरा ४ । लक्ष्मीवती ५ चित्रगुप्ता ६ शेषवती ७ वसुन्धरा ८ ' । ४ । एता दक्षिणस्या एत्य भृङ्गारान् । ' इलादेवी १ सुरादेवी २ पृथ्वी ३ पद्मावती ४ तथा । एकनाशा ५ नवमिका ६ भद्रा ७ शीताश्च नामतः ८ ' । ५ । एताः पश्चिमाया एत्य तालवृन्तान् । ' अलम्बुसा १ सश्रुकेशी २ पुंडरीका ३ च वारुणी ४ । हासा ५ सर्वप्रभा ६ (चैव) श्री ७ ह्री ८ नाम्न्यः (कुमारिकाः)' । ६ । एता उत्तरस्याः समेत्य च चामरान् । ' चित्रा १ चित्रकनका २ शतेरा ३ सौत्रामणी ४ ' एता रुचकविदिग्भ्यो ज्योतिरिति दीपिकाः । ' रुता १ रुतांशा २ सुरता ३ रुचकावती ४, एता रुचकद्वीपात् (एत्य) प्रभोश्चतुरङ्गुलं मुक्त्वा नालं छित्वा, विवरे क्षिप्त्वा, तद्रत्नैः सम्पूर्य, हरितालिकया पीठं बध्वा, जन्मगृहात् पूर्वदक्षिणोत्तरासु कदलीगृहत्रयं चतुःशालसिंहासनगर्भं कृत्वा, दक्षिणकदलीगृहेऽर्हतः समातुरभ्यङ्गमुद्वर्त्तनां च कृत्वा, पूर्वकदलीगृहे स्नानं भूषां चोत्तरकदलीगृहे गोशीर्षचन्दनैरग्निं प्रज्वाल्य रक्षां रक्षापोट्टलिकां एतद्दिक्कुमार्यो दिक्कुमारभवनपतिजातीया महत्तरादेव्यो विदधति । इन्द्रेण प्रभुर्मेरुशीर्षे दक्षिणदिशि पाण्डकवनदक्षिणप्रान्ते पञ्चयोजनशतायामायां अर्द्धचन्द्राकारायां मध्ये तदर्द्धविस्तीर्णायां चतुर्योजनोन्नतायां रत्नसिंहासनवेदीवनतोरणवत्यां हेमवर्णायां पाण्डुकम्बलायां शिलायामभिषिक्तः, गतं अर्हज्जन्मद्वारं । १८८ । अथ वंशनामद्वारं ' देसू '

**देसूणगं च वरिसं, सक्कागमणं च वंसठवणा य । आहारमंगुलीए, ठवंति देवा मणुण्णं तु ॥ १८९ ॥**

देशोनं वर्षं प्रभोर्जातं ततः शक्रागमनं च वंशस्थापना च । सर्वार्हन्तो बाल्ये आहारार्थं स्वाङ्गुलिं आस्ये क्षिपन्ति । तस्यां

च देवाः सारं आहारं स्थापयन्ति । १८९ । 'सक्को'

**सक्को वंसट्ठवणे, इक्खु अगू तेण हुंति इक्खागा । जं च जहा जंमि, वए जोगं कासी य तं सव्वं ॥**

अतीतवर्त्तमानैष्यतां आद्यार्हतां वंशस्थापनादि हरेर्जीतं इति कृत्वा शक्रो वंशस्थापने प्रस्तुते इक्षुयष्टिहस्त आगतो अर्हद्दृष्टिं इक्षौ दृष्ट्वोचे प्रभो ! किं इक्षुं अकु भक्षयसि ? अकु भक्षणे इति, ततोऽर्हन् करं प्रासारीत् । हरिरिक्ष्वाकुवंशमस्थापयत् । तदान्येऽपि क्षत्रिया इक्षुं भुञ्जते, तेन भवन्तीक्ष्वाकाः । प्रभोश्च पूर्वजाः काश्यमिक्षुरसं पीतवन्तस्ततः काश्यपगोत्रं । इक्षवश्च तदा पानीयवल्लीवद्रसं गलन्ति स्म । 'जं च' यस्मिन् वयसि यद्योग्यं तदकार्षीत् शक्रः । पश्चार्द्धं पाठान्तरं 'तालफलाहयभगिणी होहि पत्तीति सारवणा' प्रभोर्देशोनवर्षे ताडफलाहतयुग्मिनी ( युग्मिभगिनी ) नन्दानाम्नी ऋषभपत्नी भवित्रीति 'सारवणा' संगोपना नाभिना कृता, गतं वंशनामद्वारम् २ । १९० । 'अह'

**अह वड्ढइ सो भयवं, दियलोयचुओ अणोवमासिरीओ । देवगणसंपरिवुडो, नंदाइ सुमंगला सहिओ ॥**

देवलोकश्च्युतोऽनुपमश्रीः । १९१ । 'असि'

**असिअसिरओ सुनयणो, बिंबुट्ठो धवलदंतपंतीओ । वरपउमगब्भगोरो, फुल्लुप्पलगंधनीसासो ॥**

असितशिरोजः, बिम्बं पक्वगोल्हाफलं तत्समौष्ठः, वृद्धिद्वारं ३ । १९२ । 'जाइ'

**जाइस्सरो अ भयवं, अप्परिवडिएहि तिहि उ नाणेहिं । कंतीहि य बुद्धीहि य, अब्भहिओ तेहि मणुएहिं**

जातिस्मरणश्च प्रभुरप्रतिपतितैस्त्रिभिर्ज्ञानैस्तेभ्यो युग्मिमनुजेभ्योऽभ्यधिकः कान्त्या बुद्धया च, द्वारं ४ । १९३ । 'पढ'

पढमो अकालमच्चू, तहिं तालफलेण दारओ पहओ । कण्णा य कुलगरेणं, सिट्ठे गहिआ उसहपत्ती ॥

कोऽपि बालः प्रथमोऽकालमृत्युर्जातस्तत्र तालफलेन दारकः प्रहतः, युग्मिभिः शिष्टे उक्ते नाभिना ऋषभपत्नी भवित्रीति गृहीता । १९४ । ' भोग '

भोगसमत्थं नाउं, वरकम्मं तस्स कासि देविंदो। दुण्हं वरमहिलाणं, वहुकम्मं कासि देवीओ ॥१९५॥

वधूकर्म देव्योऽकार्षुः, विवाहद्वारं ५ । १९५ । ' छप्पु '

छप्पुव्वसयसहस्सा, पुव्विं जायस्स जिणवरिंदस्स । तो भरहबंभिसुंदरिबाहुबली चेव जायाइं ॥१९६॥

भरतब्राह्म्यौ बाहुपीठौ, महापीठसुबाहू तु सुन्दरी बाहुबली ॥ १९६ ॥ मूलभाष्यं ' देवी ' ' अउ '

देवी सुमंगलाए, भरहो बंभीय मिहुणयं जायं । देवीइ सुनंदाए, बाहुबली सुंदरी चेव ॥ ४ ॥

अउणापण्णं जुअले, पुत्ताण सुमंगला पुणो पसवे । नीईणमइक्कमणे, निवेअणं उसभसामिस्स ॥१९७॥

एकोनपञ्चाशत्पुत्रयुगलानि सुमङ्गला प्रसूता, अपत्यद्वारं ६, नीतीनामतिक्रमणे लोकैः ऋषभस्वामिनो निवेदनं कृतं, । १९७। ततः ' राया '

राया करेइ दंडं, सिट्ठे ते विंति अम्हवि स होउ। मग्गह य कुलगरं सो अ, बेइ उसभो य भे राया ॥१९८॥

श्रीऋषभविवाहापत्यद्वारे॥

राजा दण्डं करोति इत्यर्हता शिष्टे उक्ते ते ब्रुवन्ति अस्माकमपि स राजा भवत्वित्यादौ वर्तमानकालः सर्वावसर्प्पिणीषु प्रायोऽसौ न्याय इतिज्ञप्त्यै, अर्हन्नाह–मार्गयत नाभिकुलकरं । स नाभिर्ब्रूते 'मे' भवतां ऋषभो राजा । १९८ । 'आभो'

**आभोएउं सक्को, उवागओ तस्स कुणइ अभिसेअं । मउडाइअलंकारं, नरिंदजोग्गं च से कुणइ**

आसनकम्पात् आभोग्य उपयोगाद् ज्ञात्वा शक्र उपागतो नरेन्द्रयोग्यं 'से' तस्य मुकुटाद्यलङ्कारं करोति । १९९ । 'भिसि'

**भिसिणीपत्तेहिअरे, उदयं घित्तुं छुहंति पाएसु । साहु विणीआ पुरिसा, विणीअनयरी अह निविट्ठा ॥**

इतरे युग्मिनः बिसिनी पद्मिनी तत्पत्रैरुदकं गृहीत्वा प्रभुमलङ्कृतं वीक्ष्य कथमत्राम्भः क्षिप्यते इति ध्यात्वा पादयोः 'छुहन्ति' क्षिपन्ति । ततः इन्द्र आह साधु विनीताः पुरुषाः, धनदेन विनीता नवयोजनविस्तृता द्वादश दीर्घा नगरी निविष्टा निवेशितेत्यर्थः । ततो दूरस्था नरास्तदासन्ननरानाहुस्ते कुशला इति कालेन सा कोशलाऽभूत् । अभिषेकद्वारं ७ । २०० । 'आसा'

**आसा हत्थी गावो गहिआइं रज्जसंगहनिमित्तं । घित्तूण एवमाई, चउव्विहं संगहं कुणइ ॥ २०१ ॥**

अश्वा हस्तिनः गाः एवमादिचतुष्पदजातिं गृहीत्वा ततो वक्ष्यमाणं चतुर्विधं सङ्ग्रहं करोति । २०१ । 'उग्गा'

**उग्गा १ भोगा २ रायण्ण ३, खत्तिआ ४ संगहो भवे चउहा ।**
**आरक्खि १ गुरु २ वयंसा ३, सेसा जे खत्तिआ ४ ते उ ॥ २०२ ॥**

उग्रा आरक्षका उग्रदण्डकत्वात्, भोगा 'गुर्वि' ति गुरुस्थानीया अपराधानुसारिनीत्यादिकथनात्, राजन्या वयस्याः समानवयसः, शेषा उक्तेभ्योऽन्ये क्षत्रियाश्चतुर्द्धैवं सङ्ग्रहः, द्वारं ८। २०२। पुनर्द्वारगाथाचतुष्कं आह–'आहा'

आहारे १ सिप्प २ कम्मे ३ अ, मामणा ४ अ विभूसणा ५ ।
लेहे ६ गणिए ७ अ रूवे ८ अ, लक्खणे ९ माण १० पोअए ११ ॥ २०३ ॥

आहारः १ शिल्पानि २ कर्म्म ३ ममता ४ विभूषणा ५ लेखः ६ गणितं ७ रूपं ८ लक्षणं ९ मानं येन वस्तु मीयते १० 'पोअए' प्रोतनं पोतः प्रवहणं वा ११। २०३। 'वव'

ववहारे १२ नीइ १३ जुद्धे १४ अ, ईसत्थे १५ अ उवासणा १६ ।
तिगिच्छा १७ अत्थसत्थे १८ अ, वंधे १९ घाए २० अ मारणा २१ ॥ २०४ ॥

व्यवहारः १२ नीतिः १३ युद्धं १४ इषुशास्त्रं १५ उपासना १६ तिगिच्छा १७ अर्थशास्त्रं १८ वन्धः १९ घातस्ताडना २०–२१। २०४। 'जणणू'

जणणू २२ सव २३ समवाए २४, मङ्गले २५ कोउगे २६ इअ ।
वत्थे २७ गंधे २८ अ मल्ले २९ अ, अलंकारे ३० तहेव य ॥ २०५ ॥

द्वारगाथा-चतुष्कं ॥

यज्ञः २२ उत्सवः २३ समवायः २४ मङ्गलानि २५ कौतुकानि २६ वस्त्राणि २७ गन्धाः २८ माल्यानि २९ अलङ्कारः ३० । २०५ । ‘ चोलो ’

चोलो ३१ वण ३२ विवाहे ३३ अ, दत्तिआ ३४ मडयपूअणा ३५ ।
झावणा ३६ थुभ ३७ सद्दे ३८ अ, छेलावणय ३९ पुच्छणा ४० ॥ २०६ ॥

चूला ३१ उपनयनं ३२ विवाहः ३३ दत्तिः ३४ मृतकपूजना ३५ ध्यापना ३६ स्तूपः ३७ शब्दः ३८ खेलापनं ३९ पृच्छना ४० एतानि श्रीऋषभादिकाले प्रवृत्तानि । २०६ । एषां चत्वारिंशद्द्वाराणां व्याख्यार्थं मूलभाष्यं–‘ आसी ’

आसी अ कंदहारा, मूलहारा य पत्तहारा य। पुप्फफलभोइणोऽवि अ, जइआ किर कुलगरो उसभो ॥
आसी अ इक्खुभोई, इक्खागा तेण खत्तिआ हुंति । सणसत्तरसं धण्णं, आमं ओमं च भुंजीआ ॥

आसन् इक्षुभोजिनस्तेनैक्ष्वाकाः, शणः सप्तदशो यस्य तद्धान्यं शालि १ यव २ व्रीहि ४ कोद्रव ५ तिल ६ गोधूम ७ रालक ८ मुद्ग ९ माष १० चवल ११ चणक १२ तुवरी १३ मसूर १४ कुलत्थ १५ निष्पाव १६ शण इति । आमं अपक्वं ओमं न्यूनं च भुक्तवन्तः । ५–६ । ‘ ओमं ’

ओमंपाहारंता, अजीरमाणंमि ते जिणमुविंति । हत्थेहिं घंसिऊणंमि, आहारेहत्ति ते भणिआ ॥७॥

स्तोकं आहारन्तः कालदोषादजीर्यमाणे ते जिनं उपायान्ति, हस्तेन त्वचमपनीयाहारयतेति जिनेन भणिताः ।७। ‘ आसी ’

आसी अ पाणिघंसी, तिम्मिअतंदुलपवालपुडभोई। हत्थतलपुडाहारा, जइआ किर कुलकरो उसहो ॥८॥

यदा किल ऋषभः कुलकरस्तदा लोकाः पाणिभ्यामन्नं घर्षन्तीत्येवंशीलाः पाणिघर्षिणः। तथाप्यजीर्यमाणे तीमितान् तंदुलान् धान्यानि प्रवालपुटे भोक्तुं शीलं येषां ते तीमिततंदुलप्रवालपुटभोजिनः ततोऽप्यजीर्यमाणे हस्ततलद्वयमिलनं पुटस्तत्र मुहूर्त्तं स्थापयित्वा आहारो येषां ते, ततः कक्षासु संस्वेद्येत्यनुक्तमपि। अत्र द्व्यादियोगैर्भुक्तवन्तः, यथा पाणिभ्यां घृष्ट्वा पत्रपुटे च तीमित्वा १ पाणिभ्यां घृष्ट्वा हस्ततलपुटे धृत्वा, पुटे तीमित्वा कक्षासु संस्वेद्य। अथ त्रियोगः, पाणिभ्यां घृष्ट्वा पत्रपटे तीमित्वा हस्तपुटे धृत्वा, चतुर्योगः पाणिभ्यां घृष्ट्वा हस्ततलपुटे धृत्वा पुटे तीमित्वा कक्षासु संस्वेद्य ॥८॥ अत एवाह–'घंसे'

घंसेऊणं तिम्मण, घंसणातिम्मणपवालपुडभोई। घंसणातिम्मपवाले, हत्थउडे कक्खसेए य ॥९॥

घृष्ट्वा तीमनं चक्रुरिति प्रत्येकभङ्गाक्षेपः। घृष्टप्रवालपुटतीमितभुज इति द्वियोगः, घृष्ट्वा प्रवाले तीमित्वा हस्तपुटे संस्थाप्य भुक्तास्त्रियोगः, कक्षास्वेदोक्त्या चतुर्योगाक्षेपः ॥९॥ 'अग'

अगणिस्स य उट्ठाणं, दुमघंसा दट्ठु भीअपरिकहणं। पासेसुं परिछिंदह, गिण्हह पागं च तो कुणह ॥१०॥

नह्येकान्तस्निग्धरूक्षकालयोरग्निः स्यात् किन्तु मध्यमकाल एवेत्यर्हन् जानन्नग्न्युत्पत्त्युपायं प्राग् नाख्यत्। द्रुमघर्षाद्‌ग्न्युत्थानं दृष्ट्वा युग्मिनो भीत्वा प्रभोः परिकथनं चक्रुः। अर्हन्नाह–पार्श्वेषु तृणानि परि समन्तात् छेदयत। ततो हस्त्यश्वैः सर्वे तृणं मिलितं, अग्नौ शान्तेऽवक् गृहीताग्निं पाकं च कुरुत ॥१०॥ 'पक्खे'

आहार-
द्वारम् ॥

**पक्खेव डहणमोसहि, कहणं निग्गमण हत्थिसीसंमि। पयणारंभपवित्ती, ताहे कासी अ ते मणुआ ॥११॥**

अग्नौ प्रक्षेपे कृते औषधीनां दहनं, प्रभोः कथनं ततो राजपाट्या निर्गमनं। अर्हता मृत्पिण्डमानाय्येभशीर्षे कटाहकाकारं कारयित्वेदक्षु पक्वेष्वन्नं पक्त्वाऽश्नीत इत्युक्ते पचनारम्भप्रवृत्तिं ततस्तेऽकार्षुस्तदा कुम्भकृच्छिल्पमभूत् ॥ ११ ॥ गतमाहार-द्वारं, अथ शिल्पद्वारं 'पंचे'

**पंचेव य सिप्पाइं, घड १ लोहे २ चित्त ३ णंत ४ कासवए ५। इक्किक्कस्सय इत्तो वीसं वीसं भवे भेया ॥**

मूलशिल्पानि पञ्च, घट इति कुम्भकृच्छिल्पोपलक्षणं। एवं लोहं, चित्रं, अनन्तं देश्युक्त्या वस्त्रं, काश्यपं नापितशिल्पं। एतावन्ति शिल्पानि। स्वामिना तु उपदिष्टानि कुम्भकृच्चादीनि पञ्च मूलशिल्पानि। तेषां च भेदाः शतं इत्यभवन् ॥२०७॥ गतं शिल्पद्वारं 'कम्मं'

**कम्मं किसिवाणिज्जाइ, ३ मामणा जा परिग्गहे ममया ४। पुव्विं देवेहिं कया, विभूसणा मंडणा गुरुणो ॥१२॥**

कृपिवाणिज्यादि कर्मोच्यते द्वा० ३ 'माम' ४ 'पुव्विं विभूसणे'ति गुरोस्त्रिभुवनगुरोर्मण्डना देहस्य श्रृङ्गारः कृता ५ ॥ १२ ॥ 'लेहं'

**लेहं लिवीविहाणं, जिणेण बंभीइ दाहिणकरेणं ६। गणिअं संखाणं, सुंदरीए वामेण उवइट्ठं ७॥ १३॥**

लेखो लिपिविधानं ६ गणितं सङ्ख्यानमुच्यते। तत्सुन्दर्या वामकरेण, अत एव अङ्कानां वामतो गतिः ७ ॥ १३ ॥ 'भर'

भरहस्स रूवकम्मं,८ नराइलक्खणमहोइअं बलिणो ९। माणुम्माणवमाणप्पमाणगणिमाइवत्थूणं ॥१४॥

'भर०' ८ 'नरा०' अथोदितं उक्तं बाहुबलेः ९ 'माणु०' मानं सेतिकादि, उन्मानं तुलादि कर्षादि, अवमानं हस्तादि, प्रतिमानं गुञ्जादि, गणिमं एकादिसङ्ख्यया गणयित्वा यद्वस्तु क्रीयते, इदं पञ्चधा मानं १० ॥ १४ ॥ 'मणि'

मणिआई दोराइसु,पोआ तह सागरंमि वहणाइं ११। ववहारो लेहवणं, कज्जपरिच्छेदणत्थं वा १२ ॥१५॥

मण्यादेर्दवरकादौ प्रोतनं तथा सागरे वाहनानि पोताः ११। 'वव०' लेख्यादिलेखनं कार्यस्य परिच्छेदनार्थं ज्ञानार्थं लेखादिप्रेषणं वा १२ ॥ १५ ॥ 'नीई'

णीई हक्काराई, सत्तविहा अहव सामभेआई १३। जुद्धाइ बाहुजुद्धाइआइ वट्टाइआणं वा १४ ॥१६॥

हा, मा, धिक्, परिभाषणा, मण्डलिबन्धः, चारकः, छविच्छेद इति सप्तधा नीतिः। सामदानभेददण्डभेदाद्वा चतुर्द्धा १३। युद्धानि बाहुयुद्धादीनि वर्त्तकादीनां लावकादीनां वा १४ ॥ १६ ॥ 'ईस'

ईसत्थं धणुवेओ १५ उवासणा मंसुकम्ममाईआ।१६। गुरुरायाईणं वा, उवासणा पज्जुवासणया ॥१७॥

इषुशास्त्रं धनुर्वेदः १५। 'उवा' स्मश्रुकर्मेति स्मश्रुकचनखच्छेदाद्या उपासना, युग्मिनां रोमादिवृद्धिरोगौ नाभूतां १६ ॥ १७ ॥ 'रोग'

रोगहरणं तिगिच्छा १७ अत्थागमसत्थमत्थसत्थंति १८।

लेखाद्युपासनापर्यन्तद्वाराणि ॥

निअलाइजमो बंधो, १९ घाओ दंडाइताडणया २० ॥ १८ ॥

अर्थशास्त्रमिति अर्थागमशास्त्रं नीतिशास्त्रं १८। निगडादियमो बन्धः १९। 'घाओ' घातो दण्डादिभिस्ताडना २० ॥ १८ ॥ 'मार'

मारणया जीववहो २१ जण्णा नागाइआण पूआओ २२। इंदाइमहा पायं, पइनिअया ऊसवा हुंति २३॥१९

'मार' २१ 'जन्ना' २२ इन्द्रादिमहाः प्रायः प्रतिनियता उत्सवाः २३। यत्तदाकालेऽपि जीववधयज्ञादिकथनं तत्रिविधलोकस्य सत्तायास्तदापि ज्ञस्यै ॥ १९ ॥ 'सम'

समवाओ गोट्ठीणं, गामाईणं च संपसारो वा २४।

तह मंगलाइं सत्थिअ–सुवण्णसिद्धत्थयाईणि २५ ॥ २० ॥

समवायो गोष्ठिनां मिलनं, ग्रामादीनामिति ग्राममुख्यानां वा सम्प्रसारो मिलनं २४। 'तह' स्वस्तिकसुवर्णसिद्धार्थादीनि सुवर्णसिद्धार्थाः पीतसर्षपाः २५ ॥ २० ॥ 'पुव्विं'

पुव्विं कयाइ पहुणो, सुरेहिं रक्खाइ कोउगाइं च। २६।

तह वत्थगन्धमल्लालंकारा केसभूसाई २७–२८–२९–३० ॥ २१ ॥

कौतुकानि रक्षादीनि, च एवार्थे २६ । तथा वस्त्रं २७, गन्धं २८, माल्यं २९, अलङ्कारः ३०, केशभूषादिः प्रभोः
कृताः ॥ २१ ॥ ' तं दट्ठूण '

तं दट्ठूण पवत्तोऽलंकारेउं जणोऽवि सेसोऽवि । विहिणा चूलाकम्मं, बालाणं चोलया नाम ३१ ॥ २२ ॥

तं प्रभुमलङ्कृतं दृष्ट्वा शेषोऽपि जनोऽलङ्कारं कर्तुं प्रवृत्तः ३० । ' विहि० ' शुभमुहूर्त्ते उत्सवविधिना बालानां चूडाकर्म्म
चोलयं चूलकं ३१ ॥ २२ ॥ ' उव '

उवणयणं तु कलाणं, गुरुमूले साहुणो तओ धम्मं । घित्तुं हवंति सड्ढा, केई दिक्खं पवज्जंति ३२ ॥२३॥

बालानां गुरुमूले उपाध्यायपार्श्वे कलानां ग्रहणं उपनयनं कथ्यते । ततः साधूनां मूले धर्म्मं गृहीत्वा श्राद्धा भवन्ति
केऽपि दीक्षां प्रपद्यन्ते ३२ ॥ २३ ॥ ' दट्ठुं '

दट्ठुं कयं विवाहं, जिणस्स लोगोऽवि काउमारद्धो ३३ । गुरुदत्तिआ य कण्णा, परिणिज्जंते तओ पायं ॥२४॥

यतो नाभिना प्रभवे कन्या दत्ता तथा गुरुदत्ताः पित्रादिदत्ताः प्रायः कन्याः परिणीयन्ते ॥ २४ ॥ ' दत्ति '

दत्तिव्व दाणमुसभं, दिंतं दट्ठुं जणंमिवि पवत्तं ।
जिणभिक्खादाणंपि य, दट्ठुं भिक्खा पवत्ताओ ३४ ॥ २५ ॥

वाऽथवा दत्तिर्दानं तद् ऋषभं ददतं दृष्ट्वा जनेऽपि प्रवृत्तं । अपि च अथवा जिनभिक्षादानं दृष्ट्वा भिक्षादानाय प्रवृत्ताः

कौतुकादि-
दत्तिपर्य-
तानि
द्वाराणि ॥

३४ ॥ २५ ॥ ' मड '

**मडयं मयस्स देहो, तं मरुदेवीइ पढमसिध्धुत्ति। देवेहि पुरा महिअं ३५ झावणया अग्गिसक्कारो॥२६॥**

मरुदेवाऽऽद्यसिद्ध इति मृतकं देवैः पुरा महितं क्षीरोदे क्षिप्तं च ३५ । ध्यापना अग्निसंस्कारः ॥ २६ ॥ ' सो जिण '

**सो जिणदेहाईणं, देवेहि कओ ३६ चिआसु थूभाई ३७ ।**

**सद्दो अ रुण्णसद्दो, लोगोऽवि तओ तहा पगओ ३८ ॥ २७॥**

सोऽग्निसंस्कारो जिनदेहादीनां देवैः कृतः ३६, चितासु स्तूपाः कृताः ३७, शब्दो रुदितशब्दो देवैः कृतः, लोकोऽपि ततस्तथा प्रकृतवान् ३८ ॥ २७ ॥ ' छेला '

**छेलावणमुक्किट्ठाइ, बालकीलावणं च सेंटाई ३९। इंखिणिआइ रुअं वा, पुच्छा पुण किं कहं कज्जं ? ॥२८॥**

छेलापनं देशोक्त्या उत्कृष्ट्यादि । तत्र हर्षेण हसितं उत्कृष्टिः, आदिशब्दाद् हर्षेण सिंहनादादिः, तथा सेंटितादि बालक्रीडापनं च । सेंटितं शूत्कारः, आदिशब्दाद् बालक्रीडार्थं लल्लरवचनादिः तथा किङ्किण्यादिरुतं वा ३९ । पृच्छा पुनः किं कथं कार्यमिति ॥ २८ ॥ ' अह '

**अहवनिमित्ताईणं, सुहसइआइ सुहदुक्खपुच्छा वा ४०। इच्चेवमाइ पाएणुप्पन्नं, उसभकालंमि ॥ २९॥**

निमित्तादीनां वा पृच्छा, आदितः स्वप्नादीनां सुखशायितादिका, सुखदुःखपृच्छा वा ४० । ' इच्चे ' इत्येवमादि

मृतकपूजनादि-पृच्छान्तानि द्वाराणि ॥

प्रायेण ॥ २९ ॥ 'किंचि'।

किंचिच्च (त्थ) भरहकाले, कुलगरकालेऽवि किंचि उप्पन्नं। पहुणाय देसिआइं, सव्वकलासिप्पकम्माइं ३०

देशितानि कथितानि, कला लिखितादिकाः ७२ शकुनरुतान्ताः ॥ ३० ॥ 'उस'।

उसभचरिआहिगारे, सव्वेसिं जिणवराण सामण्णं। संबोहणाइ वुत्तुं, वुच्छं पत्तेअमुसभस्स ॥२०८॥

ऋषभचरिताधिकारे सर्वेषां जिनवराणां सामान्यं सम्बोधनाद्युक्त्वा। ततः प्रत्येकं केवलस्य ऋषभस्य वक्तव्यतां वक्ष्ये ॥ २०८ ॥ वाच्यद्वारगाथात्रयमाह 'संबो' 'जीवो' 'तित्थं'

सर्वजिनसम्बोधनादिद्वारगाथा ॥

संबोहण १ परिच्चाए २, पत्तेअं ३ उवहिंमि अ ४।
अन्नलिंगे कुलिंगे अ ५ गामायार ६ परीसहे ७ ॥ २०९ ॥
जीवोवलंभ ८ सुयलंभे ९, पच्चक्खाणे १० अ संजमे ११।
छउमत्थ १२ तवोकम्मे १३, उप्पाया नाण १४ संगहे १५ ॥ २१० ॥
तित्थं १६ गणो १७ गणहरो १८, धम्मोवायस्स देसगा १९।
परिआअ २० अंतकिरिआ, कस्स केण तवेण वा २१ ? ॥ २११ ॥

अर्हतां सम्बोधनं १ परित्यागः २ प्रत्येकं ३ उपधिः ४ प्राकृतत्वाद्विभक्तिव्यत्ययः, अन्यलिङ्गे कुलिङ्गे वाऽर्हन्तो न दीक्षिता इति द्वारं ५ । ग्राम्याचारः ६ परीषहाः ७ जीवादितत्त्वोपलम्भः ८ प्राग्भवश्रुतलाभः ९ प्रत्याख्यानं १० संयमः ११ छद्मस्थकालः १२ तपःकर्म १३ ज्ञानोत्पत्तिः १४ साधुसाध्वीसङ्ग्रहः १५ तीर्थं १६ गणाः १७ गणधराः १८ धर्मोपायस्य देशकाः १९ पर्यायकालः २० अन्तक्रिया मुक्तिः कस्य केन तपसा जाता २१ इति द्वाराणि वाच्यानि ॥ २०९–१०–११ ॥ अथाद्यद्वारचतुष्कस्य स्पष्टनाय गाथाद्वयं 'सवे' 'रज्जा'

सवेऽवि सयंबुद्धा, लोगन्तिअबोहिआ य जीएणं १। सव्वेसिं परिच्चाओ, संवच्छरिअं महादाणं ॥२१२॥
रज्जाइच्चाओऽवि य २ पत्तेअं को व कत्तिअसमग्गो ३। को कस्सुवही ? को वाऽणुण्णाओ केण सीसाणं॥

सर्वेऽर्हन्तः स्वयंबुद्धा लोकान्तिकबोधिताश्चेति जीतं आचार इति तत्सम्बोधनं वाच्यं १ । सर्वेषां परित्यागः सांवत्सरिकं दानं राज्यादित्यागोऽपि चेति परित्यागद्वारं २ । को वा कियत्समग्रः कियत्सहितो दीक्षित इति प्रत्येकद्वारं ३ । कः कस्योपधिः को वा केन शिष्याणामनुज्ञात इत्युपधिद्वारं ४ ॥ २१२–१३ ॥ आद्यद्वारमाह 'सार'

सारस्सय १ माइच्चा २ वण्ही ३ वरुणा ४ य गद्दतोया ५ ।
तुसिआ ६ अव्वाबाहा ७ अग्गिच्चा ८ चेव रिट्ठा ९ य ॥ २१४ ॥

सारस्वताः १ आदित्याः २ वह्न्यः ३ अरुणाः ४ मोऽलाक्षणिकः, गर्दतोयाः ५ तुषिताः ६ अव्याबाधाः ७ अग्नयः

[illegible] ८ [illegible] ९ ॥ २१४ ॥ 'एए'

एए देवनिकाया, भयवं बोहिंति जिणवरिंदं तु । सव्वजगज्जीवहिअं, भयवं ! तित्थं पवत्तेहिं ॥२१५॥

[illegible]राजीस्था भगवन्तं बोधयन्ति कथमित्याह—सर्वजगज्जीवहितं तीर्थं भगवन्! प्रवर्त्तय ॥२१५॥

[illegible] १ । अथ परित्यागद्वारं 'संव'

संवच्छरेण होही, अभिणिक्खमणं तु जिणवरिंदाणं । तो अत्थसंपयाणं, पवत्तए पुव्वसूरंमि ॥२१६॥

'होही' भविष्यति । अभिनिष्क्रमणं दीक्षा, ततोऽर्थसम्प्रदानं पूर्वसूर्ये पूर्वाह्णे ॥ २१६ ॥ 'एगा'

एगा हिरण्णकोडी, अट्ठेव अणूणगा सयसहस्सा । सुरोदयमाईअं, दिज्जइ जा पायरासाओ ॥ २१७॥

[illegible], शतसहस्रा लक्षाः, सूर्योदयादि दीयते यावत्प्रातराशः शीताशनवेला ॥ २१७ ॥ 'सिंघा'

सिंघाडगतिग[illegible]—चच्चरचउमुहमहापहपहेसुं । दारेसु पुरवराणं, रत्थामुहमज्झयारेसुं ॥ २१८ ॥

[illegible] त्रिकोणं स्थानं १, त्रिकं रथ्यात्रयमीलनं २, चतुष्कं चतूरथ्यामीलनं ३, चत्वरं बहुरथ्यामेलः [illegible] महापथो राजमार्गः ६, एषु त्रिकादिषु पथिषु, रथ्यामुखं रथ्याप्रवेशः ७, मध्यकारो रथ्यामध्यं [illegible] ॥२१८॥ 'वर'

[illegible] घोसिज्जइ, किमिच्छअं दिज्जए बहुविहीअं । सुरअसुरदेवदाणवनरिंदमहिआण निक्खमणे ॥

वरं वृणुत वरं वृणुत इति घोषो यस्यां सा वरवरिका, घोष्यते, कः किमिच्छतीति किमिच्छकं। यद्रत्नस्वर्णभाश्च दुकूलादीन्छेत्तद्दीयते। बहुविधिकं, क्वेत्याह-सुरासुरादिमहितानां निःक्रमणे, सुरा वैमानिकाः, असुरा भवनाद्याः, देवाः सामान्यतो व्यन्तराद्याः, दानवा राक्षसाद्या दुष्टमनुष्याः ॥ २१९ ॥ ' तिण्णे '

**तिण्णेव य कोडिसया,अट्ठासीइं च हुंति कोडीओ। असिइं च सयसहस्सा,एअं संवच्छरे दिण्णं ॥२२०॥**

एतत् षोडशमाषरूपस्वर्णस्यैव प्रमाणं नान्यस्य ॥ २२० ॥ अस्यां वरवरिकायां कियन्तिचिद्गाथाश्चूर्णौ भाष्ये वृत्तौ च न व्याख्याताः आदर्शेषु च दृश्यन्ते। तद्यथा 'एएण करण, जहमिच्छा, पुवभव, कुलगर, मिहु, मिंठेण, निवत्तीए,' आसां क्रमाद् दुर्गपदव्याख्या-एतयाऽनन्तरोक्तज्ञानतपःसंयमरूपकरणसम्पादकतया करणत्वं मुक्तेः साधकतमत्वात् तुरेवार्थे, प्राकृतत्वाल्लिङ्गव्यत्ययः त्रिधा मनोवाक्कायविषया शुद्धिः। १ मिथ्यात्वतमसः पूर्वभवे विनिर्गतो यथा च श्रीवीरभवे केवलं प्राप्तः यथा चैतत् वर्त्तमानकालसम्बन्धिपाठरीत्या सामायिकं प्रकाशितं तथा २। कुलकराणां ऋषभस्य भरतस्य च पूर्वभवा इक्ष्वाकुकुलोत्पत्तिः आनुपूर्व्या प्रथमानुयोगान्नेतव्या तथाप्यत्र किञ्चित् किञ्चित् वक्ष्यते ५। मिंठेन मृत्पिण्डं गृहीत्वा हस्तिशीर्षे कुटकं घटार्द्धमात्रं निर्वर्त्तितं ६, निर्वर्त्तिते सति राजा भणति इदृशानि भोः कुर्वन्तु, प्रथमं शिल्पं प्रतिष्ठितं ७ इत्याद्या वरवरिकागाथाः। ' वीरं ' ' राय '

१ एता गाथाः दीपिकाकारैः सूचितास्तथापि न स्पष्टतया लिखिताः न च व्याख्याताः ततः एवमेव स्थापिताः।

वीरं अरिट्ठनेमिं पासं मल्लिं च वासुपुज्जं च। एए मुत्तूण जिणे, अवसेसा आसि रायाणो ॥ २२१ ॥

रायकुलेसुऽवि जाया, विसुद्धवंसेसु खत्तिअकुलेसुं। न य इच्छिआभिसेआ, कुमारवासंमि पव्वइआ॥२२२॥

श्रीवीराद्या विशुद्धवंशेषु निर्दोषेषु राजकुलेष्वपि जाता न चेप्सितराज्याभिषेकाः, क्षत्रियवंशं विनापि राजकुलानि स्युरित्याह-क्षत्रियकुलेष्विति ॥ २२१-२२ ॥ ' संती '

संती कुंथू अ अरो, अरिहंता चेव चक्कवट्टी अ। अवसेसा तित्थयरा, मंडलिआ आसि रायाणो ॥२२३॥

माण्डलिकाः देशाधिपाः, त्यागद्वारं २ ॥ २२३ ॥ ' एगो '

एगो भगवं वीरो, पासो मल्ली अ तिहि तिहि सएहिं। भयवं च वासुपुज्जो, छहि पुरिससएहि निक्खंतो॥२२४॥

मल्लिस्त्रिभिर्नृशतैः स्त्रीशतैश्चेत्यनुक्तमपि ज्ञेयं ॥ २२४ ॥ ' उग्गा '

उग्गाणं भोगाणं, रायण्णाणं च खत्तिआणं च। चउहिं सहस्सेहुसभो, सेसा उ सहस्सपरिवारा ॥२२५॥

प्रत्येकद्वारं ३ ॥ २२५ ॥ प्रसङ्गेनाह ' वीरो '

वीरो अरिट्ठनेमी, पासो मल्ली अ वासुपुज्जो अ। पढमवए पव्वइआ, सेसा पुण पच्छिमवयंमि ॥२२६॥

प्रथमे वयसि आयुषोऽर्धेऽधिके सति ॥ २२६ ॥ ' सव्वे '

सव्वेऽवि एगदूसेण, निग्गया जिणवरा चउव्वीसं। न य नाम अण्णलिंगे, नो गिहिलिंगे कुलिंगे वा ॥

अतीता एष्यन्तश्च एकदुष्येणेन्द्रमुक्तेन निर्गता निष्क्रान्ताः। तत्राद्यान्त्यार्हद्भ्यां शिष्याणां श्वेतो मानोपेतश्चोपधिरुक्तो मध्यमार्हद्भिस्तु यथालब्धः, उपधिद्वारं ४। 'न य' न च अर्हतां साधुलिङ्गं, अन्यलिङ्गं, गृहिलिङ्गं गृहिवेषः, कुलिङ्गं तापसादिवेषः किन्तु तीर्थकृल्लिङ्ग एव दीक्षिताः ॥ २२७ ॥ प्रसङ्गेनाह 'सुम'

सुमइत्थ निच्चभत्तेण, निग्गओ वासुपुज्ज जिणो चउत्थेणं। पासो मल्लीवि अ, अट्ठमेण सेसाउ छट्ठेणं ॥

सुमतिरत्र ॥ २२८ ॥ 'उस' 'उस' 'आस'

उसभो अ विणीआए, बारवईए अरिट्ठवरनेमी। अवसेसा तित्थयरा, निक्खंता जम्मभूमीसुं ॥२२९॥

उसभो सिद्धत्थवणंमि, वासुपुज्जो विहारगेहंमि। धम्मो अ वप्पगाए, नीलगुहाए अ मुणिनामा ॥२३०॥

आसमपयंमि पासो, वीरजिणिंदो अ नायसंडंमि। अवसेसा निक्खंता, सहसंबवणंमि उज्जाणे ॥२३१॥

विहारगेहं, वप्रका, नीलगुफा, आश्रमपदं, ज्ञातखण्डानि वनान्येव। 'मुणिनामा' मुनिसुव्रतः ॥ २२९-३०-३१ ॥ 'पासो'

पासो अरिट्ठनेमी, सिज्जंसो सुमइ मल्लिनामो अ। पुव्वह्णे निक्खंता, सेसा पुण पच्छिमह्णंमि ॥२३२॥

पूर्वाह्णे पुरिमार्द्धमध्ये पश्चिमाह्णे तृतीययामान्तः ॥ २३२ ॥ 'गामा'

केसु विहारो भवे कस्स ? ॥२३३॥

गामायारा विसया, निसेविआ ते कुमारवज्जेहिं ६। गामागराइएसु व, मल्लिनेमी । गामायारशब्देन वा अथवा

कुमारवर्जितैर्जिनैर्निषेविताः । कुमारौ च

ग्राम्याचारा विपया उच्यन्ते । ते

ग्रामाचारो विहार उच्यते, स केषु ग्रामनगरादिषु, कस्य बभूव ॥ २३३ ॥ तत्र ' मग '

उसभो नेमी पासो, वीरो अ अणारिएसुं पि ॥२३४॥

मगहारायगिहाइसु, मुणओ खित्तारिएसु विहरिंसु । छाद्मस्थ्ये

मुनयोऽपि मौनिनो व्यहार्षुः । छाद्मस्था ऋषभादयः

अन्येऽर्हन्तो मगधा देशो राजगृहं पुरं इत्यादिष्वार्यक्षेत्रेषु

केवलेऽपि च यथालाभमनार्येष्वप्यार्येषु च, ग्राम्याचारद्वारं ६ ॥ २३४ ॥ ' उदि '

नव जीवाइपयत्थे, उवलभिऊणं च निक्खंता ८॥

उदिआ परीसहा, सिं पराइआ ते अ जिणवरिंदेहिं ७। ॥ २३५ ॥ ' पढ '

उदिताः परीपहा एषां द्वारं ७ । नव उपलभ्य प्राग्जन्माधीतश्रुतेन ज्ञात्वा द्वारं ८

पंच जमा पढमंतिम–जिणाण सेसाण चत्तारि ॥२३६॥

पढमस्स बारसंगं, सेसाणिक्कारसंग सुयलंभो ९। पञ्चमव्रतेऽन्त-

एव यमाश्चतुर्थव्रतस्य

प्राग्भवे द्वा० ९ । पंच यमा महाव्रतानि प्रथमान्तिमजिनयोः, शेषाणां चत्वार

र्भावात् यतः परिगृहीतैव स्त्री भोग्या ॥ २३६ ॥ ' पच्च '

सेसाणं सामइओ, सत्तरसंगो अ संव्वेसिं ॥२३७॥

पच्चक्खाणमिणं संजमो अ पढमंतिमाण दुविगप्पो । सामायिकच्छेदोपस्थापनारूपो द्विविकल्पो द्विभेदः,

प्रत्याख्यानद्वारमिदमुक्तं १०, ' संज ' संयमश्चारित्रं प्रथमान्त्यजिनयोः

ग्राम्याचारादिसंयमात्मानि द्वाराणि ॥

शेषाणां जिनानां सामायिकरूप एव संयमः, तथा सर्वेषामपि सामान्येन संयमः सप्तदशाङ्गस्तु सप्तदशभेदः पञ्चाश्रवविरत्यादिः द्वारं ११ ॥ २३७ ॥ 'वास' 'तिग' 'तह'

वाससहस्सं १ बारस २ चउद्दस ३ अट्ठार ४ वीस ५ वरिसाइं ।
मासा छ ६ न्नव ७ तिण्णि अ, ८ चउ ९ तिग १० दुग ११ मिक्कग १२ दुगं च १३ ॥ २३८ ॥
तिग १४ दुग १५ मिक्कग १६ सोलस वासा १७ तिण्णि अ १८ तहेवऽहोरत्तं १९ ।
मासिक्कारस २० नवगं २१ चउपण्ण दिणाइ २२ चुलसीई २३ ॥ २३९ ॥
तह बारस वासाइं, जिणाण छउमत्थकालपरिमाणं[12]। उग्गं च तवोकम्मं, विसेसओ वद्धमाणस्सं[13] ॥ २४० ॥

ऋषभादीनां क्रमात् छद्मस्थकालो वर्षसहस्रं १ द्वादशवर्षाणि २ चतुर्दशवर्षाणि ३ अष्टादशवर्षाणि ४ विंशतिवर्षाणि ५ मासाः षट् ६ नवमासाः ७ त्रयो मासाः ८ चत्वारो मासाः ९ त्रयो मासाः १० द्वौ मासौ ११ एको मासः १२ द्वौ मासौ १३ त्रीणि वर्षाणि १४ द्वे वर्षे १५ एकं वर्षं १६ षोडश वर्षाणि १७ त्रीणि वर्षाणि १८ अहोरात्रमेकं १९ एकादश मासाः २० नव मासाः २१ चतुःपञ्चाशद्दिनानि २२ चतुरशीतिर्दिनानि २३ द्वादश वर्षाणि २४ च । इह वीरस्य सातिरेकाणि द्वादश वर्षाणि छद्मस्थकालो 'बारस चेवय वासा मासा छच्चेव अद्धमासो य' इतीहैव वक्ष्यमाणत्वात्, षण्मासाद्यल्पत्वान्न विवक्षितमिति लक्ष्यते, छद्मस्थद्वा० १२ । तपःकर्म्मद्वारमाह 'उग्गं' सर्वेषामर्हतां तपःकर्मोग्रमन्यजन्तुभिर्दुराराध्यं

अवसेयं, विशेपस्तु वर्द्धमानस्य, तपःद्वा० १३ ॥ २३८–३९–४० ॥ ज्ञानोत्पादद्वारमाह' फग्गुणेत्यादि '

ज्ञानोत्पादद्वारम् ॥

फग्गुणबहुलिक्कारसि, उत्तरसाढाहि नाणमुसभस्स[1]। पोसिक्कारसि सुद्धे, रोहिणिजोएण अजिअस्स[2]॥२४१

कत्तिअबहुले पंचमि, मिगासिरजोगेण संभवजिणस्स[3]। पोसे सुद्धचउद्दसि, अभीइअभिणंदणजिणस्स[4]२४२

चित्ते सुद्धिक्कारसि, महाहि सुमइस्स नाणमुप्पण्णं[5]। चित्तस्स पुण्णिमाए, पउमाभजिणस्स चित्ताहिं[6]२४३॥

फग्गुणबहुले छट्ठी, विसाहजोगे सुपासनामस्स[7]। फग्गुणबहुले सत्तमि, अणुराह ससिप्पहजिणस्स[8]॥२४४॥

कत्तिअसुद्धे तइया, मूले सुविहिस्स पुप्फदंतस्स[9]। पोसे बहुलचउद्दसि, पुव्वासाढाहि सीअलजिणस्स[10] २४५

पण्णरासि माहबहुले, सिज्जंसाजिणस्स सवणजोएणं[11]। सयभिय वासुपुज्जे, वीयाए माहसुद्धस्स[12]॥ २४६ ॥

पोसस्स सुद्धछट्ठी, उत्तरभद्दवय विमलनामस्स[13]। वइसाह बहुलचउद्दसि, रेवइजोएणऽणंतस्स[14]॥ २४७ ॥

पोसस्स पुण्णिमाए, नाणं धम्मस्स पुस्सजोएणं[15]। पोसस्स सुद्धनवमी, भरणीजोगेण संतिस्स[16] ॥ २४८ ॥

चित्तस्स सुद्धतइआ, कित्तिअजोगेण नाण कुंथुस्स[17]। कत्तिअसुद्धे बारसि, अरस्स नाणं तु रेवईहिं[18]॥२४९॥

मग्गासिरसुद्धइक्कारसीइ, मल्लिस्स अस्सिणीजोगे[19]। फग्गुणबहुले बारसि, सवणेणं सुव्वयजिणस्स[20]॥ २५०

मगसिरसुद्धिक्कारसि, अस्सिणिजोगेण नमिजिणिंदस्से[21]। आसोअमावसाए, नेमिजिणिंदस्स चित्ताहिं[22]
चित्ते बहुलचउत्थी, विसाहजोएण पासनामस्से[23]। वइसाहसुद्धदसमी, हत्थुत्तरजोगि वीरस्से[24] ॥ २५२ ॥

गाथा द्वादश स्पष्टाः किन्तु 'बहुले'ति कृष्णपक्षः, 'सुद्धे'ति शुक्लपक्षः। रोहिणीयोगेनेति चन्द्रस्य रोहिण्या सह योगे सतीत्यर्थः एवं सर्वत्र ज्ञेयं 'अभिणंदणम'भिनंदः णं वाक्यालङ्कारेऽभिजिति अत्र पौषशुक्लचतुर्दश्यामभिजिन्न घटते, अतः केऽपि 'पोसे बहुलचउद्दसी'ति पठंति, तत्राभिजितः सम्भवात्। यद्वा 'अदिती अभिनन्दणस्स' पाठः स च संगतः, अभिनन्दनस्य मिथुनराशिभावात् तत्रादितौ पुनर्वस्वोः। कार्तिकसुदितृतीयस्यां मूले सुविधेः सुविधिदेशकस्य पुष्पदन्तार्हतः। शतभिषजि भे माघसुदिद्वितीयस्यां वासुपूज्ये ज्ञानं। चैत्रसुदितृतीयायां कृत्तिकायां कुन्थोः, कार्तिकसुदि १२ अरस्य रेवत्यां। इह भनाम्नि बहुवचनं प्राकृतत्वात् ॥ २४१–५२ ॥ 'तेवीसा' २३

तेवीसाए नाणं, उप्पण्णं जिणवराण पुव्वह्णे। वीरस्स पच्छिमह्णे, पमाणपत्ताए चरिमाए ॥ २५३ ॥

अर्हतां एकरात्रिकीप्रतिमायां स्थितानां पूर्वाह्णे सूर्योदये ज्ञानं, वीरस्य प्रमाणप्राप्तायां चरमायां पौरुष्यां सत्यां, अन्ये तु मल्लेरपि दीक्षाहे पश्चिमाह्णे। ततो द्वितीयाहे समवरणासन्न एव क्रीडायातस्य विश्वसेनस्य दानादाद्यपारणकजीतादर्हदादानात् पारणं ॥ २५३ ॥ 'उस'

उसभस्स पुरिमताले, वीरस्सुजुवालिआनईतीरे। सेसाण केवलाइं, जेसुज्जाणेसु पव्वइआ ॥ २५४ ॥

पुरिमताले पुरे शकटमुखोद्याने । 'उजु०' ऋजुवालुका ॥ २५४ ॥ 'अट्ठ'

अट्ठमभत्तंतमी, पासोसहमाल्लिरिट्ठनेमिणं । वासुपुज्जस्स चउत्थेण, छट्ठभत्तेण सेसाणं ॥ २५५ ॥

अष्टमभक्तान्ते पार्श्वादीनां ज्ञानं, ज्ञानद्वा० १४ ॥ २५५ ॥ अथ सङ्ग्रहद्वारं १५ 'चुलसी'त्यादि गाथाः ८

चुलसीइं च सहस्सा एगं च दुवे अ तिण्णि लक्खाइं । तिण्णि अ वीसहिआइं तीसहिआइं च तिण्णेव २५६॥

तिण्णि अ अड्ढाइज्जा, दुवे अ एगं च सयसहस्साइं । चुलसीइं च सहस्सा, बिसत्तरि अट्ठसट्ठिं च ॥२५७॥

छावट्ठिं चउसट्ठिं वावट्ठिं सट्ठिमेव पण्णासं । चत्ता तीसा वीसा अट्ठारस सोलस सहस्सा ॥ २५८ ॥

चउदस य सहस्साइं, २४ जिणाण जइसीससंगहपमाणं । अज्जासंगहमाणं, उसभाईणं अओ वुच्छं ॥२५९

तिण्णेव य लक्खाइं तिण्णि य तीसाय तिण्णि छत्तीसा । तीसा य छच्च पंच य तीसा चउरो अ वीसा अ २६०

चत्तारि अ तीसाइं, तिण्णि अ असिआई तिण्हमेत्तो । अ वीसुत्तरं छ अहिअं तिसहस्सहिअं च लक्खं च ॥

लक्खं अट्ठसयाणि अ बावट्ठिसहस्स चउसयसमग्गा । एगट्ठी छच्च सया सट्ठिसहस्सा सया छच्च ॥२६२॥

सट्ठि पणपण्णा पण्णेगचत्त चत्ता तहट्ठतीसं च । छत्तीसं च सहस्सा अज्जाणं संगहो एसो ॥२६३॥

चतुरशीतिसहस्राणि १ एकं लक्षं २ लक्षद्वयं ३ लक्षत्रयं ४ विंशतिसहस्राधिकं लक्षत्रयं ५ त्रिंशत्सहस्राधिकं लक्षत्रयं ६

लक्षत्रयं ७ सार्द्धलक्षद्वयं ८ लक्षद्वयं ९ एकं लक्षं १० चतुरशीतिः सहस्राणि ११ द्वासप्ततिसहस्राणि १२ अष्टषष्टिसहस्राणि १३ षट्षष्टिसहस्राणि १४ चतुःषष्टिसहस्राणि १५ द्वाषष्टिसहस्राणि १६ षष्टिसहस्राणि १७ पञ्चाशत्सहस्राणि १८ चत्वारिंशत्सहस्राणि १९ त्रिंशत्सहस्राणि २० विंशतिसहस्राणि २१ अष्टादशसहस्राणि २२ षोडशसहस्राणि २३ चतुर्दशसहस्राणि २४ एतज्जिनानामृषभादिवीरान्तानां यथाक्रमं यतिशिष्यसङ्ग्रहप्रमाणं । आर्यासङ्ग्रहमानमिदं । ३ लक्षाणि १ त्रिंशत्सहस्राधिकानि त्रीणि लक्षाणि २ षट्त्रिंशत्सहस्राधिकानि त्रीणि ल० ३ त्रिंशत्सहस्राधिकानि षट् लक्षाणि ४ त्रिंशत्सहस्राधिकानि पञ्च ल० ५ विंशतिसहस्राधिकानि चत्वारि ल० ६ त्रिंशत्सहस्राधिकानि चत्वारि ल० ७ अशीतिसहस्राधिकानि त्रीणि ल० ८ त्रयाणां तीर्थकृतामित ऊर्ध्वं यथा वक्ष्ये इति गम्यते विंशतिसहस्राधिकं लक्षं ९ षड्भिरार्याभिरधिकं ल० १० त्रिसहस्राधिकं लक्षं ११ लक्षमेकं १२ अष्टशताधिकं लक्षं १३ द्वाषष्टिसहस्राणि १४ चतुर्भिः शतैः समग्राणि द्वाषष्टिसह० १५ षट्शताधिकानि एकषष्टिसहस्राणि १६ षट्शताधिकानि षष्टिसह० १७ षष्टिसहस्रा० १८ पञ्चपञ्चाशत्सह० १९ पञ्चाशत्सहस्राणि २० एकचत्वारिंशत्सह० २१ चत्वारिंशत्सहस्रा० २२ अष्टत्रिंशत्सहस्रा० २३ षट्त्रिंशत्सहस्राणि २४ । एषा साधुसाध्वीनां स्वहस्तदीक्षितानां सङ्ख्या ज्ञेया न तु गणधरादिदीक्षितानामिति वृद्धाः । तथा "सव्वजिणाणं साहू लक्खा अडवीस सहस अडयाला । २८४८००० चुंयाललक्खछायाल सहस चउसय छहिय अज्जा" ४४४६४०६ । क्वाप्यन्यथापि साध्वीसङ्ख्या दृश्यते ॥२५६–६३॥ 'पढ'

**पढमाणुओगसिद्धो, पत्तेअं सावयाइआणंपि । नेओ सव्वजिणाणं, सीसाण परिग्गहो (संगहो) कमसो ॥**

सर्वजिनानां शिष्याणां केवल्यादिविशेषवतां, श्रावकादीनां च प्रत्येकं सङ्ग्रहः प्रथमानुयोगे सिद्धः ख्यातो ज्ञेयः सङ्ग-

हृद्वा० १५ ॥ २६४ ॥ अथ तीर्थद्वा० १६ ‘ तित्थं ’

तित्थं चाउवण्णो, संघो सो पढमए समोसरणे। उप्पण्णो अ जिणाणं वीरजिणिंदस्स बीअंमि १६ ॥२६५॥

तीर्थं चातुर्वर्ण्यश्चतुर्भेदः सङ्घः। वीरजिनस्य ‘अभाविया परिस’त्ति द्वितीये समवसरणे तीर्थद्वा० १६ ॥ २६५ ॥ गणद्वारमाह १७ ‘ चुल ’ ‘ इक्का ’ ‘ तित्ती ’

चुलसीई पंचनउई विउत्तरं सोलसुत्तर सयं चं। सत्तहिअं पणनउई तेणउई अट्ठसीई अं ॥ २६६ ॥

इक्कासीई वावत्तरी अं छावट्ठि सत्तवण्णा यं। पण्णा तेयालीसा छत्तीसा चेव पणतीसा ॥ २६७ ॥

तित्तीसं अट्ठवीसा अट्ठारसं चेव तहय सत्तरसं। इक्कारसं दसं नवंगं गणाण माणं जिणिंदाणं ॥२६८॥

८४। ९५। १०२। ११६। १००। १०७। ९५। ९३। ८८। ८१। ७२। ६६। ५७। ५०। ४३। ३६। ३५। ३३। २८। १८। १७। ११। १०। ९। अत्रैकवाचनाचारक्रियास्थानं समुदायो गणः द्वा० १७ ॥ २६६–६७–६८ ॥

गणधरद्वारमाह १८ ‘ एक्का ’

एक्कारस उ गणहरा, जिणस्स वीरस्स सेसयाणं तु। जावइआ जस्स गणा, तावइआ गणहरा तस्स ॥

वीरस्यान्त्यगणद्वये द्वाभ्यां द्वाभ्यां गणभृद्भ्यां वाचनादानादेकादश गणधराः द्वा० १८ ॥ २६९ ॥ ‘ धम्मो ’

तीर्थ-गणधर-द्वाराणि ॥

धम्मोवाओ पवयण—महवा पुव्वाइं देसगा तस्स। सव्वजिणाण गणहरा, चउदसपुव्वी व जे जस्स ॥

धर्मोपायः प्रवचनं—द्वादशाङ्गं पूर्वाणि वा तस्य देशकाः कथकाः सर्वजिनानां गणधरा मूलसूत्रकृतः ये चतुर्दशपूर्वीणस्ते धर्मोपायस्य देशकाः ॥ २७० ॥ ‘ सामा ’

सामाइयाइया वा, वयजीवणिकायभावणा पढमं । एसो धम्मोवाओ, जिणेहि सव्वेहि उवइट्ठो ॥१९॥

वा अथवा, व्रतानि ५, ४ वा जीवनिकायाः ६, भावनाः २५ द्वादश वा, एषां द्वन्द्वे व्रतजीवनिकायभावनाः, सामायिकादयः चारित्रसामायिकपूर्विकाः सत्यो धर्मोपायः स प्रथमं ‘ जिणे० ’ ( जिनैः ) पश्चाज्जिनकल्पादिः प्रोक्तः श्राद्धधर्मश्च द्वा० १९ ॥ २७१ ॥ ‘ उस ’

उसभस्स पुव्वलक्खं, पुव्वंगूणमजिअस्स तं चेव। चउरंगूणं लक्खं, पुणो पुणो जाव सुविहित्ति ॥२७२॥

पूर्वलक्षं पर्यायो दीक्षाकालः, तदेव पूर्वलक्षं पूर्वाङ्गेनोनं अजितस्य पर्यायः, । तत्र पूर्वाङ्गं ८४ लक्षवर्षाणि । तच्च पूर्वाङ्गेन गुणितं पूर्वं स्यात्तथा सुविधिं यावत् पूर्वलक्षं पुनः पुनश्चतुर्भिः पूर्वाङ्गैरूनं यथा—सम्भवस्य ४ पूर्वाङ्गैरूनं पूर्वलक्षं पर्यायः । अभिनन्दनस्य ८ पूर्वाङ्गैरित्यादि । यावत्सुविधेरष्टाविंशतिपूर्वाङ्गैरूनं पूर्वलक्षं पर्यायः ॥ २७२ ॥ ‘ पण ’ ‘ चउ ’

पणवीसं तु सहस्सा, पुव्वाणं सीअलस्स परिआओ । लक्खाइं इक्कवीसं, सिज्जंसजिणस्स वासाणं ॥२७३

चउपण्णं[12] पण्णारस[13] तत्तो अद्धट्ठमाइ लक्खाइं[14] । अड्ढाइज्जाइं[15] तओ, वाससहस्साइं पणवीसं[16] ॥२७४॥

[illegible] गाथा ॥ २७३ ॥ '१४ ल० । १५ ल० । अर्द्धाष्टमलक्षाणीति ७ ल० ५० सह० । अर्द्धतृतीयलक्षाणीति २ ल० ५०
सह० । २१ सह० ॥ २७४ ॥ 'तेवी'

तेवीसं च सहस्सा, रज्जाणि अचक्कमाणि अ हवंति । इगवीसं च सहस्सा वाससऊणा य पणपण्णा ॥२७५॥

२३ सह० ७५० । २१ सह० । वर्षशतोनानि ५५ वर्षसहस्राणि ॥ २७५ ॥ 'अद्ध'

[illegible]कुमारत्तम्मी, अड्डाइज्जा य सत्त य सयाइं । सयरी बिचत्तवासा दिक्खाकालो जिणिंदाणं ॥२७६॥

अर्द्धाष्टमानि ७ सह० ५०० । अर्द्धतृतीयसहस्राणि २ सह० ५०० । ७०० । ७० । ४२ वर्षाः ॥ २७६ ॥ प्रसङ्गेन
[illegible] 'उस'

उसभस्स कुमारत्तं, पुव्वाणं वीसई सयसहस्सा । तेवट्ठी रज्जंमी, अणुपालेऊण णिक्खंतो ॥२७७॥

'तेवट्ठी' ६३ लक्षपूर्वाणि राज्येऽनुपाल्य निष्क्रान्तः ॥ २७७ ॥ 'अजि'

अजियस्स कुमारत्तं, अट्ठारस पुव्वसयसहस्साइं । तेवण्णं रज्जंमी, पुव्वंगं चेव बोद्धव्वं ॥२७८॥

'तेवण्णं' ५३ लक्षपूर्वाणि पूर्वाङ्गं च ॥ २७८ ॥ 'पण्ण'

पण्णरस सयसहस्सा, कुमारवासो अ संभवजिणस्स । चोआलीसं रज्जे, चउरंगं चेव बोद्धव्वं ॥२७९॥

१५ पूर्वलक्षाणि, ४४ पू० ल० ४ पूर्वाङ्गानि च राज्ये ॥ २७९ ॥ 'अद्ध'

अद्धत्तेरस लक्खा, पुव्वाणऽभिणंदणे कुमारत्तं । छत्तीसा अद्धं चिय, अट्ठंगा चेव रज्जंमि ॥२८०॥

१,२ ल० ५० स० । ३६ ल० ५० सह० पूर्वाणि अष्टौ पूर्वाङ्गानि च राज्ये ॥ २८० ॥ 'सुम'

सुमइस्स कुमारत्तं, हवंति दस पुव्वसयसहस्साइं । अउणातीसं रज्जे, बारस अंगा य बोद्धव्वा ॥२८१॥

एकोनत्रिंशत्पूर्वलक्षाणि । द्वादश पूर्वाङ्गानि राज्ये ॥ २८१ ॥ 'पउ'

पउमस्स कुमारत्तं, पुव्वाणऽद्धट्ठमा सयसहस्सा । अद्धं च एगवीसा, सोलस अंगा य रज्जंमि ॥२८२॥

राज्ये २१ ल० ५० सह० षोडश पूर्वाङ्गानि ॥ २८२ ॥ 'पुव' 'अड्ढा'

पुव्वसयसहस्साइं, पंच सुपासे कुमारवासो उ । चउदस पुण रज्जंमी, वीसं अंगा य बोद्धवा ॥२८३॥

अड्ढाइज्जा (अध्धट्ठा उ) लक्खा, कुमारवासो ससिप्पहे होइ । अद्धं छ च्चिय रज्जे, चउवीसंगा य बोद्धवा ॥

'अध्धु' ७ ल० ५० स० ॥ २८३-८४ ॥ 'पुण्णं'

पुण्णं पुव्व(सय)सहस्सा, कुमारवासो उ पुप्फदंतस्स । तावइअं रज्जंमी, अट्ठावीसं च पुव्वंगा ॥२८५॥

पूर्णं लक्षं, तावन्मात्रं इति पूर्वलक्षमेव ॥ २८५ ॥ अथ पर्यायेण सह कुमारवासाद्याह-'पण'

पणवीससहस्साइं, पुव्वाणं सीअले कुमारत्तं । तावइअं परिआओ, पण्णासं चेव रज्जंमि ॥ २८६ ॥

तावानेवेति पञ्चविंशतिपूर्वसहस्राणि पर्यायः, ५० पूर्वसह० राज्ये ॥ २८६ ॥ 'वासा'

वासाण कुमारत्तं, इगवीसं लक्ख हुंति सिज्जंसे । तावइअं परिआओ, बायालीसं च रज्जंमि ॥२८७॥

२१ ल० वर्ष०, ४२ ल० वर्ष० ॥ २८७ ॥ 'गिहि' 'पण्ण' 'अद्ध'

गिहवासे अट्ठारस, वासाणं सयसहस्स निअमेणं । चउपण्ण सयसहस्सा, परिआओ होइ वसुपुज्जे ॥
पण्णरस सयसहस्सा, कुमारवासो अ तीसई रज्जे । पणरस सयसहस्सा, परिआओ होइ विमलस्स ॥
अद्धट्ठमलक्खाइं, वासाणमणंतई कुमारत्ते । तावइअं परिआओ, रज्जंमी हुंति पण्णरस ॥ २९० ॥

७ ल० ५० सह० वर्ष० अनन्तजितः अनन्तस्य, १५ ल० ॥ २८८–९० ॥ 'धम्म'

धम्मस्स कुमारत्तं, वासाणड्ढाइआइं लक्खाइं । तावइअं परिआओ, रज्जे पुण हुंति पंचेव ॥ २९१ ॥

५ ल० वर्ष० राज्ये ॥ २९१ ॥ 'सन्ति'

संतिस्स कुमारत्तं, मंडलिअचक्किपरिआअ चउसुंपि । पत्तेअं पत्तेअं, वाससहस्साइं पणवीसं ॥२९२॥

कुमारत्व १ माण्डलिक २ चक्रित्व ३ पर्यायेषु ॥ २९२ ॥ 'एमे' 'एमे' 'मल्लि' 'अद्ध' 'नमि'

एमेव य कुंथुस्सवि, चउसुवि ठाणेसु हुंति पत्तेअं । तेवीससहस्साइं, वरिसाणद्धट्ठमसया य ॥२९३॥

एमेव अरजिणिंदस्स, चउसुवि ठाणेसु हुंति पत्तेअं। इगवीस सहस्साइं, वासाणं हुंति णायव्वा ॥२९४॥
मल्लिस्सवि वाससयं, गिहवासे सेसअं तु परिआओ। चउपण्ण सहस्साइं, नव चेव सयाइ पुण्णाइं ॥२९५
अद्धट्ठमा सहस्सा, कुमारवासो उ सुव्वयजिणस्स। तावइअं परिआओ, पण्णरससहस्स रज्जंमि ॥२९६
नमिणो कुमारवासो, वाससहस्साइ दुण्णि अद्धं च। तावइअं परिआओ, पंचसहस्साइं रज्जंमि ॥२९७॥

अर्द्धं सहस्रार्धं ॥ २९३–२९७ ॥ 'तिण्णे'

तिण्णेव य वाससया, कुमारवासो अरिट्ठनेमिस्स। सत्त य वाससयाइं, सामण्णे होइ परिआओ ॥२९८

'सामण्णे' श्रामण्ये, पर्यायः सम्बन्धः ॥ २९८ ॥ 'पास'

पासस्स कुमारत्तं, तीसं परिआओ सत्तरी होइ। तीसा य वद्धमाणे, बायालीसा उ परिआओ ॥२९९॥

पुनराद्यजिनाष्टकव्रतपर्यायगाथां प्रागुक्तामेवाग्रेतनगाथासम्बन्धनायाह 'उस'

उसभस्स पुव्वलक्खं, पूव्वंगूणमाजिअस्स तं चेव। चउरंगूणं लक्खं, पुणो पुणो जाव सुविहित्ति ॥३००॥

प्राग्वत् ॥ ३०० ॥ 'सेसा'

सेसाणं परिआओ, कुमारवासेण सहिअओ भणिओ। पत्तेअंपि अ पुव्वं, सीसाणमणुग्गहट्ठाए ॥३०१॥

शेषाणां पर्यायः कुमारवासेन सहितो भणितः । तथा केवलदीक्षाकालकथने प्रत्येकमपि भणितं, कुत उभयत्रोक्त इत्याह— ‘ सीसा० ’ ॥ ३०१ ॥ प्रसङ्गेनाह ‘ छउ ’

छउमत्थकालमित्तो, सोहेउं सेसओ उ जिणकालो । सव्वाउअंपि इत्तो, उसभाईणं निसामेह ॥३०२॥

छद्मस्थकालमितः पर्यायकालात् संशोध्य शेषो जिनकालः केवलिकालो ज्ञेयः । सर्वायुर्निशामयत शृण्वन्तु ॥३०२॥ ‘ चउ ’

चउरासीइ बिसत्तरि सट्ठी पण्णासमेवं लक्खाइं । चत्ता तीसा वीसा, दस दो एगं च पुव्वाणं ॥३०३॥

पूर्वाणां लक्षाणि ॥ ३०३ ॥ ‘ चउ ’

चउरासीइ[11] बावत्तरी[12] अ, सट्ठी[13] अ होइ वासाणं । तीसा[14] य दस[15] य एगं[16] च एवमेए सयसहस्सा ॥३०४॥

एते चतुरशीत्यादयो वर्षाणां शतसहस्रा इति लक्षा बोधव्याः ॥ ३०४ ॥ ‘ पंचा ’

पंचाणउइ सहस्सा[17] चउरासीई[18] अ पंचवण्णा[19] य । तीसा[20] य दस[21] य एगं[22] सयं[23] च बावत्तरी[24] चेव २० ॥३०५॥

एकं यावद्वर्षसहस्राणि । ततः १०० । ७२ वर्षाणि ॥ ३०५ ॥ गतं पर्यायद्वा० । २० । अथान्तक्रियाद्वा० २१ । ‘ निवा ’

निव्वाणमंतकिरिआ सा, चउदसमेण पढमनाहस्स । सेसाण मासिएणं, वीरजिणिंदस्स छट्ठेणं ॥३०६॥

अन्तक्रिया निर्वाणमुच्यते । सा चतुर्दशेति षड्उपवासैः शेषाणां मासिकेन मासोपवासैः ॥ ३०६ ॥ ‘ अट्ठा ’ ‘ एगो ’

अन्तक्रिया-द्वारम् ॥

अट्ठावयचंपुज्जिंत—पावासम्मेअसेलसिहरेसुं। उसभ वसुपुज्ज नेमी, वीरो:सेसा य सिद्धिगया ॥३०७

एगो भयवं वीरो, तित्तीसाइ सह निव्वुओ पासो। छत्तीससएहिं पंचहिं, सएहि नेमी उ सिद्धिगओ॥३०८॥

अष्टापदचम्पोज्जयतमध्यमापापा० क्रमात् ॥ ३०७ ॥ प्रसङ्गादाह एगो त्रयस्त्रिंशता साधुभिः सह पार्श्वो० ५३६ ( सह नेमि ) ॥ ३०८ ॥ 'पंच'

पंचहि समणसएहिं, मल्ली संती उ नवसएहिं तु। अट्ठसएणं धम्मो, सएहि छहि वासुपुज्जजिणो ॥३०९

अष्टोत्तरशतेन धर्म्मः ॥ ३०९ ॥ 'सत्त

सत्तसहस्साणंतइजिणस्स विमलस्स छस्सहस्साइं। पंचसयाइ सुपासे, पउमाभे तिण्णि अट्ठ सया॥

सप्तसहस्राण्यऽन्तजितोऽर्हतः, पद्मप्रभे(ण) त्रीण्यष्टोत्तरशतानि ३१८ इत्यर्थः ॥ ३१० ॥ 'दस'

दसहि सहस्सेहि उसभो, सेसा उ सहस्सपरिवुडा सिद्धा। कालाइ जं न भणिअं, पढमणुओगाउ तं णेअं

शेषाः सहस्रपरिवृताः, कालतिथिनक्षत्रादि ॥ ३११ ॥ द्वा० २१ । 'इच्चे'

इच्चेवमाइ सव्वं, जिणाण पढमाणुओगओ णेअं। ठाणासुण्णत्थं पुण, भणिअं २१ पगयं अओ वुच्छं॥

प्रथमानुयोगग्रन्थात् ज्ञेयं। अत्र स्थानाशून्यार्थं पुनरेतद्भणितं। अतः प्रकृतं वक्ष्ये ॥ ३१२ ॥ किं तदित्याह 'उस'

उसभजिणसमुट्ठाणं, उट्ठाणं जं तओ मरीइस्स । सामाइअस्स एसो, जं पुव्वं निग्गमोऽहिगओ ॥३१३

ऋषभजिनसमुत्थानं प्रकृतं, यत्ततः ऋषभान्मरीचेरुत्थानं उत्पत्तिः, यत् यस्मात्सामायिकस्य पूर्वं प्राक् कुतः पुरुषद्रव्यादिदं निर्गतमिति निर्गमोऽधिकृतः ॥ ३१३ ॥ 'चित्त'

चित्तबहुलट्ठमीए, चउहि सहस्सोहि सो उ अवरण्हे । सीआ सुदंसणाए, सिद्धत्थवणंमि छट्ठेणं॥३१४॥

स श्रीऋषभः सुदर्शनायां शिविकायामारूढो निःक्रान्तः ॥ ३१४ ॥ 'चउ'

चउरो साहस्सीओ, लोअं काऊण अप्पणा चेव । जं एस जहा काही, तं तह अम्हेऽवि काहामो ॥३१५

प्रभुरिन्द्रविज्ञप्त्या चतुर्मुष्टिलोचं चक्रे अशोकतले । चत्वारि सहस्राणि पञ्चमुष्टिलोचं कृत्वात्मनैवेति प्रत्यज्ञासिषुः 'जं एस० काही' करिष्यति, 'काहामो' करिष्यामः ॥ ३१५ ॥ 'उस'

उसभो वरवसभगई, घित्तूणमभिग्गहं परमघोरं । वोसट्ठचत्तदेहो, विहरइ गामाणुगामं तु ॥ ३१६ ॥

ऋषभो वरवृषभवद्गतिर्यस्य स परमघोरं मौनाभिग्रहं गृहीत्वा, व्युत्सृष्टो निःप्रतिकर्म्मतया त्यक्त उपसर्गसहतया देहो येन, ईदृशः सन् ग्रामादनु अन्यो ग्रामो ग्रामानुग्रामस्तं ॥ ३१६ ॥ 'णवि'

णवि ताव जणो जाणइ, का भिक्खा ? केरिसा व भिक्खयरा ? ।
ते भिक्खमलभमाणा, वणमज्झे तावसा जाया ॥ ३१ ॥( सू. भा. )

ते भिक्षां प्रभोर्मौनिन उपदेशमलभमानाः कच्छमहाकच्छाद्या भरतलज्जया गृहमनायान्तो गङ्गाकूले वल्कलवस्त्राः प्रासुकपत्राद्याशिनः प्रभुं ध्यायन्तस्तापसा जाताः ॥ ३१ ॥ 'नमि'

नमिविनमीणं जायण, नागिंदो विज्जदाण वेअड्ढे । उत्तरदाहिणसेढी, सट्ठीपण्णासनगराइं ॥३१७॥

कच्छमहाकच्छसुतनमिविनम्योः प्रभुपार्श्वे राज्यस्य याच्ञा, नागेन्द्रो धरणोऽर्हन्नत्यै आगतः पठितसिद्ध ४८ सहस्रविद्यादानं चक्रे, वैताढ्ये विनमेरुत्तरश्रेण्यां गगनवल्लभादीनि ६०, दक्षिणश्रेणौ नमे रथनूपुरादीनि पञ्चाशत्पुराण्यदात्, विद्यासु गौरीगान्धारीरोहिणीप्रज्ञप्त्यो महाविद्याः । ४ ॥ ३१७ ॥ 'भग'

भगवं अदीणमणसो, संवच्छरमणसिओ विहरमाणो। कण्णाहि निमंतिज्जइ, वत्थाभरणासणेहिं च ॥

भगवानप्यदीनमनाः अनशितोऽनाहारः विरहन् लोकैः कन्याभिः ॥ ३१८ ॥ 'संव' 'उस'

संवच्छरेण भिक्खा, लद्धा उसभेण लोगनाहेण। सेसेहि बीयदिवसे, लद्धाओ पढमभिक्खाओ ॥३१९॥

उसभस्स उ पारणए, इक्खुरसो आसि लोगनाहस्स। सेसाणं परमण्णं, अमयरसरसोवमं आसी॥३२०॥

अमृतरसेन रसस्योपमा यत्र तत्, अत्रामृतरसादिविशेषणं परमान्नस्य चित्तवित्तपात्राद्युत्कृष्टताज्ञप्त्यै ॥३१९–२०॥ 'घुट्ठं'

घुट्ठं च अहोदाणं, दिव्वाणि अ आहयाणि तूराणि। देवा य संनिवइआ, वसुहारा चेव वुट्ठा य ॥३२१॥

देवैर्नभस्थैरहोदानमिति घुष्टं १ दिव्यानि तूर्याणि देवदुन्दुभय आहतानि वादितानि २ देवाः श्रेयांससौधं संनिपतिता आगता

वसुधाराः स्वर्णधाराः ३ चशब्दाद् गन्धाम्बुपुष्पाणि वृष्टाः ४ चेलोत्क्षेपं चक्रुः ५ इति पञ्चदिव्यानि सर्वार्हत्पारणकेषु ज्ञेयानि ॥ ३२१ ॥ अथ श्रीऋषभपारणादिस्वरूपसङ्ग्रहगाथामाह 'गय'

गयउर सिज्जंसिक्खुरसदाण वसुहार पीढगुरुपूआ। तक्खसिलायलगमणं, बाहुबलिनिवेअणं चेव ॥

गजपुरे बाहुबलिसुतसोमप्रभाङ्गजश्रेयांसो युवराट्, तत्र 'श्रेयांसः श्याममेरुं स्वयममृतघटैः सिक्तमैक्षिष्ट दीप्तं तेनैव, अर्कच्युतांशून् दिनकृति निहितान् श्रेष्ठिमुख्यः सुबुद्धिः, स्वप्ने शत्रून् जयन्तं भटमथ नृपतिस्तस्य सानिध्यतोऽमी प्रोचुः स्वप्नान् मिथो भूभृदवदनथ कोऽप्यस्ति लाभः कुमारे। ततस्तेनेक्षुरसदानं कृतं, देवैर्वसुधारा वृष्टाः, श्रेयांसो मार्हत्क्रमाक्रमणमस्त्विति रत्नपीठं कृत्वा गुरोः श्रीऋषभस्य पूजाऽस्त्विति त्रिसन्ध्यं पीठमार्चत विशेषतो भोजनकाले ततो लोकोऽपि यत्र यत्र अर्हन्नस्थात् तत्र तत्र पीठमकृत। तदादिकरपीठाख्यं कालेनादित्यपीठं जातं। प्रभोर्बहलीदेशे तक्षशिलातले गमनं अर्हत्शुद्धिनियुक्तनरैर्बाहुबलेर्निवेदनं ॥ ३२२ ॥ अत्राधिकारात्सर्वार्हत्पारणपुराद्याह 'हत्थि' गाथा दश

हत्थिणउरं अओज्झा[2] सावत्थी[3] तहय चेव साकेअं। विजयपुरं बंभथलयं पाडलिसंडं पउमसंडं ॥३२३॥

सेयपुरं रिट्ठपुरं सिद्धत्थपुरं महापुरं चेव। धण्णकडं[13] वद्धमाणं[14] सोमणसं[15] मंदिरं[16] चेव ॥ ३२४ ॥

चक्कपुरं रायपुरं मिहिला रायगिहमेव बोद्धव्वं। वीरपुरं[21] बारवई[22] कोअगडं[23] कोल्लयग्गामो[24] ॥ ३२५ ॥

एएसु पढमभिक्खा, लद्धाओ जिणवरेहि सव्वेहिं। दिण्णाउ जेहि पढमं, तेसिं नामाणि वोच्छामि ।३२६।

श्रीऋषभपारणादिस्वरूपम् ॥

सिज्जंसे बंभदत्ते सुरेंददत्ते य इंददत्ते अ। पउमे अ सोमदेवे माहिंद तह सोमदत्ते अ ॥ ३२७ ॥
पुस्से पुणव्वसू पुणनंद सुनंदे जए अ विजए य। तत्तो अ धम्मसीहे सुमित्त तह वग्घसीहे अ॥३२८॥
अपराजिअ विस्ससेणे वीसइमे होइ बंभदत्ते अ। दिण्णे वरादिण्णे पुण धण्णे बहुले अ बोद्धव्वे ॥३२९॥
एए कयंजलिउडा, भत्तीबहुमाणसुक्कलेसागा। तक्कालपहट्ठमणा, पडिलाभेसु जिणवरिंदे ॥ ३३० ॥
सव्वेहिंपि जिणेहिं, जहिअं लद्धाओ पढमभिक्खाओ। तहिअं वसुहाराओ, वुट्ठाओ पुप्फवुट्ठीओ ॥३३१॥
अद्धत्तेरसकोडी, उक्कोसा तत्थ होइ वसुहारा। अद्धतेरसलक्खा, जहण्णिआ होइ वसुहारा॥ ३३२ ॥

स्पष्टाः किन्तु 'बंभथलयं' ब्रह्मस्थलं, पाटलिखण्डं, पद्मखण्डं, श्रेयःपुरं, रिष्टपुरं, धान्यकरं, सोमनसं, मन्दिरं, 'कोयकडं' कूपकटं, कोल्लाकग्रामः। 'एएसुत्ति' एतेषु स्थानेषु 'भत्तीबहुमाणसुक्कलेसागा' भक्तिरान्तराप्रीतिर्बहुमानं, विनयकरणं ताभ्यां शुक्ललेश्याकाः। तत्कालप्रहृष्टमनसः जिनेन्द्रान् प्रत्यलंभयन्, 'जहियं' यत्र लब्धाः प्रथमभिक्षाः तत्र वसुधारापुष्पवृष्ट्यो देवैर्वृष्टाः, 'अद्धते०' अर्द्धं त्रयोदशं यासां ॥ ३२३–३२ ॥ 'सव्वे'

सव्वेसिंपि जिणाणं,जेहिं दिण्णाउ पढमभिक्खाओ। ते पयणुपिज्जदोसा,दिव्ववरपरक्कमा जाया ॥३३३॥

'दिव०' दिव्य उत्कृष्टो वरः प्रधानः श्रेयोहेतुत्वात् पराक्रमो येषां, यतः ॥३३३ ॥ 'केई'

केई तेणेव भवेण, निव्वुआ सव्वकम्मउम्मुक्का । अन्ने तइअ भवेणं, सिज्झिस्संति जिणसगासे ॥३३४॥

सिद्धिं लप्स्यन्ते ॥ ३३४ ॥ ' कल्लं '

कल्लं सविड्ढीए, पूएहमऽदट्ठु धम्मचक्कं तु । विहरइ सहस्समेगं, छउमत्थो भारहे वासे ॥ ३३५ ॥

स बाहुबलिः कल्ये सर्वर्द्ध्या पूजयाम्यहमिति रात्रौ स्थित्वा प्रातरायातः प्रभुमदृष्ट्वा तत्स्थाने रत्नमयं पीठं तत्र योजनो-च्छ्रितदण्डं, वृत्तौ तु पञ्चयोजनोच्चदण्डं योजनवृत्तं धर्मचक्रं च चक्रे ॥ ३३५ ॥ ' बह '

बहलीअडंबइल्ला—जोणगविसओ सुवण्णभूमीअ । आहिंडिआ भगवआ, उसभेण तवं चन्तेणं ॥३३६॥

बहली अडंबदेशः इल्लादेशः यवनकविषयः एते देशा आहिण्डिता भगवता गतिविषयीकृताः ॥ ३३६ ॥ ' बह '

बहली अ जोणगा, पल्हगा, य जे भगवया समणुसिट्ठा । अन्ने य मिच्छजाई, ते तइया भद्दया जाया ॥३३७॥

समनुश्लिष्टाः स्पृष्टाः अन्येऽपि म्लेच्छजातयो देशाः ॥ ३३७ ॥ ' तित्थ '

तित्थयराणं पढमो उसभरिसी विहरिओ निरुवसग्गो । अट्ठावओ णगवरो, अग्ग(य)भूमी जिणवरस्स ३३८

प्राकृतत्वाच्छ्रीऋषभः निरुपसर्गं उपसर्गरहितं यथास्यात्तथा विहृतः । अग्रभूमिर्विहारार्थं प्रधानभूमिः ॥३३८॥ ' छउ '

छउमत्थप्परिआओ, वाससहस्सं तओ पुरिमताले । णग्गोहस्स य हेट्ठा, उप्पण्णं केवलं नाणं ॥३३९॥

वर्षसहस्रं छद्मस्थपर्यायं भुक्त्वा न्यग्रोधस्य वटस्याधः ॥ ३३९ ॥ 'फग्गु'

**फग्गुणबहुले एक्कारसीइ, अह अट्ठमेण भत्तेणं । उप्पण्णंमि अणंते, महव्वया पंच पण्णवए ॥३४०॥**

उत्पन्नेऽनन्ते ज्ञाने इत्यनुक्तमपि । समवसृतिस्थो महाव्रतानि प्रज्ञापयति ॥ ३४० ॥ 'उप्प'

**उप्पण्णंमि अणंते, नाणे जरमरणविप्पमुक्कस्स । तो देवदाणविंदा, करिंति महिमं जिणिंदस्स ॥३४१॥**

मरणविप्रमुक्तत्वं सकर्मछद्मस्थमरणरहितत्वात् ॥ ३४१ ॥ 'उज्जा' 'तायं'

**उज्जाणपुरिमताले, पुरी (इ) विणीआइ तत्थ नाणवरं । चक्कुप्पाया य भरहे, निवेअणं चेव दोण्हंपि ॥३४२।**

**तायंमि पूइए चक्क, पूइअं पूअणारिहो ताओ । इहलोइअं तु चक्कं, परलोअसुहावओ ताओ ॥ ३४३ ॥**

विनीतापुर्या उद्यानस्थानीयपुरिमतालपुरे शकटमुखोद्याने ज्ञानवरं प्रभोर्जातं, आयुधशालायां चक्रोत्पादश्च भरताय, द्वयोरपि निवेदनं आरक्षकैः कृतं ॥ ३४२ ॥ भरतस्य चक्रछत्रदण्डखड्गनामानि चत्वार्येकेन्द्रियाणि रत्नान्यायुधशालायामुत्पन्नानि, चर्म्ममणिकाकिणीनामान्येकेन्द्रियाणि तु श्रीगृहे, सेनापतिवर्द्धकिपुरोहितरत्नानि तु विनीतायां, गजतुरगरत्ने वैताढ्यमूले, स्त्रीरत्नं तूत्तरश्रेणौ च विद्याभृत्युत्पन्नमिति । भरतो दध्यौ किं चक्रं महाम्युत तातं, तत्र 'तायं' ॥३४३॥ 'सह'

**सह मरुदेवाइ निग्गओ, कहणं पव्वज्ज उसभसेणस्स । बंभीमरीइदिक्खा, सुंदरी ओरोहसु अदिक्खा ॥**

भरतो मरुदेवया सह निर्गतोऽर्हतो धर्म्मकथनं । ऋषभज्येष्टसुतो बद्धगणधरकर्म्मा पुण्डरीकान्याख्यः तस्य प्रव्रज्या ।

भरतः श्राद्धोऽभूत् । ब्राह्मीमरीच्योर्दीक्षा सुन्दरी ममावरोधोऽन्तःपुरं भवित्रीति भरतेनास्थापि सुतानां दीक्षा ॥ ३४४ ॥
मद्ग्रहगाथेयं, दीक्षाक्रमस्त्वेवं ' पंच '

पंच य पुत्तसयाइं, भरहस्स य सत्त नत्तूअसयाइं । सयराहं पव्वइआ, तंमि कुमारा समोसरणे ॥३४५॥

नप्तारः पौत्राः देश्युक्त्या ' सयराहु ' युगपत्तूर्णं वा ॥ ३४५ ॥ ' भव '

भवणवइवाणमंतरजोइसवासी विमाणवासी अ । सविड्डिइ सपरिसा, कासी नाणुप्पयामहिमं ॥३४६॥

सर्वर्द्ध्या सपर्षदो ज्ञानोत्पत्तिमहिमानमकार्षुः ॥ ३४६ ॥ ' दट्टू '

दट्टूण कीरमाणिं, महिमं देवेहि खत्तिओ मरिई । सम्मत्तलद्धबुद्धी, धम्मं सोऊण पव्वइओ ॥३४७॥

जातमात्रेण मरीचीन्मुक्तवानिति मरीचिर्वर्माराज्ञीसुतः । लब्धसम्यक्त्वबुद्धिः । तत्र भरतोक्त्या ब्राह्मी अदीक्षिष्ट
॥ ३४७ ॥ ' माग '

मागहमाई विजयो, वारसभिसेय सुंदरीदिक्खा । आणवण भाउमाणं, समुसरणे पुच्छ दिट्ठंतो ॥३४८॥

भरतस्य मागधादीनां विजयः ' बारसभिसेय सुंदरीदिक्खत्ति ' द्वादशवर्षाभिषेकः सुन्दर्या दीक्षारोधादन्वाचामाम्लै-
र्निरन्तरकृतैः कृशीभूताया भोगनिर्विण्णत्वाद्भरतेनानुज्ञाताया दीक्षा । भ्रातॄणां स्वसेवायै भरतेनाज्ञापनं, किं कुर्म्म इति
तेषां अष्टापदोपरि समवसरणे पृच्छा, अर्हताऽङ्गारदाहकदृष्टान्तं सूत्रकृदङ्गद्वितीयाध्ययनं वैतालीयाख्यं चोक्त्वा दीक्षिताः

तीर्थ-
स्थापनम् ॥

॥ ३४८ ॥ भरतदूते गते ' बाहु '

**बाहुबलिकोवकरणं, निवेअणं चक्कि देवया कहणं । नाहम्मेणं जुज्झे, दिक्खा पडिमा पइण्णा य ॥३४९॥**

निवेदनं चक्रिणे वलितदूतेन, 'देवय'त्ति युद्धे जीयमानेन भरतेन किमयं चक्री नत्वहमिति चिन्तायां देवता चक्रमदात् । ' कहण 'त्ति बाहुबलिना दारुणान् भोगान् ज्ञात्वा कथनं कृतं अलं मे राज्येनेति । तथा चाह ' नाहं० ' नाधर्मेण योऽध्ये तेन दीक्षात्ता अभूतज्ञानः कथं जातज्ञानान् लघुभातॄन्नमामीति ध्यात्वा प्रतिमाऽऽदृता, नाभूतज्ञानो यामीति प्रतिज्ञा च ॥ ३४९ ॥ भाष्यं ' पढ '

**पढमं दिट्ठीजुद्धं, वायाजुद्धं तहेव बाहाहिं । मुट्ठीहि अ दंडेहि अ, सव्वत्थवि जिप्पए भरहो ॥ ३२ ॥**

बाहाभ्यां मुष्टिभ्यां दण्डाभ्यां युद्धे सर्वत्र जीयते भरतः ॥ ३१ ॥ ' सो एव '

**सो एव जिप्पमाणो, विहुरो अह नरवई विचिंतेइ । किं मन्नि एस चक्की, जह दाणि दुब्बलो अहयं ॥३३॥**

स एवं जीयमानो विधुरो भरतो विचिन्तयति यथेदानीं दुर्बलोऽहमिति ॥ ३२ ॥ कायोत्सर्गस्थे च बाहुबलिनि ' संव '

**संवच्छरेण धूअं, अमूढलक्खो उ पेसए अरिहा । हत्थीओ ओयरत्ति अ, वुत्ते चिन्ता पए नाणं ॥ ३४ ॥**

संवत्सरेण धूतामिति ब्राह्मीं सुन्दरीं च पुत्रीं, अमूढं लक्षते इत्यमूढलक्षोऽर्हन् प्रेषयति, ' हस्तिन उत्तरे ' त्युक्ते तस्य को हस्ती ? नूनं मान इति चिन्ता, पदे उत्क्षिप्ते ॥ ३४ ॥ ' उप्प '

मरीचि-दीक्षा ॥

उप्पण्णनाणरयणो, तिण्णपइण्णो जिणस्स पामूले। गंतुं तित्थं नमिउं, केवलिपरिसाइ आसीणो॥३५॥

तीर्णप्रतिज्ञो जिनस्य पादमूले ॥ ३५ ॥ 'काऊ'

काऊण एगछत्तं, भरहोऽवि अ भुंजए विउलभोए। मरिईवि सामिपासे, विहरइ तवसंजमसमग्गो ॥३६॥

एकछत्रं भरतं कृत्वा ॥ ३६ ॥ 'सामा'

सामाइअमाईअं, इक्कारसमाउ जाव अंगाउ। उज्जुत्तो भत्तिगतो, अहिज्जिओ सो गुरुसगासे ॥ ३७ ॥

एकादशाङ्गं यावत्, उद्यमवान्, भक्तिगतो भक्तिमान्, अधीतवान् ॥ ३७ ॥ 'अह'

अह अण्णया कयाई, गिम्हे उण्हेण परिगयसरीरो। अण्हाणएण चइओ, इमं कुलिंगं विचिंतेइ॥३५०॥

ग्रीष्मे, उष्णेनातपेन, परिगतं व्याप्तं शरीरं यस्य स, अस्नानेन परीषहेण त्याजितः संयमात् ॥ ३५० ॥ 'मेरु'

मेरुगिरीसमभारे, न हुमि सम्मत्थो मुहुत्तमवि वोढुं। सामण्णए गुणे, गुणरहिओ संसारमणुकंखी ॥३५१॥

श्रमणानामेते श्रामणा गुणास्तान् मेरुगिरिसमभारान् वोढुं मुहूर्त्तमपि समर्थो न भवामि । संसारानुकाङ्क्षी ॥ ३५१ ॥ 'एव'

एवमणुचिंतंतस्स, तस्स निअगा मई समुप्पण्णा। लद्धो मए उवाओ, जाया मे सासया बुद्धी ॥३५२॥

निजका मतिः ' मए ' मया, शाश्वता आजीवमिति ॥ ३५२ ॥ ' समणा '

**समणा तिदंडविरया, भगवंतो निहुअसंकुइअअंगा। अजिइंदिअदंडस्स उ, होउ तिदंडं महं चिंधं ॥३५३॥**

त्रिभ्यो दुष्टमनोवाक्कायरूपेभ्यो दण्डेभ्यो विरता निवृत्ताः। निभृतानि निश्चलानि सङ्कुचितानि गात्राणि येषां, अजितानीन्द्रियाणि दण्डा मनोवाक्कायरूपाश्च येन, मम मे, चिंधं चिह्नं ॥ ३५३ ॥ ' लोइं '

**लोइंदिअमुंडा संजया उ अहयं खुरेण ससिहो अ। थूलगपाणिवहाओ, वेरमणं मे सया होउ ॥३५४॥**

श्रमणा द्विधा मुण्डाः द्रव्यतो लोचेन, भावतस्त्विन्द्रियैरिन्द्रियाणां अकिञ्चित्करत्वात्। अहं तु न भावमुण्डोऽतोऽलं द्रव्यमुण्डेन, ततः क्षुरेण मुण्डः सशिखश्च स्यां ॥ ३५४ ॥ ' निकिं '

**निक्किंचणा य समणा, अकिंचणा मज्झ किंचणं होउ। सीलसुगंधा समणा, अहयं सीलेण दुग्गंधो ॥३५५**

निर्गतं काञ्चनं स्वर्णादि येभ्यस्ते स्थविरकल्पिकादयः, अकिञ्चना जिनकल्पिकादयः, अहं तु नेदृक्। ततो मम किंचन पवित्रिकादि ' सील० ' अतो गन्धद्रव्यार्हः ॥ ३५५ ॥ ' वव '

**ववगयमोहा समणा, मोहच्छण्णस्स छत्तयं होउ। अणुवाहणा य समणा, मज्झं तु उवाहणा होन्तु॥३५६**

मोहेन छन्नस्याच्छादितस्य छत्रकं, अनुपा० भावकण्टकरहितत्वात् ॥ ३५६ ॥ ' सुक्कं '

**सुक्कंबरा य समणा, निरंबरा मज्झ धाउरत्ताइं। हुंतु इमे वत्थाइं, अरिहो मि कसायकलुसमई ॥३५७॥**

शुक्लाम्बराः, केऽपि निरम्बरा जिनकल्पिका एते श्रमणा, अनेन तापसादिनिरासः। 'मज्झ' मम धातुरक्तानि वस्त्राणि भवन्तु। अर्होऽस्मि कषायवस्त्राणां ॥ ३५७ ॥ 'वज्जं'

वज्जंतऽवज्जभीरू, वहुजीवसमाउलं जलारंभं। होउ मम परिमिएणं, जलेण ण्हाणं च पिअणं च ॥३५८॥

वर्जयन्त्यवद्यभीरवः ॥ ३५८ ॥ 'एवं'

एवं सो रुइअमई, निअगमइविग्गप्पिअं इमं लिंगं। तद्धितहेउसुजुत्तं, पारिव्वज्जं पवत्तेइ ॥ ३५९ ॥

रुचिता इष्टा मतिर्यस्य, निजकमति० तस्मै हितैस्तद्धितैर्हेतुभिः सुयुक्तं परिव्राजामिदं पारिव्राजं ॥ ३५९ ॥ 'अह'

अह तं पागडरूवं, दट्ठुं पुच्छेइ वहुजणो धम्मं। कहइ जईणं तो सो, विआलणे तस्स परिकहणा ॥३६०॥

तं प्रकटरूपं दृष्ट्वा, कथयति यतीनां धर्मं क्षान्त्यादिरूपं। ततोऽसौ धर्मस्त्वया किं नात्त इति जनैर्विचारणे तस्य परिसमन्तात् कथना प्रागुक्तपरिकथना ॥ ३६० ॥ 'धम्म'

धम्मकहाअक्खित्ते, उवट्ठिए देइ भगवओ सीसे। गामनगराइआइं, विहरइ सो सामिणा सद्धिं॥३६१

धर्मकथाक्षिप्तान् दीक्षार्थमुपस्थितान् स्वामिनो शिष्यान् दत्ते, ग्रामनगराकरादिषु, न विद्यते करो यत्र तदकरं 'सद्धिं' सार्द्धं ॥ ३६१ ॥ 'समो'

समोसरण भत्त उग्गह, अंगुलिझय सक्क सावया अहिआ। जेआ वड्ढइ कागिणि-लंछण अणुसज्जणा अट्ठ ॥

मरीचेः क्षान्त्यादि-धर्म-कथना ॥

प्रभोरष्टापदे समवसरणं, चक्री च भ्रातृदीक्षया दुःखितो भ्रातॄन् भोगैर्निमन्त्रयन्नर्हता निषिद्धः। शकटैः 'भत्त'त्ति भक्तमानिन्य सदोषत्वाद्भक्ते निषिद्धे तं शोचन्तं वीक्ष्येन्द्रः 'उग्गह'त्ति अवग्रहं अपृच्छत्। प्रभुणा च देवेन्द्राद्यवग्रहेषूक्तेष्विन्द्रो नत्वा स्वावग्रहं साधूनां अनुजानामीत्याख्यत्, चक्र्यपि स्वावग्रहं अनुज्ञाय 'सक्क'त्ति शक्रं पप्रच्छाऽनेनान्नेन किं कार्यं? शक्रेण गुणाधिकानर्चयेत्युक्ते आलोच्य 'सावगा' विरताः श्रावका अधिका इति ज्ञात्वा। 'अंगुल'त्ति मुख्यरूपं दर्शयेत्युक्ते शक्रेण चक्रिणो मुख्यरूपाङ्गुलिर्दर्शिता। स तदग्रेऽष्टाहिकोत्सवमकरोत्ततः 'ज्झय'त्ति इन्द्रध्वजोत्सवः प्रवृत्तः। अत्र व्यत्ययः प्राकृतत्वात्। चक्री श्राद्धानाकार्य भवद्भिर्मद्गृहे भोज्यं स्वाध्यायपरैश्च भाव्यं, भुक्तैश्च 'जेआ' जितो भवान्, वर्द्धते भयं, तस्मान्मा हन मा हन इति वाच्यं। भोक्तृप्राचुर्यात्तद्रूपकारेषु पाकाक्षमेषु श्राद्धानां हृदि काकिण्या रेखारूपं लाञ्छनं चक्रे। अष्टपुरुषान् जिनान्वा यावदनुसर्जनेत्थं धर्म्मप्रवृत्तिः। तत्रादित्ययशसा रेखास्थाने स्वर्णोपवीतं कृतं। शेषैस्तु रूप्यपट्टसूत्रोपवीतानि कृतान्येवमुपवीतप्रसिद्धिः। अष्ट पुरुषाः ॥ २६२ ॥ 'राया'

**राया आइच्चजसो, महाजसे अइबले अ बलभद्दे। बलविरिए कत्तविरिए, जलविरिए दंडविरिए य ॥२६३॥**

कार्त्तवीर्यः ॥ २६३ ॥ 'एए'

**एएहिं अद्धभरहं, सयलं भुत्तं सिरेण धरिओ अ। पवरो जिणिंदमउडो, सेसेहिं न चाइओ वोढुं ॥२६४॥**

शिरसा धृतः जिनसत्कमुकुटः य इन्द्रेण ऋषभस्य राज्यकाले शिरसि दत्तोऽभूत्ततो भरतेन 'धृतः 'न चाईओ' न शक्तः

भरतस्वामिवात्सल्यम् ॥

|| ३६४ || उक्तानुक्तार्थमाह 'अस्सा'

अस्सावगपडिसेहो, छट्ठे छट्ठे अ मासि अणुओगो। कालेण य मिच्छत्तं, जिणंतरे साहुवोच्छेओ ||३६५||

अश्रावकाणां प्रतिषेधः कृतो रेखाकरणात् || अनुयोगः परीक्षा कृता। नूतननां च लाञ्छनं। 'काले०' कदा नवमजिनान्तरे यतस्तत्र। 'साहु०' (साधुव्यवच्छेदः) || ३६५ || 'दाणं'

दाणं च माहणाणं, वेए कासी अ पुच्छ निव्वाणं। कुंडा थूभे जिणहरे कविलो भरहस्स दिक्खा य ||३६६||

माहनानां भरतार्च्यत्वात् दानं भरतः स्वाध्यायार्थं अर्हत्स्तुतिमिश्रान् श्राद्धधर्म्मप्ररूपकानार्यवेदानकार्षीत्। सुलसायाज्ञवल्क्यादिभिस्त्वनार्याः कृताः। अथ वाच्यद्वाराणि। भरतस्य पृच्छा, अर्हन्निर्वाणं, चिताग्निकुण्डानि। स्तूपाः जिनगृहं। कपिलो यथाऽभूत्। भरतस्य दीक्षा चेति वाच्यानि || ३६६ || भरतपृच्छामाह 'पुण'

पुणरवि अ समोसरणे, पुच्छीअ जिणं तु चक्किणो भरहे। अपुट्ठो अ दसारे, तित्थयरो को इहं भरहे? ||३६७

पुनरपि विहृत्याष्टापदागतेऽर्हति समोसरणे जाते प्रभुं जिनांश्चक्रिणश्च भरतोऽपृच्छत्। अपृष्टश्च दशारान् केशवान् अर्हन्नूचे। पर्षदि को भरते तीर्थकृद्भावीति चापृच्छत् || ३६७ || 'जिण'

जिणचक्किदसाराणं, वण्ण पमाणाइं नाम गोत्ताइं। आऊ पुर माइ पियरो परियाय गइं च साहीअ ||३६८||

अर्हन् जिनचक्रि० वर्णप्रमाणान्युच्चत्वं नामानि गोत्राणि पुराणि मातापितरौ पर्यायान् दीक्षाकालान् गतिर्भवान्तरस-

भरतपृच्छाद्वारम् ||

म्त्रनिधनी, चकाराज्जिनान्तराणि 'साहीअ' शिष्टवान् । तत्रार्हदायूंषि पर्यायाश्च प्रागुक्ता एव ॥ ४६८ ॥ द्वारगाथा । अत्र भाष्यं 'जारि'

जारिसया लोअगुरू, भरहे वासंमि केवली तुब्भे । एरिसया कइ अन्ने, ताया ! होहिंति तित्थयरा ? ॥३८॥
अह भणइ जिणवरिंदो, भरहे वासंमि जारिसो अहयं । एरिसया तेवीसं, अण्णे होहिंति तित्थयरा ॥३६९
होही अजिओ संभव, अभिणंदण सुमइ सुप्पभ सुपासो । ससि पुप्फदंत सीअल सिज्जंसो वासुपुज्जो अ ॥
विमलमणंतइ धम्मो, संती कुंथू अरो अ मल्ली अ । मुणिसुव्वय नमि नेमी, पासो तह वद्धमाणो अ॥३७१॥
अह भणइ नरवरिंदो, भरहे वासंमि जारिसो उ अहं । तारिसया कइ अण्णे, ताया ! होहिंति रायाणो ? ॥
अह भणइ जिणवरिंदो, जारिसओ तं नरिंदसद्दूलो । एरिसया एक्कारस, अण्णे होहिंति रायाणो ॥३७३॥
होही सगरो मघवं, सणंकुमारो य रायसद्दूलो । संत्ती कुंथू अ अरो, होइ सुभूभो य कोरव्वो ॥३७४॥
णवमो अ महापउमो, हरिसेणो चेव रायसद्दूलो । जयनामो अ नरवई, बारसमो बंभदत्तो अ ॥३७५॥

गाथा ८ । 'ताया !' तात ! नरेन्द्रेषु शार्दूलः पराजेयत्वादष्टापदः, कौरव्याः कुरुवंश्याः सनत्कुमाराद्याः

॥ ३६९–३७५ ॥ ‘ होहिं ’

होहिंति वासुदेवा, नव अण्णे नीलपीअकोसिज्जा। हलमुसलचक्कजोही, सतालगरुडज्झया दो दो ॥३९॥

होहिंति वासुदेवा, नव अण्णे नीलपीअकोसिज्जा। हलमुसलचक्कजोही, सतालगरुडज्झया दो दो ॥ हलमुशलयोधिनो बलाः । पीतवस्त्रा-

बलदेवाश्च वासुदेवाश्च । कौशेयं वस्त्रं । ‘ सतालग० ’ तत्र नीलवस्त्रास्तालध्वजाः हलमुशलयोधिनो बलाः । पीतवस्त्रा- गरुडध्वजाश्चक्रयोधिनो वासुदेवाः । तत्र द्वौ द्वाविति बलहरी समकं स्तः ॥ ३९ ॥ ‘ तिवि ’

तिविट्ठू अ दिविट्ठू सयंभु पुरिसुत्तमे पुरिससीहे। तह पुरिसपुंडरीए दत्ते नारायणे कण्हे ॥ ४० ॥

नारायणो लक्ष्मण इत्यन्याख्यः ॥ ४० ॥ ‘ अय ’

अयले विजए भद्दे, सुप्पभे अ सुदंसणे । आणंदे णंदणे पउमे, रामे आवि अपच्छिमे ॥ ४१ ॥

पद्मः श्रीरामाख्यः ॥ ४१ ॥ ‘ आस ’

आसग्गीवे तारय मेरय महुकेढवे निसुंभे अ। बलि पहराए तह रावणे अ नवमे जरासिंधू ॥ ४२ ॥

मधुना भात्रोपलक्षितः कैटभः, बलिः, प्रह्लादः ॥ ४२ ॥ ‘ एए ’

एए खलु पडिसत्तू, कित्तीपुरिसाण वासुदेवाणं । सव्वे अ चक्कजोही, सव्वे अ हया सचक्केहिं ॥४३॥

प्रतिशत्रवः हरीणां, कीर्त्तिपुरुषत्वं प्रान्ते नरकगामित्वात्, कीर्त्तिमात्रस्यैव भावात् प्रतिहरयश्चक्रयोधिनः स्वचक्रैर्हताः ॥ ४३ ॥ ‘ पउ ’ ‘ वर ’

वासुदेव बलदेव- प्रति- वासुदेव- नामानि ॥

पउमाभवासुपुज्जा, रत्ता ससिपुप्फदंत ससिगोरा। सुव्वयनेमी काला, पासो मल्ली पियंगाभा ॥३७६॥
वरकणगतविअगोरा, सोलस तित्थंकरा मुणेयव्वा। एसो वण्णविभागो, चउवीसाए जिणवराणं ॥३७७॥

तप्तवरकनकवद्गौराः पीताः। वर्ण० वर्णविशेषः ॥ ३७७ ॥ उक्तो वर्णः, अथ प्रमाणमाह 'पंचे'

पंचेव अद्धपंचम चत्तारद्धधुट्ठ तह तिगं चेव। अड्ढाइज्जा दुण्णि अ दिवड्ढमेगं धणुसयं च ॥३७८॥

'धणुसयं च' शब्दोऽत्र योज्यते तेन पञ्चैव धनुःशतानि ऋषभः। सार्द्धचत्वारि धनुःशतानि अजित इत्यादि ॥३७८॥ 'नउ'

नउई असीई सत्तरि सट्ठी पण्णासं होइ नायव्वा। पणयाल चत्त पणतीस तीसा पणवीस वीसा य ॥३७९॥
पण्णरस दस धणूणि य, नव पासो सत्तरयणिओ वीरो। नामा पुव्वुत्ता खलु, तित्थयराणं मुणेयव्वा ॥

नवरत्नीन् पार्श्वः, रत्निर्हस्तः। उक्तं प्रमाणं, अथ नाम 'नामा' नामानि पूर्वोक्तानि। अथ गोत्रं ॥ ३७९-८० ॥ 'मुणि'

मुणिसुव्वओ अ अरिहा, अरिट्ठनेमी अ गोअमसगुत्ता। सेसा तित्थयरा खलु, कासवगुत्ता मुणेयव्वा ॥

गोत्राण्युक्त्वायूंषि मुक्त्वा जन्मभुवमाह ॥ ३८१ ॥ 'इक्खा' गाथा १०

इक्खागभूमि उज्झा सावत्थि विणिअ कोसलपुरं च। कोसंबी वाणारसी चंदाणणं तहय कांकंदी ॥३८२॥
भद्दिलपुर सीहपुरं चंपा कंपिल्लि उज्झ रयणपुरं। तिण्णेव गयपुरंमी मिहिला तह चेव रायगिहं ॥३८३॥

मिहिलो सोरिअनयरं वाणारसि तह य होइ कुंडपुरं। उसभाईण जिणाणं जम्मणभूमी जहासंखं॥३८४॥
मरुदेवि विजय सेणा सिद्धत्था मंगला सुसीमा य। पुहवी लक्खर्ण सामा नंदा, विण्हू जया रामा ॥३८५॥
सुजसा सुवया अइरा, सिरी देवी पभावई। पउमावइ अ वप्पा अ, सिवं वम्मा तिसला इअ ॥ ३८६ ॥
नाभी जिअसत्तू आ, जियारी संवरे इअ। मेहे धरे पइट्ठे अ, महसेणे अ खत्तिए ॥ ३८७ ॥
सुग्गीवे दढरहे विण्हू वसुपुज्जे अ खत्तिए। कयवम्मा सीहसेणे अ, भाणू विससेणे इअ ॥ ३८८ ॥
सूरे सुदंसणे कुंभे सुमित्तु विजेए समुद्दविजए अ। राया अ अस्ससेणे सिद्धत्थेऽवि य खत्तिए ॥३८९॥
सव्वेऽवि गया मुक्खं, जाइजरामरणबंधणविमुक्का। तित्थयरा भगवंतो, सासयसुक्खं निराबाहं ॥३९०॥
सव्वेऽवि एगवण्णा निम्मलकणगप्पभा मुणेयव्वा। छक्खंडभरहसामी, तेसिं पमाणं अओ वुच्छं ॥३९१॥

सर्वार्ह-न्मातृपितृ-नामानि।

स्पष्टाः किन्तु चन्द्रानना काकन्दी पुर्यौ, विजया सेना लक्ष्मणा विष्णुः सुव्रता अचिरा श्रीः देवी मेघः धरः विश्वसेनः, च पादपूरणे, सुमित्रः विजयः ॥ ३८२-९१ ॥ 'पंच'

पंचसय अद्धपंचम बायालीसा य अद्धधणुअं च। इगयाल धणुस्सद्धं च चउत्थे पंचमे चत्ता ॥३९२॥

५०० । ४५० । ४२ धनुरर्द्धं च । चतुर्थे 'इगया०' एकचत्वारिंशत् ४१ अर्द्धं च, पञ्चमे ४० ॥ ३९२ ॥ 'पण, कास, चउ, पंचा'

पणतीसा तीसा पुण अठावीसा य वीसई धणूणि । पण्णरसं बारसेवय अपच्छिमो सत्त य धणूणि ॥३९३

कासवगुत्ता सव्वे, चउदसरयणाहिवा समक्खाया । देविंदवंदिएहिं जिणेहिं जिअरागदोसेहिं ॥३९४॥

चउरासीई बावत्तरी अ पुव्वाण सयसहस्साइं । पंचं य तिण्णि अ एगं च सयसहस्सा उ वासाणं ॥३९५॥

पंचाणउइ सहस्सा चउरासीई अ अट्ठमे सट्ठी । तीसा य दस य तिण्णि अ, अपच्छिमे सत्तवाससया ॥३९६

अष्टमे इति सुभूमे ६० सहस्र०, ३०, १०, ३ वर्षसहस्र०, अपश्चिमे ब्रह्मदत्ते सप्तवर्षशतान्यायुः ॥ ३९३–६ ॥ 'जम्म'

जम्मण विणीअ उज्झा सावत्थी पंच हत्थिणपुरंमि । वाणारसि कंपिल्ले, रायगिहे चेव कंपिल्ले ॥३९७॥

जन्मभूमिः विनीता ॥ ३९७ ॥ 'सुमं' 'उस'

सुमंगला जसवई भद्दा सहदेवि अइरे सिरि देवी । तारा जाला मेरा य, वप्पगा तह य चूलणी अ ॥३९८॥

उसभे सुमित्तविजए समुद्दविजए अ अस्ससेणे अ । तह वीससेण सूरे सुदंसणे कत्तविरिए अ ॥३९९॥

सुमित्रविजयः २ समुद्रविजयः विजयो वा ३ 'सूर'त्ति सूरः 'कत्तविरिए'त्ति आर्षत्वात् कृतवीर्य इति ॥३९८–९९॥ 'पउ'

सर्वचक्रि-शरीर-प्रमाणायु-र्जन्मभूमि-पितृमातृ-नामानि ।

ओसप्पिणी इमीसे, पिउनामा चक्कवट्टीणं ॥४००॥
पउमुत्तरे महाहरि विजए राया तहेव बंभे[17] अ।

व्रतपर्यायस्तेषां प्रथमानुयोगाद् ज्ञेयः ॥ ४०० ॥ 'अट्ठे'

मघवं सणंकुमारो, सणंकुमारं गया कप्पं ॥४०१॥
अट्ठेव गया मोक्खं, सुभुमो बंभो अ सत्तमिं पुढविं।

यथा श्रीऋषभेन त्रिकालगोचरसूत्रज्ञप्त्यै गता इति, एवं सर्वत्र कालविपर्ययो ज्ञेयोऽन्यथा गमिष्यन्तीति स्यात्। तथा सूत्रं यथा वर्त्तमानकाले भण्यते तथा भरतपृच्छयोक्तं तथा सर्वचतुर्विंशत्यां प्रथमोऽर्हन् प्रथमचक्रिपृष्ट एवं वदति, तथा तथावस्थानां सूत्राणां त्रिकालगोचरता ज्ञेया। यद्वा भविष्यत्कालातीतकालयोरपि पठ्यते, तेन कालपरावर्त्या पठ्यमानां एवमग्रेऽपि ज्ञेयम्॥ ४०१ ॥ 'वण्णे, पढ'
श्रीऋषभेन गमिष्यन्तीत्युक्तं परं श्रीभद्रबाहुनाऽतीतकाल उक्तः

एएसि देहमाणं, वुच्छामि अहाणुपुव्वीए ॥४०२॥
वण्णेण वासुदेवा, सव्वे नीला बला य सुक्किलया।

अउणत्तीसं च धणू, छव्वीसा सोलस दसेवं ॥४०३॥
पढमो धणूणसीई सत्तरि सट्ठी पण्णं पणयाला।

प्रथमो बली वासुदेवश्च, एवं शेषबलहरीणामपि ॥ ४०२-३ ॥ 'बल'

नारायणपउमा पुण, कासवगुत्ता मुणेअव्वा ॥४०४॥
बलदेववासुदेवा, अट्ठेव हवंति गोयमसगुत्ता।

गोतमेन समानं गोत्रं येषां ते गोतमसगोत्राः ॥ ४०४ ॥ 'चउ'

सर्ववासुदेवबलदेववर्णप्रमाणगोत्राणि।

चउरासीई बिसत्तरि सट्ठी तीसा य दस य लक्खाइं। पण्णट्ठि सहस्साइं, छप्पण्णा बारसेगं च ॥४०५॥

वासुदेवायुः ८४ वर्षलक्षाणि, ६५ वर्षसहस्र०, ५६ सह०, १२ सह०, १ सह० ॥ ४०५ ॥ 'पंचा'

पंचासीई पण्णत्तरी अ पण्णट्ठि पंचवण्णा य। सत्तरस सयसहस्सा पंचमए आउअं होइ ॥४०६॥

८५ वर्ष ल० ॥ ४०६ ॥ 'पंचा'

पंचासीई सहस्सा पण्णट्ठी तह य चेव पण्णरस। बारस सयाइं आउं, बलदेवाणं जहासंखं ॥४०७॥

८५, ६५, १५ सहस्र०, १२ वर्षशतानि ॥ ४०७ ॥ 'पोअ'

पोअणं बारवइतिगं अस्सपुरं तह य होइ चक्कपुरं। वाणारसि रायगिहं अपच्छिमो जाओ महुराए ॥४०८॥

पोतनपुरं, द्वारवत्यां त्रिकं ॥ ४०८ ॥ 'मिगा'

मिगावई उमाचेव, पुहवी सीआ य अम्मया। लच्छीमई सेसमई, केगमई देवई इय ॥ ४०९ ॥

एता हरिमातरः, तत्र 'अम्मया' अम्मका, 'केगमई' 'देवई इय' त्ति कैकेयी लक्ष्मणमाता तस्या मित्रा राज्ञीभवत्वात्सुलक्षणत्वाच्चसुमित्रेत्यन्यन्नाम, अपराजिता पद्ममाता तस्याः कौशल्येत्यन्यन्नाम ॥ ४०९ ॥ 'भद्द'

भद्दे सुभद्दो सुप्पभे, सुदंसणा विजये वेजयंती अ। तह य जयंती अपराजिआ य तह रोहिणी चेव ॥४१०॥

बलमाता ॥ ४१० ॥ ' हव '

हवइ पयावई, वंभो रुद्दो सोमो सिवो महसिवो अ। अग्गिसिंहे अ दसरहे, नवमे भणिए अ वसुदेवे ॥४११॥

बलदेववासुदेवयोर्जनकाः ॥ ४११ ॥ ' परि '

परिआओ पव्वज्जाऽभावाओ नत्थि वासुदेवाणं। होइ बलाणं सो पुण, पढमऽणुओगाओ णायव्वो॥४१२॥

प्रव्रज्याऽभावात्पर्यायो नास्ति ॥ ४१२ ॥ ' एगो '

एगो अ सत्तमाए, पंच य छट्ठीए पंचमी एगो । एगो अ चउत्थीए, कण्हो पुण तच्चपुढवीए ॥४१३॥

पंच च षष्ठ्यां ॥ ४१३ ॥ ' अट्ठं '

अट्ठंतगडा रामा एगो पुण वंभलोगकप्पंमि । उववण्णु तत्थ भोए भोत्तुं अयरोवमा दस उ ॥४१४॥

अष्ट रामा बलदेवाः अन्तकृतः सिद्धाः, दशाऽतरोपमान् सागरान् कालविपर्ययः ॥ ४१४ ॥ ' तत्तो '

तत्तो अ चइत्ताणं, इहेव उस्सप्पिणीइ भरहंमि। भवसिद्धिआ अ भयवं, सिज्झिस्सइ कण्हतित्थंमि ॥४१५॥

इहैव भरते उत्सर्पिण्यां भगवान् चारित्राद्यैश्वर्यवान् सेत्स्यति ॥ ४१५ ॥ ' अणि '

अणिआणकडा रामा, सव्वेऽवि अ, केसवा निआणकडा। उड्ढंगामी रामा, केसव सव्वे अहोगामी ॥४१६॥

सर्वबल-
देववासु-
देवपितृ-
पर्यायगति-
द्वाराणि ।

न निदानकृतोऽनिदानकृतः प्राग्भवे 'सवे०' ॥ ४१६ ॥ अथ जिनान्तराणि 'उस'

उसभो वरवसभगई, ततिअसमापच्छिमंमि कालंमि । उप्पण्णो पढमजिणो, भरहपिआ भारहे वासे॥१

तृतीयः समा कालः सुषमदुःषमः तस्य पश्चिमे काले एकोननवतिपक्षरूपे भरते वर्षे स्थितः सन् उत्पन्नो मुक्तौ इत्यग्रेऽपि ज्ञेयं । यैस्तु गर्भे इति व्याख्यातं तत्सिद्धान्तविरुद्धं ज्ञेयं ॥ १ ॥ 'पण्णा'

पण्णासा लक्खेहिं, कोडीणं सागराण उसभाओ। उप्पण्णो अजिअजिणो, ततिओ तीसाए लक्खेहिं॥२
जिणवसहसंभवाओ, दसहि उ लक्खेहि अयरकोडीणं। अभिनंदणो उ भगवं, एवइकालेण उप्पण्णो ॥३॥
अभिणंदणाउ सुमती, नवहि उ लक्खेहि अयरकोडीणं। उप्पण्णो सुहपण्णो, सुप्पभनामस्स वोच्छामि
णउई य सहस्सेहिं, कोडीणं सागराण पुण्णाणं। सुमइजिणाउ पउमो, एवतिकालेण उप्पण्णो ॥ ५ ॥
पउमप्पहनामाओ, नवहि सहस्सेहि अयरकोडीणं । कालेणेवइएणं, सुपासनामो समुप्पण्णो ॥ ६ ॥
कोडीसएहि नवहि उ, सुपासनामा जिणो समुप्पण्णो। चंदप्पभो पभाए, पभासयंतो उ तेलोक्कं ॥७॥

१ एताः सप्तदशगाथाः प्रक्षिप्ताः दृश्यन्ते.

आलभिकापुर्यां सप्तमवर्षाः चतुर्मासितपः कुण्डकसंनिवेशे प्रभोर्विष्णुदेवकुले कोणे प्रतिमा, गोशालो विष्णोः पराङ्मुखः पुतौ मुखे कृत्वा स्थितो लोकैरकुट्टि । मर्दनग्रामे बलचैत्ये गोशालो बलमुखमूले सागारिकं कृत्वाऽस्थात् । द्वयोरपि स्थानयोर्गोशालो ' मुणित्ति ' मुक्तः ॥ ४८९ ॥ ' वहु '

**वहुसालगसालवणे, कडपूअण पडिम विग्घणोवसमे । लोहग्गलंमि चारिय, जिअसत्तू उप्पले मोक्खो ॥**

वहुशालग्रामे शालवने कटपूतनाव्यन्तर्या प्रतिमायां शीतेन ' विग्घणं ' विघ्नकरणं, उपशमेऽर्चा । लोहार्गलेऽर्हद्गोशालौ जितशत्रुराजेन चारिकाविति बद्धौ । अस्थिग्रामागतेनोत्पलेन मोक्षः ॥ ४९० ॥ ' तत्तो '

**तत्तो य पुरिमताले, वग्गुर ईसाण अच्चए पडिमा । मल्लीजिणायण पडिमा, उण्णाए वंसि बहुगोट्ठी ।४९१।**

पुरिमताले शकटमुखस्य पुरस्य चान्तरा प्रभुं प्रतिमास्थितं ईशानेन्द्रोऽर्चति । स च वग्गुरश्रेष्ठिनं मिथ्यादृशं प्रागपुत्रं श्रीमल्लिपूजातः पुत्राप्त्योद्धृतमल्लिजिनायतनं श्राद्धीभूतं प्रतिमार्चाय यान्तमहो साक्षाज्जिनं न पूजयसि प्रतिमां त्वर्चसि, एष श्रीवीरजिन इत्यूचे स मिथ्यादुःकृतं कृत्वा क्षामयित्वा महिमानं चक्रे । प्रभोरुन्नके संनिवेशे गच्छतः पथि गोशालो वरवध्वौ दन्तुरौ हसन् गोष्ठ्या समवायेन बध्वा वंश्यां क्षिप्तो विभौ प्रतीक्षमाणेऽस्य भक्तः इति मुक्तः ॥ ४९१ ॥ ' गोभूमि '

**गोभूमि वज्जलाढे, गोवक्कोवे य वंसि जिणुवसमे । रायगिहऽट्ठमवासा, वज्जभूमी बहुवसग्गा ॥ ४९२ ॥**

प्रभौ गोभूमौ गोचरस्थाने याति गोशालो गोपानाह—भो वज्रलाढाः ! एषोऽध्वा कयाति ? वज्रलाढा म्लेच्छा उच्यन्ते ।

भद्रां प्रतिमामह्नि प्राच्यां निश्यपाच्यां द्वितीयेऽह्नि प्रतीच्यां निश्युदीच्यामेवं चत्वारि यामचतुष्कानि एवमुपवासद्वयं, ततोऽपारित एव महाभद्रां चतुर्दिक्ष्वहोरात्रं, एवमष्ट यामचतुष्कानि उपवासचतुष्कं, ततोऽपारित एव सर्वतोभद्रां दशदिक्षु प्रत्येकमहोरात्रं विंशतिर्यामचतुष्कानि उपवासदशकं चक्रे परमूर्ध्वाधोदिशोः स्वर्दिग्द्रव्याणि दध्यौ । पारणे आनन्दगृहे बहुला दासी शीतलान्नमुज्झंत्यदात्, दिव्यानि ॥ ४९७ ॥ 'दढ'

दढभूमीए बहिआ, पेढालं नाम होइ उज्जाणं । पोलास चेइयंमि, ट्ठिएगराईमहापडिमं ॥ ४९८ ॥

दढभूम्यां बहुम्लेच्छायां पेढालोद्याने पोलासचैत्येऽष्टमेनान्त्यनिश्येकरात्रिकीं प्रतिमां स्थितस्तस्यां निर्निमेषोऽचित्तपुद्गलेषु दत्तदृष्टिरीषन्नम्रकायश्चाभूत् ॥ ४९८ ॥ 'सक्को'

सक्को अ देवराया, सभागओ भणइ हरिसिओ वयणं । तिण्णिवि लोग समत्था, जिणवीरमणं न चालेउं

त्रयोऽपि लोका असमर्था जिनवीरमनश्चालयितुं ॥ ४९९ ॥ 'सोह'

सोहम्मकप्पवासी, देवो सक्कस्स सो अमरिसेणं । सामाणिअ संगमओ, बेइ सुरिंदं पडिनिविट्ठो ॥५००॥

शक्रस्य सामानिकः सङ्गमः सुरेन्द्रं ब्रूते, प्रतिनिविष्टः प्रत्यनीकः ॥ ५०० ॥ 'तेल्लो'

तेल्लोक्कं असमत्थंति, पेहए तस्स चालणं काउं । अज्जेव पासह इमं, मम वसगं भट्ठजोगतवं ॥५०१॥

एतस्य अद्यैव इमं भगवन्तं भ्रष्टयोगतपसं मम वशगं पश्यत । इन्द्रेण स न निषिद्धो यतो मा जानीयात् स्वामी पराश्र-

न वा, किं ना स्त्री वा इति वारत्रयं वदति गोशाले कोपनं कृत्वा प्रद्विष्टस्तेजोलेश्याममुञ्चदर्हंश्च शीतलेश्यां, तत्र तेजोलेश्या जम्बूद्वीपं अन्तर्वेष्टयति शीतलेश्या तां परिवेष्टयति तया सा विध्याति तदा गोशालेन पृष्टोऽर्हन् जगौ–आतापनापरस्य सदा षष्ठतपसा सनखकुल्माषपिंडिकया एकेनोष्णोदकेन चुलकेन च पारयतः षण्मासे तेजोलेश्योत्पद्यते । पुनः सिद्धार्थपुरं यातो गोशालस्य तिलस्तम्बपृच्छायामर्हता निष्पत्तियुक्ता युक्तायां ( प्रोक्तनिष्पत्तियुक्तायां ) नियतेर्ग्रहणं । ततः स पृथग् भूतोऽर्हदुक्तयुक्त्या श्रावस्त्यां कुम्भकृच्छालायां स्थितस्तेजोलेश्यामसाधयत् अष्टाङ्गनिमित्तं चाशिक्षिष्ट ततो जिनो जिनप्रलापी विजहार ॥ ४९४ ॥ ' वेसा '

**वेसालीए पडिमं, डिंभमुणिउत्ति तत्थ गणराया। पूएइ संखनामो चित्तो नावाए भगिणिसुओ ॥४९५॥**

वैशाल्यां प्रतिमास्थं प्रभुं सिद्धार्थराड्मित्रं शंखो गणराज आर्चयत् । तद्भागिनेयश्चित्रो नावा व्रजन् गण्डिकानद्यां तरीपण्यमिच्छद्भिर्धृतं विमोच्यार्चत् ॥ ४९५ ॥ ' वाणि '

**वाणियगामायावण, आनंदो ओहि परीसह सहिंति। सावत्थीए वासं, चित्ततवो साणुलट्ठि बहिं।४९६**

वाणियग्रामे आनन्दः श्राद्धः षष्टैरातापयन् जातावधिः प्रभुं ज्ञात्वा वन्दित्वाऽहो परीषहसह ! इयता कालेन केवलमुत्पत्स्यते इति जगौ । श्रावस्त्यां दशमवर्षाश्चित्रं तपः ततः सानुलष्टिकग्रामबहिः स्थित्वा ॥ ४९६ ॥ ' पडि '

**पडिमा भद्द महाभद्द, सव्वओभद्द पढमिआ चउरो। अट्ठयवीसाणंदे, बहुलिय तह उज्झिए दिव्वा ४९७**

भद्रां प्रतिमामह्नि प्राच्यां निश्यपाच्यां द्वितीयेऽह्नि प्रतीच्यां निश्युदीच्यामेवं चत्वारि यामचतुष्कानि एवमुपवासद्वयं, ततोऽपारित एव महाभद्रां चतुर्दिक्ष्वहोरात्रं, एवमष्ट यामचतुष्कानि उपवासचतुष्कं, ततोऽपारित एव सर्वतोभद्रां दशदिक्षु प्रत्येकमहोरात्रं विंशतिर्यामचतुष्कानि उपवासदशकं चक्रे परमूर्ध्वाधोदिशोः स्वर्दिग्द्रव्याणि दध्यौ । पारणे आनन्दगृहे बहुला दासी शीतलान्नमुज्झंत्यदात्, दिव्यानि ॥ ४९७ ॥ 'दढ'

दढभूमीए बहिआ, पेढालं नाम होइ उज्जाणं । पोलास चेइयंमि, ठिएगराईमहापडिमं ॥ ४९८ ॥

दढभूम्यां बहुम्लेच्छायां पेढालोद्याने पोलासचैत्येऽष्टमेनान्त्यनिश्येकरात्रिकीं प्रतिमां स्थितस्तस्यां निर्निमेषोऽचित्तपुद्गलेषु दत्तदृष्टिरीषन्नम्रकायश्चाभूत् ॥ ४९८ ॥ 'सक्को'

सक्को अ देवराया, सभागओ भणइ हरिसिओ वयणं । तिण्णवि लोग समत्था, जिणवीरमणं न चालेउं

त्रयोऽपि लोका असमर्था जिनवीरमनश्चालयितुं ॥ ४९९ ॥ 'सोह'

सोहम्मकप्पवासी, देवो सक्कस्स सो अमरिसेणं । सामाणिअ संगमओ, बेइ सुरिंदं पडिनिविट्ठो ॥५००॥

शक्रस्य सामानिकः सङ्गमः सुरेन्द्रं ब्रूते, प्रतिनिविष्टः प्रत्यनीकः ॥ ५०० ॥ 'तेल्लो'

तेल्लोक्कं असमत्थंति, पेहए तस्स चालणं काउं । अज्जेव पासह इमं, मम वसगं भट्ठजोगतवं ॥५०१॥

एतस्य अद्यैव इमं भगवन्तं भ्रष्टयोगतपसं मम वशगं पश्यत । इन्द्रेण स न निषिद्धो यतो मा जानीयात् स्वामी पराश्र-

यात्तपः कुर्यात् ॥ ५०१ ॥ 'अह'

**अह आगओ तुरंतो, देवो सक्कस्स सो अमरिसेणं। कासी य ह उवसग्गं, मिच्छद्दिट्ठी पडिनिविट्ठो ॥५०२॥**

'तुरंतो' त्वरितः 'उवस्सग्गं'ति आर्षत्वात् सस्य द्वित्वं ॥ ५०२ ॥ 'धूली'

**धूली पिवीलिआओ, उद्दंसा चेव तह य उण्होला। विंछुय नउला सप्पा, य मूसगा चेव अट्ठमगा ॥५०३॥**

धूलीवृष्ट्या सर्वाङ्गं पूरयित्वा अर्हन्निरुच्छ्वासः कृतः १। कीटिकाभिर्नासासु प्रविश्य निर्गत्य चालनीकृतः २। उद्दंशा वज्रतुंडा दंशाः ३ 'उण्होला' घृतपिपीलिकाः ४ वृश्चिकनकुलादयो दशन्ति स्वाम्यङ्गं भक्षन्ते च ॥ ५०३ ॥ 'हत्थी'

**हत्थी हत्थीणिआओ, पिसायए घोररूव वग्घो य। थेरो थेरीइ सुओ, आगच्छइ पक्कणो य तहा ॥५०४॥**

हस्त्युत्पाट्य पातयेत् (यति) पद्भ्यां च मर्दयेतु (यति) विध्येत् (विध्यति) हस्तिनी शुण्डदन्ताभ्यां विध्येत् (ध्यति) मलं मुंचेत् (चति) स्थविरः सिद्धार्थः स्थविरी त्रिशला मोहवाणीं ब्रूतः। सूपकृत्पदो राध्नोति। पक्कणश्चाण्डालः पञ्जराणि कर्णादौ विलगयेत् (यति) पक्षिणो वज्रतुण्डैर्हत्वा हदंति ॥ ५०४ ॥ 'खर'

**खरवाय कलंकलिया, कालचक्कं तहेव य। पाभाइय उवसग्गे, वीसइमो होइ अणुलोमो ॥ ५०५ ॥**

खरवातेनोत्पाट्य २ क्षिपेत् (पति)कलकलिकया चक्रावर्त्तवातेन चक्रवद्भ्रामितः। कालचक्रेण हस्ताग्रनखान् यावन्मग्नः।

१ अन्यस्मात् श्रोतसोऽन्तः शरीरमनुप्रविश्यान्येन निर्यान्तीति चूर्णौ हारि-वृत्तौ च.

विंशतितम उपसर्गः प्रभातविकुर्वणा ॥ ५०५ ॥ तथा 'सामा'

सामाणिअदेवड्ढिं, देवो दावेइ सो विमाणगओ। भणइ य वरेह महरिसि! निप्फत्ती सग्गमोक्खाणं ५०६

सामानिकदेवर्द्धिंदर्शयति, विमानगतो विमानस्थः भणति च महर्षे! स्वर्गमोक्षयोर्निष्पत्तिं वृणु। अयमनुलोमः विंशतितमः, एकरात्र्युपसर्गाः २० ॥ ५०६ ॥ 'उव'

उवहयमइविण्णाणो, ताहे वीरं वहु प्पसाहेउं। ओहीए निज्झाइ, झायइ छज्जीवहियमेव ॥ ५०७ ॥

देवो वीर प्रकर्षेण साधयितुं, उपहतमतिविज्ञानः, अवधिना विभंगपर्यायेणार्हन्मनो निध्यायति। अर्हंस्तु षड्जीवहितमेव ध्यायति ॥ ५०७ ॥ 'वालु'

वालुय पंथे तेणा, माउलपारणग तत्थ काणच्छी। तत्तो सुभोम अंजलि, सुच्छित्ताए य विडरूवं ॥५०८॥

प्रभोः प्रातः वालुकाग्रामं यातः पथि देवेन जानुदघ्नी वालुका पञ्चशतस्तेनाश्च कृतास्तैर्मातुलस्वागतं इत्युपहस्यावाहि, प्रभोः वालुकाग्रामे भिक्षामटतो देवो रूपमावृत्य स्त्रीषु काणाक्षिं ददाति। ततः एवं सुभौमग्रामे स्त्रीष्वञ्जलीः कुर्वन्, सुक्षेत्रग्रामे विटरूपं कृत्वा कुचेष्टाः कुर्वन् लोकैरकुट्टि ॥ ५०८ ॥ 'मल'

मलए पिसायरूवं, सिवरूवं हत्थिसीसए चेव। ओहसणं पडिमाए, मसाण सक्को जवण पुच्छा ॥५०९॥

मलयग्रामे देवः प्रभोः पिशाचरूपं, हस्तिशीर्षग्रामे स्त्रीदर्शने विकृतेन्द्रियशिवरूपं च कृत्वा भ्रमन्नकुट्टि। प्रभोरुड्डाह-

भावाद् ग्रामं त्यक्त्वा श्मशानप्रतिमास्थस्य 'ग्रामं न याते 'ति संगमोपहसनं । इहार्हतो विकृतलिङ्गरूपश्मशानस्थितीन्द्रार्च्यत्वं दृष्ट्वा लोके शिवलिङ्गादि प्रावर्त्तत । तत्र शक्रो 'जत्ता भे जवणिज्जं ' इत्याद्यपृच्छत् ॥ ५०९ ॥ 'तोस '

**तोसलिकुसीसरूवं, संधिच्छेओ इमोत्ति वज्झो य । मोएइ इंदालिउ, तत्थ महाभूइलो नामं ॥५१०॥**

तोसलिसंनिवेशे बहिः प्रतिमा, सुरः क्षुल्लकरूपं कृत्वा सन्धिं छिन्दन् खात्रं पातयन् बद्धोऽवग् बहिःस्थिताचार्येण प्रेषितोऽहमित्यर्हन्तं बध्वा अयं वध्य इति नीयमानं भूतिलो नामा दृष्टपूर्वीन्द्रजालिको मोचयति ॥ ५१० ॥ 'मोस '

**मोसलि संधि सुमागह, मोएई रट्ठिओ पिउवयंसो । तोसलि य सत्तरज्जू, वावत्ति तोसलीमोक्खो ।५११।**

मोसलिसंनिवेशे क्षुल्ले सन्धीन् शोधयति जनपृष्टे च मद्धर्म्माचार्यस्य रात्रौ खात्रं ददतो मा कण्टका भज्यन्तामिति च वदत्यर्हन्बद्धः सुमागधनामा राष्ट्रिकः पितृवयस्यो मोचयत्येवं तौसलिग्रामे बध्वा तौसलिक्षत्रियेण सप्तरज्जूनां व्यापत्तौ त्रुटौ नायं चौर इति मोक्षः ॥ ५११ ॥ 'सिद्ध '

**सिद्धत्थपुरे तेणेत्ति कोसिओ आसवाणिओ मोक्खो । वयगाम हिंडऽणेसण, बिइयदिणे बेइ वंसतो ।५१२।**

प्राग्वत् स्तेन इति बद्धं प्रभुं दृष्टपूर्वोऽश्ववणिक्कौशिकोऽमोचयत् मोक्षं, परं सर्वत्र पश्चात् क्षुल्लादर्शने अर्हतो देवोपसर्गे जाते षण्मासा जाताः । देवो गतो भविष्यतीत्यर्हन् द्वितीयदिने व्रजग्रामे गोकुले हिण्डमानो देवमनेषणां कुर्वन्तं ज्ञात्वा निवृत्तो बहिः प्रतिमां स्थितः । देवश्चोपशान्तो ब्रूते ॥ ५१२ ॥ 'वच्च '

वच्चह हिंडह न करेमि, किंचि इच्छा न किंचि वत्तव्वो। तत्थेव वच्छवाली, थेरी परमन्नवसुहारा ॥५१३॥
व्रजत ग्रामं हिण्डध्वं भिक्षायां, अर्हन्नाह–भो देव ! इच्छया यामि नाहं किञ्चिद्वक्तव्यः, तत्रैव ग्रामे द्वितीयेऽह्नि स्थविरा
वत्सपालिका पर्युषितपरमान्नं ददौ ॥ ५१३ ॥ 'छम्मा'
छम्मासे अणुबद्धं, देवो कासीय सो उ उवसग्गं। दट्ठूण वयग्गामे, वंदिय वीरं पडिनियत्तो ॥५१४॥
षण्मासाननुबद्धं देवोऽकार्षीत् स तु उपसर्गं, व्रजग्रामे वीरमचलितपरिणामं दृष्ट्वा ॥ ५१३ ॥ इतश्च सौधर्म्मे कल्पे सर्वे
उपसर्गमनेषणां च सोऽभव्यदेवोऽनुबद्धं सततं व्रजग्रामे वीरमचलितपरिणामं दृष्ट्वा ॥ ५१३ ॥ इतश्च सौधर्म्मे कल्पे सर्वे
देवास्तद्दिनं यावदुद्विग्नमनसोऽभूवन् 'देवो'
देवो चु(ठि)ओ महिड्ढिओ, वरमंदरचूलियाइ सिहरंमि। परिवारिउ सुरवहूहिं, आउंमि सागरे सेसे ॥५१५॥
इन्द्रेण निर्विषयः कृतः स देवो महर्द्धिरिन्द्रसामानिको देवलोकाच्च्युतो भ्रष्टः मन्दरचूलायां यानैर्विमानैरेत्य वधूभिः
परिवारितः स्थितः। तदा तस्यायुरतरोपमं शेषमभूत्। तद्भक्तसुराः शक्रनिषिद्धाः स्वर्गे एवास्थुः ॥ ५१५ ॥ 'आल'
आलभियाए हरि विज्जू, जिणस्स भत्तिए वंदओ एइ। भगवं पियपुच्छा, जिय उवसग्गत्ति थेवमवसेसं
आलंभिकायां हरिर्विद्युत्कुमारेन्द्रः प्रियं पृच्छेत्(च्छति)। जिता उपसर्गाः स्तोकमेव शेषमिति वदेत्(दति) ॥५१६॥ 'हरि'
हरिसह सेयवियाए, सावत्थी खंदपाडिम सक्को य। ओयरिउं पडिमाए, लोगो आउट्टिओ वंदे ॥५१७॥
श्वेताम्व्यां हरिस्सहो विद्युत्कुमारेन्द्रः प्रियप्रष्टा, श्रावस्त्यां शक्रो लोकसाक्षिकं स्कन्दप्रतिमां प्रभुं नामयति ॥५१७॥ 'कोसं'

कोसंबी चंदसूरोयरणं, वाणारसीय सक्को उ। रायगिहे ईसाणो, महिला जणओ य धरणो य ॥५१८॥

सविमानचन्द्रसूर्यावतरणं प्रियपृच्छार्थे । एवं वाराणस्यां शक्रः, मिथिलायां जनको राट् धरणेन्द्रश्च प्रियं पृच्छतः, तत्र एकादशवर्षाश्चतुर्मासतप इति चूर्णौ ॥ ५१८ ॥ 'वेसा'

वेसालि भूयंणदो, चमरुप्पाओ य सुंसुमारपुरे। भोगपुरि सिंदकंदग, माहिंदो खत्तिओ कुणति ॥५१९॥

'वेसालि भूयाणंदो चमरुप्पाओ य सुसुमारपुरे' इति चूर्णौ, वृत्तौ तु 'वेसालवासभूयाणंदो चमरो सुसुमारे पुरे'। वैशाल्यां एकादशवर्षा जाताः भूतानन्दो नागेन्द्रः प्रियप्रष्टा, चमरः स्वशीर्षोर्ध्वस्थशक्रसिंहासनपातनाय सौधर्मं गतः शक्रवज्रत्रस्तः सुसुमारे पुरे प्रतिमास्थार्हत्पादयोर्निलीनः । भोगपुरे सिंदी खर्जूरी तत्कण्टकेन माहेन्द्रः क्षत्रियः पीडां करोति ॥५१९॥ 'वार'

वारण सणंकुमारे, नंदीगामे पिउसहा वंदे। मंढियगामे गोवो, वित्तासणयं च देविंदो ॥ ५२० ॥

सनत्कुमारेन्द्रेण तस्य वारणं, नन्दिग्रामे नन्दः पितृसखा वन्दते, मेण्ढिकग्रामे प्राग्वद्गोपो रज्जुना घ्नन् शक्रेण वित्रासितः ॥ ५२० ॥ 'कोसं' 'तच्चा'

कोसंबीए सयाणीओ, पोसबहुल पाडिवई। चाउम्मास मिगावई, विजयसुगुत्तो य नंदा य ॥ ५२० ॥

तच्चावाई चंपा, दहिवाहण वसुमई विजयनामा। धणवह मूला लोयण, संपुल दाणे य पव्वज्जा ॥ ५२१ ॥

पोषवदि प्रतिपदिदिने प्रभोरभिग्रहः, द्रव्यतः कुल्मापान् सूर्पकोणे, क्षेत्रतो देहल्या आरत एकं पादं कृत्वा एकं च परतः,

कालतो भिक्षाचरेषु निवृत्तेषु, भावतो राजसुता दास्यप्राप्ता निगडिता मुण्डिता रुदन्ती कृतोपोषितत्रया चेद्दत्ते तदा पारणं, चतुर्मासान् कौशाम्बीमटत्यर्हति भिक्षामनाददाने, शतानीको राट्, मृगावती राज्ञी, विजया प्रतिहारिणी, सुगुप्तमन्त्री, नन्दा भार्या, तत्त्ववाद्याख्यो धर्मोपाध्यायश्च, दुःखं बिभ्रति, चम्पापुर्यां शतानीकेन भग्नायां दधिवाहने नष्टे धारणीदेवी सुता वसुमती तद्वितीयनाम्नी चन्दनौष्ट्रिकधृता धनावहश्रेष्ठिना मोचिता, सा तत्पत्न्या मूलयांह्रिक्षालनक्षणे धनकृतं तत्केशबन्धं दृष्ट्वा मत्सपत्नी भविश्रीत्यालोच्य निगडिता त्रिदिनोपोषिता, श्रेष्ठिदत्तसूर्प्पस्थकुलमापकरा पद्दिनोनैः षण्मासैर्दानेनाभिग्रहमपूरयन् । पञ्चदिव्यानि शतानीकाद्यास्तत्रागुः दधिवाहनकञ्चुकिना संपुलेन चन्दनोपलक्षिता । मृगावत्या च जामेयेति ज्ञाता, शक्रोक्त्या माऽर्हज्ज्ञानं यावद् राज्ञा स्वगृहेऽस्थापि । ततः प्रव्रजिता ॥ ५२१-२२ ॥ ' तत्तो '

तत्तो सुमंगलाए, सणंकुमार सुछेत्त एइ माहिंदो । पालग वाइलवणिए, अमंगलं अप्पणो असिणा ॥

सुमंगलग्रामे सनत्कुमारः प्रिय पृच्छेत् ( च्छति ) सुक्षेत्रायां माहेन्द्रश्च । पालकग्रामे वातिलाख्यं वणिजमात्मनोऽमङ्गलमित्यसिना हन्तुं धावन्तं सिद्धार्थः स्वहस्तेनाहत् ॥ ५२३ ॥ ' चंपा '

चंपा वासावासं, जक्खिंदे साइदत्तपुच्छा य । वागरणदुहपएसण, पच्चक्खाणे य दुविहे उ ॥५२४॥

प्रभोश्चम्पायां सातिदत्तद्विजाग्निहोत्रशालायां द्वादशवर्षाः, पूर्णभद्रमाणिभद्रयक्षेन्द्राभ्यां पूजां कृतां वीक्ष्य सातिदत्तद्विजस्य, को'ऽऽत्मे'ति पृच्छा 'योऽहमिति वक्ती' ति प्रभोर्व्याकरणं, प्रदेशनमुपदेशः स कतिधा, कतिधा च प्रत्याख्यानं इति पृष्टे

द्विधा प्रदेशनं धार्मिकमधार्मिकं च, द्विधा प्रत्याख्यानं मूलगुणप्रत्याख्यानं उत्तरगुणप्रत्याख्यानं च, इत्युत्तराद् विप्रो यक्षौ च बुद्धाः ॥ ५२४ ॥ ‘ जंभि ’

**जंभियगामे नाणस्स, उप्पया वागरेइ देविंदो। मिंढियगामे चमरो, वंदण पियपुच्छणं कुणइ ॥ ५२५ ॥**

नाटयं कृत्वेयद्भिर्दिनैर्ज्ञानोत्पत्तिरिति शक्रो देवेन्द्रः ॥ ५२५ ॥ ‘ छम्मा ’

**छम्माणि गोव कडसल, पवेसणं मज्झिमाए पावाए। खरओ विज्जो सिद्धत्थ, वाणियओ नीहरावेइ ॥**

छम्माणिग्रामे, त्रिपृष्ठभवे यस्य शय्यापालकस्य कर्णयोस्तप्तं त्रपु क्षिप्तं तज्जीवो गोपः प्रभुपार्श्वे वृषौ मुक्त्वा गत आगतश्च वृषावपश्यन् क्व वृषाविति प्रभुमाख्यत्। प्रभौ च मौनस्थे कर्णयोः कटार्हवंशशलाकप्रवेशनं चक्रे। प्रभुर्मध्यमायां पापायां गतस्तत्र सिद्धार्थो वणिक् खरकवैद्योक्त्या सशल्यं प्रभुमुखं ज्ञात्वा प्रभौ निष्प्रतिकर्म्मतया कीलकाकर्षणमनिच्छत्यपि खरकेनैव उद्याने गत्वा तैलेन म्रक्षित्वा शलाके बहुजनैराक्रम्य संडासकाभ्यां निरकासयत्। रक्ताक्ते शलाके पतिते तदा तान् जनानुत्पाट्याहंता राटिर्मुक्ता तत्र महाभैरवमुद्यानं जातं देवकुलं च, संहरणौषधेनार्हन् सज्जो जातः। प्रभोर्महोपसर्गाः, क्रमेण कटपूतनाशीतं, कालचक्रं, शल्यनिःकर्षणं, एवं गोपेनारब्धा गोपेन निष्ठिताः। गोपः सप्तमीं गतः, खरकसिद्धार्थौ स्वर्गं गतौ, इत्युपसर्गाः समाप्ताः। ॥ ५२६ ॥ ‘ जंभि ’

**जंभिय बहि उजुवालिय, तीर वियावत्त सामसालअहे। छट्ठेणुक्कुडुयस्स उ उप्पण्णं केवलं नाणं ॥५२७॥**

जृम्भिकाग्रामाद्बहिः ऋजुवालुकातीरे 'वियावत्तं' चैत्यत्वाद् व्यावृत्तं पतितं तच्चैत्यमित्यर्थस्तस्यासन्ने श्यामाकगृहपनिक्षेत्रे शालतरोरधः षष्ठतपमोत्कुडुकस्थस्य केवलमुत्पेदे ॥ ५२७ ॥ 'जो य'

जो य तवो अणुचिण्णो, वीरवरेणं महाणुभावेणं। छउमत्थकालियाए, अहकम्मं कित्तइस्सामि ॥५२८॥

यत्तपोऽनुचीर्णं, छद्मस्थकालेन निर्वृत्ता छद्मस्थकालिकी। अथ तस्यां यथाक्रमं यथासम्प्रदायं ॥ ५२८ ॥ 'नव'

नव किर चाउम्मासे, छक्किर दोमासिए उवासीय। वारस य मासियाइं, वावत्तरि अद्धमासाइं ॥ ५२९ ॥

नवचतुर्मासिकानि, षट् द्विमासिकानि, स्वार्थे इकण् द्वितीयायाः शस्, उपोषितवान्, द्वादश मासिकानि ॥ ५२९ ॥ 'एगं'

एगं किर छम्मासं, दो किर तेमासिए उवासीय। अड्ढाइज्जाइ दुवे, दो चेव दिवड्ढमासाइं ॥ ५३० ॥

एकं, षण्मासं द्वे त्रिमासिके द्वेऽर्द्धतृतीये, अर्द्धतृतीयमासनिष्पन्नं तपोऽर्द्धतृतीयं। द्वे च द्व्यर्द्धमासे द्वितीयमर्द्धं यस्य स द्व्यर्द्धो मासः '४५' दिनाः ॥ ५३० ॥ 'भद्दं'

भद्दं च महाभद्दं, पडिमं तत्तो अ सव्वओ भद्दं। दो चतारि दसेव य दिवसे ठासीय अणुबद्धं ॥५३१॥

भद्रादिप्रतिमाः, क्रमात् द्वौ, चत्वारो, दशदिवसान्, अनुबुद्धं सततं अन्तरे पारणं विनाऽस्थात्। एवं षोडशोपवासाः ॥ ५३१ ॥ 'गोय'

गोयरमभिग्गहजुयं, खमणं छम्मासियं च कासीय। पंचदिवसेहिं ऊणं, अव्वहिओ वच्छनयरीए ॥५३२॥

श्रीवीरस्य तपः ॥

गोचराभिग्रहयुक्तं क्षपणं तपोऽकार्षीत् । अव्यथितो वत्सानगर्यां कौशाम्ब्यां ॥ ५३२ ॥ 'दस'

**दस दो य किर महप्पा, ठाइ मुणी एगराइए पडिमे । अट्ठमभत्तेण जई, एक्केक्कं चरमराईयं ॥५३३॥**

दश द्वौ च द्वादशेत्यर्थः, महात्मा महात्म्यवान्, मौनित्वान्मुनिरेकरात्रिकीः प्रतिमाः स्थितवान्, कथमित्याह–अष्टमभक्तेन, यतिः प्रयत्नवानेकैकां चरमरात्रिकीं प्रतिमां अन्त्यनिशि कायोत्सर्गं कृत्वेषन्नम्रोऽनिमिषोऽचित्तपुद्गलेषु दत्तदृग् तस्थौ ॥ ५३३ ॥ 'दो चे'

**दो चेव य छट्ठसए, अउणातीसे उवासिया भगवं । न कयाइ निच्चभत्तं, चउत्थभत्तं च से आसि ॥५३४॥**

षष्ठशब्देन दिनद्वयं, द्वे शते एकोनत्रिंशदधिके २२९ षष्ठान्युपोषितवान् । केवलज्ञानषष्ठेन सह दीक्षाषष्ठं च विना, नित्यं भक्तं चतुर्थभक्तं च 'से' तस्य न कदाप्यासीत् ॥ ५३४ ॥ 'बार'

**बारस वासे अहिए, छट्ठं भत्तं जहण्णयं आसि । सव्वं च तवोकम्मं, अपाणयं आसि वीरस्स ॥ ५३५ ॥**

द्वादशवर्षेष्वधिकेषु छद्मस्थकाले ॥ ५३५ ॥ 'तिण्णि'

**तिण्णि सए दिवसाणं, अउणावण्णं तु पारणाकालो । उक्कुडुयनिसेज्जाणं, ठियपडिमाणं सए बहुए ॥**

उत्कुटुकनिषद्यानां स्थितप्रतिमानां कोऽर्थः ? उत्कुटुकासनस्थेन याः प्रतिमाः कृतास्तासां बहूनि शतानि ॥ ५३६ ॥ 'पव्व'

**पव्वजाए पढमं, दिवसं एत्थं तु पक्खिवित्ता णं । संकलियंमि उ संते, जं लद्धं तं निसामेह ॥ ५३७ ॥**

'एत्थं' अत्रोक्ते वैशाखसुदि दशम्यन्तेऽहर्गणे प्रथमं प्रव्रज्यादिवसं प्रक्षिप्य संकलिते सति यदेकरूपं लब्धं तन्निशामयत ॥ ५३७ ॥ 'बार'

बारस चेव य वासा, मासा छच्चेव अद्धमासो य। वीरवरस्स भगवओ, एसो छउमत्थपरियाओ ॥५३८॥

अस्मिन्नहर्गणे ४५१५ रूपे ३६० रूपवर्षदिनाङ्केन भक्ते द्वादशवर्षादिसङ्ख्या स्पष्टैव। परं श्रीवीरस्य मार्ग वदि १० दीक्षा, वैशाख सुदि १० ज्ञानं। अत्रान्तरे द्वादशवर्षादिसङ्ख्यायां कथितायामेको मासस्त्रुट्यति। तत्रायं समाधिर्घटते। षष्ठयुगस्य पर्यन्ताभिवर्द्धितवर्षे मार्ग वदि १० प्रभोर्दीक्षा ततस्तद्वर्षस्य शेषं आषाढद्वयगणनया मास ८ दिन २०, ततः परं युगद्वयेन १० वर्षाणि पूर्णान्येव विवक्षितानि, तदनु द्वितीयचन्द्रवर्षे वैशाख सुदि १० ज्ञानोत्पत्तिः। अस्य च पूरणाय दीक्षानन्तरकस्याधिकमासाष्टकस्य मध्यान्मासद्विकं दिनपञ्चाधिकं प्रक्षिप्यते इति। यदा तु प्रतिदिनगणना क्रियते तदा पञ्चाधिकमासकाः स्युस्तन्मध्यात्सार्द्धं मासद्वयमचरमरात्रिपदे क्षिप्यते, शेषं सार्द्धं मासद्वयं, तन्मध्यान्मासो गाथार्थपूरणाय क्षिप्यते, शेषं सार्द्धमासं। तत्र च 'छट्ठेणं एगया भुंजे अट्ठमेणं दसमेणं दुवालसमेणं एगया भुंजे पेहमाणे समाहिपडिवन्ने' इत्याचाराङ्गोपधानश्रुताध्ययनोक्तानि तपांसि भगवतः सम्भाव्यन्ते। तानि चावश्यके स्वल्पविप्रकीर्णतपस्त्वादिना केनापि हेतुना न विवक्षितानि ॥ ५३८ ॥ 'एवं'

एवं तवोगुणरओ, अणुपुव्वेणं मुणी विहरमाणो। घोरं परीसहचमुं, अहियासित्ता महावीरो ॥ ५३९ ॥

तपसि गुणेषु च रतः आनुपूर्वेण क्रमेण परीषहचमूमतिसह्य ॥ ५३९ ॥ 'उप्प' 'अम'

**उप्पणंमि अणंते नट्ठंमि य छाउमत्थिए नाणे। राईए संपत्तो, महसेणवणंमि उज्जाणे ॥ ५४० ॥**

**अमरनररायमहिओ, पत्तो धम्मवरचक्कवट्टित्तं। बीयंपि समोसरणं, पावाए मज्झिमाए उ ॥ ५४१ ॥**

अनन्ते ज्ञाने उत्पन्ने छाद्मस्थिके ज्ञानचतुष्के क्षायोपशमिकत्वात्कालुषे नष्टे लुप्ते सति। तत्र देवकृतसमवसरणे भावरहितं पर्षदं विदन्नपि जीतमित्युपदेशमात्रं दत्वा रात्रौ द्वादशयोजनेषु मध्यमायां पापायां महसेनवननामोद्याने सम्प्राप्तः सन् द्वितीयसमवसरणे धर्मवरचक्रवर्त्तित्वं प्राप्तः ॥ ५४०-४१ ॥ 'तत्थ'

**तत्थ किल सोमिलज्जोत्ति, माहणो तस्स दिक्खकालंमि। पउरा जणजाणवया, समागया जन्नवाडंमि ॥**

तत्र सोमिलार्य इति ब्राह्मणस्तस्य दीक्षाकाले यज्ञकाले पौरा जानपदाश्च जनाः ॥ ५४२ ॥ 'एगं'

**एगंते य विवित्ते, उत्तरपासंमि जन्नवाडस्स। तो देवदाणविंदा, करेंति महिमं जिणिंदस्स ॥ ५४३ ॥**

यज्ञपाटस्योत्तरादिक्पार्श्वे विविक्ते एकस्मिन्नन्ते प्रदेशे। ततः समवसरणादनु देवदानवेन्द्राः ॥ ५४३ ॥ 'भव'

**भवणवइवाणमंतर, जोइसवासी विमाणवासी य। सविड्ढिए सपरिसा, कासी नाणुप्पयामहिमं ॥११५॥**

भवनपत्यादयः सपर्षदो ज्ञानोत्पादमहिमानमकार्षुः ॥ ११५ ॥ अथ वाच्यद्वारगाथा 'समो'

समोसरणे केवइया, रूवं पुच्छ वागरण सोयपरिणामे। दाणं च देवमल्ले, मल्लाणयणे उवरि तित्थं॥५४४॥

समवसरणविधिः।१। 'केवइया' इत्यर्हद्धर्मोक्तौ कियन्ति सामायिकानि, केषु जीवेषु कियतो वा क्षेत्राददृष्टसमवसरणेनागम्यं । २। प्रभो रूपं । ३ । युगपदसङ्ख्यपृच्छकेषु प्रभोर्व्याकरणं । ४–५। श्रोतृपरिणामः । ६। दानं अर्हच्छुद्धिवक्तुः। ७। दिनो-दयाद् पड्घटीमानः कालो देवमाल्यं । ८। यतश्चूर्णौ 'तित्थयरो पढमपोरिसीए ताव धम्मं कहेइ जाव पढमपोरिसी उग्घाडवेला एस देवमल्लोत्ति वुच्चइ'। तथा माल्यं बलिस्तदानयनं । ९। उपरीति पौरुष्या अनु, तीर्थमिति गणभृद्देशनां करोति ॥ ५४४ ॥ क्रमेणाह 'जत्थ'

जत्थ अपुव्वोसरणं, जत्थ व देवो महिड्ढिओ एइ। वाउदयपुप्फवद्दलपागारतियं च अभिओगा ॥५४५॥

यत्र क्षेत्रे अपूर्वं अभूतपूर्वं समवसरणं स्यात्, यत्र वा महर्द्धिर्देव एति, तत्र रेण्वादिहत्यै वातं, भाविरेणुशान्त्यै उदक-वर्दलं, भूभूषायै पुष्पवर्दलं तथा प्राकारत्रयं चाभियोग्याः सुराः कुर्युः ॥ ५४५ ॥ विशेषेणाह 'मणि'

मणिकणगरयणचित्तं, भूमीभागं समंतओ सुरभिं। आजोअणंतरेणं, करेंति देवा विचित्तं तु ॥५४६॥

मणयश्चन्द्रकान्ताद्या कनकं देवकाञ्चनं रत्नानीन्द्रनीलादीनि सुरभिगन्धाम्बुपुष्पैरायोजनांतरेण योजनमध्ये वृत्तक्षेत्रे ॥ ५४६ ॥ 'वेंट'

वेंटट्ठाइं सुरभिं, जलथलयं दिव्वकुसुमणीहारिं। पइरंति समन्तेणं, दसद्धवण्णं कुसुमवासं ॥५४७॥

वृन्तस्थायिनं जलस्थलजदिव्यकुसुमवन्निर्हारिणं प्रबलगन्धं, अनुस्वारः प्राकृतत्वात्, वैक्रियकुसुमवर्षं समन्ततो 'दस०' पञ्चवर्णं प्रकिरन्ति ॥ ५४७ ॥ 'मणि'

**मणिकणगरयणचित्ते, चउद्दिसिं तोरणे विउव्वंति । सच्छत्तसालभंजिय-मयरद्धयचिंधसंठाणे ॥५४८॥**

छत्राणि, सालभंज्यः, मकरा मकरमुखानि, ध्वजाः, चिह्नानि स्वस्तिकादीनि, तेषां संस्थानं रचना तैः सहितानि, सच्छत्रशालभञ्जीमकरध्वजचिह्नसंस्थानानि ॥ ५४८ ॥ 'तिन्नि'

**तिन्नि य पागारवरे रयणविचित्ते तहिं सुरगणिंदा । मणिकंचणकविसीसग-विभूसिए ते विउव्वेंति॥५४९**

ते वक्ष्यमाणाः सुरगणेन्द्रा विकुर्वन्ति ॥ ५४९ ॥ कथमित्याह 'अब्भं'

**अब्भंतर मज्झ बहिं, विमाणजोइभवणाहिवकया उ । पागारा तिण्णि भवे, रयणे कणगे य रयए य॥**

क्रमात् वैमानिकादीन्द्रकारिताः प्राकारास्त्रयो भवेयुः रात्नः कानकः राजतश्च ॥ ५५० ॥ 'मणि'

**मणिरयणहेमयाविय, कविसीसा सव्वरयणिया दारा । सव्वरयणामय च्चिय, पडागधयतोरणविचित्ता ॥**

इहाद्ये प्राकारे पञ्चवर्णचन्द्रकान्तादिमणिमयादिकपिशीर्षकाणि वैमानिकाः । द्वितीये पद्मरागादिरत्नमयानि ज्योतिष्काः । तृतीये हेममयानि भवनाधिपाः । तथा सर्वरत्नमयानि द्वाराणि भवनेशाः कुर्युः । रत्नमयान्येव पताकाध्वजयुक्तानि तोरणानि विचित्राणि विविधचित्रयुतानि व्यन्तराः ॥ ५५१ ॥ 'तत्तो'

गंधेण मणहरेणं, धूवघडीओ विउव्वेंति ॥ ५५२ ॥
तत्तो य समंतेणं, कालागरुकुंदुरुक्कमीसेणं।
कुंदरुक्को दिव्यचीडस्तन्मिश्रेण गन्धेन युक्ता धूपघटिकाः ॥ ५५२ ॥ 'उक्कु'
तित्थगरपायमूले, करेंति देवा णिवयमाणा ॥ ५५३ ॥
उक्कुट्ठिसीहणायं, कलयलसद्देण सव्वओ सव्वं।
हर्षोत्कृष्टा सिंहनादं, कलकलशब्देन सर्वं सम्पूर्णं निपतन्तः आयान्तः ॥ ५५३ ॥ 'चेइ'
जं चऽण्णं करणिज्जं, करेंति तं वाणमंतरिया ॥५५४॥
चेइदुमपेढछंदय, आसणछत्तं च चामराओ य।
चैत्यद्रुममशोकतरुं प्रभूच्चत्वाद् द्वादशगुणं, तदधो रत्नपीठं, तदूर्ध्वं देवच्छन्दकं, तन्मध्ये सिंहासनं। तदूर्ध्वं छत्रातिछत्रं, चामरे यक्षहस्तस्थे, चशब्दात्पद्मस्थं धर्मचक्रं, यच्चान्यद्वातोदकादिकरणीयं। एषाऽर्हतां सामान्येन समवसरणविधिरत्र तु, चैत्यद्रुं शक्रो विकुर्वतीशानश्छत्रातिछत्रं चामरधरौ बलिचमरौ इति चूर्णौ। अत्र वातोदकादि व्यन्तराः, प्राकारानिन्द्राः स्वैः स्वैराभियोग्यैरेव कारयन्ति तत एव 'वाउदयपुप्फे' त्यादि प्रागुक्तं ॥ ५५४ ॥ 'साहा'
एक्कु च्चिय तं सव्वं, करेइ भयणा उ इयरेसिं ॥५५५॥
साहारणओसरणे, एवं जत्थिड्ढिमं तु ओसरइ।
साधारणसमवसरणेऽयमुक्तो विधिर्ज्ञेयः। यत्र तु ऋद्धिमान् देवोऽवसरति एति स एकोऽपि सर्वं करोति इतरेषामल्पर्द्धीनां समवसरणकृतौ 'कुर्युर्नवे'ति भजना विकल्पः ॥ ५५५ ॥ 'सूरो'
दोहिं पउमेहिं, पाया मग्गेण य होइ सत्तऽन्ने ॥५५६॥
सूरोदय पच्छिमाए, ओगाहन्तीए पुव्वओऽईह।

सूर्योदये पश्चिमायां च पौरुष्यामवगाहन्त्यामायात्यां प्रभुः पूर्वद्वारेणैति। द्वयोः पद्मयोः पादौ स्थापयन्निति शेषः, मार्गतः पृष्ठतः प्रभोः सप्तान्यानि स्युः। तत्र यद्यत्पश्चिमं तत्तत्प्रभोर्दक्षिणांह्रिन्यासे दक्षिणतः वामांह्रिन्यासे वामतश्चैत्य पुरस्तिष्ठेत् ॥ ५५६ ॥ 'आया'

**आयाहिण पुव्वमुहो, तिदिसिं पडिरूवगा उ देवकया। जेट्ठगणी अण्णो वा, दाहिणपुव्वे अदूरंमि ॥५५७॥**

'आयाहिणे'ति प्रभुश्चैत्यद्रुप्रदक्षिणां कृत्वा पूर्वमुखो विशेत् त्रिदिक्षु प्रभुनिभानि प्रतिरूपकाणि सिंहासनधर्म्मचक्रादिवन्ति देवकृतानि स्युः। प्रायो ज्येष्ठो गणी गणभृदन्यो वा पूर्वद्वारेण प्रविश्य दक्षिणपूर्वे आग्नेयकोणे त्रिः प्रदक्षिणय्य नत्वाऽदूरे प्रभोः पार्श्वे तिष्ठेत् ॥ ५५७ ॥ 'जे ते'

**जे ते देवेहिं कया, तिदिसिं पडिरूवगा जिणवरस्स। तेसिंपि तप्पभावा, तयाणुरूवं हवइ रूवं ॥५५८॥**

यानि तानि तिसृषु दिक्षु प्रतिरूपकाणि तेषामपि रूपं तस्यार्हतः प्रभावात्तस्यार्हतोऽनुरूपं ॥ ५५८ ॥ 'तित्था'

**तित्थाइसेससंजय, देवी वेमाणियाण समणीओ। भवणवइवाणमंतर,-जोइसियाणं च देवीओ ॥५५९॥**

तीर्थं गणभृत्तस्मिन् वृद्धे लघौ वाऽग्रे प्रभुपार्श्वे देशनायै निविष्टे शेषाः गणिनः प्रभुं त्रिःपदक्षिणय्य नत्वा च तीर्थस्य पृष्ठतः पार्श्वेषु निषीदन्ति। तेभ्योऽनु अतिशयिनः केवल्याद्यास्तदन्वन्ये संयतास्ततो वैमानिकदेवानां देव्यस्ततः श्रमण्यः एषाग्नेयकोणदिक्परिषत् पूर्वद्वारा विशेत्, भवनज्योतिर्व्यन्तरदेव्य एषा नैऋत्दिक्पर्षद्दक्षिणेन विशेत्। अत्र गाथानुलोम्येन

भवनदेवीभ्योऽतु व्यन्तरज्योतिर्देव्य उक्ताः ॥ ५५९ ॥ विदिग्द्वयवाच्यं सामान्येनोक्त्वा विशेषेणाह ' केव '

**केवलिणो तिउण जिणं, तित्थपणामं च मग्गओ तस्स । मणमादीवि णमंता, वयंति सट्ठाणसट्ठाणं ॥५६०**

त्रिगुणां त्रिःप्रदक्षिणय्य अर्हन्तं 'नमो तित्थस्से'ति तीर्थप्रणामं च कृत्वा तीर्थस्य गणिनां च मार्गतः पृष्ठतो निषीदन्ति । ' मण ' मनोज्ञान्यादयोऽपि नमन्तः सन्तः स्वस्थाने २ व्रजन्ति । कोऽर्थः । केवलिभ्योऽनुक्रमान्मनोज्ञान्यवधिज्ञानिचतुर्दशादि-पूर्विणो लब्धिमन्तश्च प्रभुं प्रदक्षिणय्य नत्वा ' नमो तित्थस्स नमो केवलीणं ' इत्युक्त्वा । एवमन्ये यतयो ' नमो तित्थस्स, नमो अतिसेसीयाणं ' इत्युक्त्वा सातिशयर्षीन्नत्वा निषीदन्ति । वैमानिकदेव्यस्तु ' नमो तित्थस्स नमो साहूणं ' इत्युक्त्वा तिष्ठन्ति न तु निषीदन्ति । श्रमण्योऽपि ( तीर्थंकरसाधूनभिवन्द्य वैमानिकदेवीपृष्ठतः तिष्ठन्ति न निषीदन्ति ) । भवनज्योति-र्व्यन्तरदेव्योऽर्हदादीन्नत्वा नैरुते पश्चात्तिष्ठन्ति । अत्रापि गाथानुलोम्याद्देवीनां व्यत्ययेन नामानि ॥ ५६० ॥ ' भव '

**भवणवई जोइसिया, बोद्धव्वा वाणमंतरसुरा य । वेमाणिया य मणुया, पयाहिणं जं च निस्साए ॥५६१**

भवनेशाद्याः पश्चिमेन प्रविश्यार्हदादीन्नत्वा वायव्ये, वैमानिका मनुजा नरा नार्यश्चोत्तरेण प्रविश्यार्हतः प्रदक्षिणां कृत्वाऽर्ह-दादीन्नत्वैशाने पश्चात्तिष्ठन्ति । 'जं च' यः परिच्छेदो यं निश्रां कृत्वाऽऽगात् स तत्पार्श्वे तिष्ठेत् ॥ ५६१ ॥ अत्र भाष्यं ' संज '

**संजयवेमाणित्थी संजय (इ) पुव्वेण पविसिउं वीरं । काउं पयाहिणं, पुव्वदक्खिणे ठंति दिसिभागे॥११६॥**

संयता वैमानिकस्त्रियः संयत्यः पूर्वेण पूर्वद्वारेण प्रविश्य वीरं प्रदक्षिणां कृत्वा पूर्वदक्षिणे आग्नेयकोणे तिष्ठन्ति । ११६ । 'जोइ'

जोइसियभवणवंतरदेवीओ, दक्खिणेण पविसंति। चिट्ठंति दक्खिणावरदिसिंमि, तिगुणं जिणं काउं११७

ज्योतिष्कभवनव्यन्तरदेव्यो दक्षिणेन द्वारेण प्रविशन्ति, त्रिगुणं प्रदक्षिणय्य दक्षिणापरदिशि नैऋते तिष्ठन्ति।११७। 'अव'

अवरेण भवणवासी वंतरजोइससुरा य अइगंतुं। अवरुत्तरदिसिभागे ठंति जिणं तो नमंसित्ता॥ ११८ ॥

अपरेण पश्चिमेन, गाथानुलोम्याय व्यन्तरज्योतिःसुरा इति व्यत्ययोक्तिः अतिगत्य आगत्य ॥ ११८ ॥ ' सम '

समहिंदा कप्पसुरा, राया णरणारिओ उदीणेणं। पविसित्ता पुव्वुत्तरदिसीए चिट्ठंति पंजलिआ॥११९॥

उदीच्येन द्वारेण प्रविश्य पूर्वोत्तरदिशि ईशाने तिष्ठन्ति प्राञ्जलयः ॥ ११९ ॥ इहायं समवसरणचित्रितपटेषु सम्प्रदायः । सर्वा देव्यो न निषीदन्ति, देवा नृनार्यश्च निषीदन्ति इति वृत्तौ, परं श्रीभगवत्यादौ देवानन्दादीनां वन्दनदेशनाश्रवणकाले ऊर्ध्वस्थानमेव दृश्यते । ' एक '

एक्केक्कीय दिसाए, तिगं तिगं होइ सन्निविट्ठं तु । आदिचरिमे विमिस्सा, थीपुरिसा सेसपत्तेयं ॥ ५६२ ॥

एकैकस्यां दिशि पर्षदां त्रिकं त्रिकं संनिविष्टं भवति । आद्यचरमदिशोरग्नेयेशानयोर्विमिश्राः स्त्रीपुरुषाः स्युः । ' संजय-वेमाणित्थी राया नरनारी उ ' इति, शेषदिशोः प्रत्येकमिति स्त्रियो नरा वा ॥ ५६२ ॥ ' एंतं '

एंतं महिड्ढियं, पणिवयंति ठियमवि वयंति पणमंता । णवि जंतणा ण विकहा, ण परोप्परमच्छरो ण भयं॥

आयान्तं महर्द्धिकं प्राग्निविष्टसामान्यलोकाः प्रणिपतन्ति स्थितमपि, महर्द्धिकं प्रणमन्तो व्रजन्ति । तत्र नापि यन्त्रणा पीडा, न विकथा, न परस्परमत्सरो, न भयं ॥ ५६३ ॥ ' बिइ '

**बिइयंमि होंति तिरिया, तइए पागारमन्तरे जाणा । पागारजढे तिरियाऽवि होंति पत्तेय मिस्सा वा ॥ ५६४ ॥**

द्वितीये प्राकारान्तरे तिर्यञ्चस्तृतीये प्रकारान्तरे रथादीनि यानानि । ' पागारजढे' ति प्राकाराद्बहिस्तिर्यञ्चोऽपिशब्दान्नृदेवाश्च, प्रत्येकं इति केवला मिश्रा नृदेवपशुभिर्युक्ता वा, प्रविशन्तो यान्तश्च स्युः ॥ ५६४ ॥ समवसरणद्वारं १ समवसरणस्य स्थापना अनया रीत्याऽऽलोक्या । अथ केवइयाद्वारं ' सव्वं '

**सव्वं च देसविरतिं, सम्मं घेच्छति व होति कहणा उ । इहरा अमूढलक्खो, न कहेइ भविस्सइ ण तं च ५६५**

सर्वां विरतिं देशविरतिं सम्यक्त्वं वा ग्रहीष्यति कोऽपि तदैव कथना देशना स्यादितरथाऽमूढलक्षोऽमूढं लक्षं ज्ञेयं यस्य, अर्हन्न कथयति, तच्च न भविष्यति यत्प्रभोर्देशनायां न कोऽपि किञ्चित्सामायिकं लाति ॥ ५६५ ॥ ' मणु '

**मणुए चउसमणयरं, तिरिए तिण्णि व दुवे व पडिवज्जे । जइ नत्थि नियमसो, च्चिय सुरेसु सम्मत्तपडिवत्ती ॥**

मनुजश्चत्वारि सामायिकानि चतुर्ष्वन्यतरद्वा, तिर्यङ् सर्वविरतिवर्जं ३–२ वा प्रतिपद्येत, यद्येषु मध्ये कोऽपि प्रतिपत्ता नास्ति तदा नियमत एव ' सुरे० ' ॥ ५६६ ॥ ' तित्थ '

**तित्थपणामं काउं, कहेइ साहारणेण सद्देणं । सव्वेसिं सण्णीणं, जोयणणीहारिणा भगवं ॥ ५६७ ॥**

'नमो तित्थस्से'त्युक्त्वा प्रणामं कृत्वाऽर्द्धमागधगिरा सर्वसंज्ञिनां साधारणशब्देन योजननिर्हारिणा योजनव्यापिना कथयति ॥ ५६७ ॥ किं तीर्थं नमतीत्याह 'तप्पु'

**तप्पुव्विया अरहया, पूइयपूता य विणयकम्मं च । कयकिच्चोऽवि जह कहं, कहए णमए तहा तित्थं ॥**

तीर्थं प्रवचनं तत्पूर्विकार्हत्ता पूजितेन पूजाऽस्य कृता स्यात्, लोकस्य पूजितपूजकत्वात् विनयमूलधर्म्मस्थापनाय विनयकर्म्म च कृतं स्यात्, यद्वा कृतकृत्योऽपि प्रभुर्यथा धर्म्मकथां ( कथयति ) तथा तीर्थमपि नमति ॥ ५६८ ॥ 'जत्थ'

**जत्थ अपुव्वोसरणं, न दिट्ठपुव्वं व जेण समणेणं । बारसहिं जोयणेहिं सो एइ अणागमे लहुया ॥५६९॥**

यत्र तत्तीर्थकरापेक्षयाऽभूतपूर्वं समवसरणं, द्वादशयोजनेभ्य एति, अवज्ञया नागते 'लहुया' चतुर्लघवः प्रायश्चित्तं ॥५६९॥ उक्तं केवइया द्वार । अथ रूपद्वा० ३ । 'सव्व'

**सव्वसुरा जइ रूवं, अंगुट्ठपमाणयं विउव्वेज्जा । जिणपायंगुट्ठं पइ ण सोहए तं जहिंगालो ॥५७०॥**

सर्वसुरा यदि महाशक्त्याङ्गुष्ठप्रमाणं रूपं विकुर्युः तथापि जिनपदाङ्गुष्ठं प्रति न शोभते यथाङ्गारः ॥ ५७० ॥ 'गण'

**गणहर आहार अणुत्तरा (य) जाव वण चक्कि वासु बला । मण्डलिया ता हीणा, छट्ठाणगया भवे सेसा ॥**

अर्हद्रूपादनन्तगुणहीना गणधरास्ततोऽन्तगुणहीनमाऽऽहारकाङ्गं । एवमनुत्तरसुरा उपरिमग्रैवेयकाद्यच्युतादिद्वादशकल्पभवनज्योतिर्व्यन्तरचक्रिवासुबलमाण्डलिका अनन्तरानन्तरदेहेभ्योऽनन्तगुणहीनाः 'वणे'ति व्यन्तराः, शेषा राजानो लोकाश्चा-

नन्तासङ्ख्यमसङ्ख्यातभागः सङ्ख्यातामसङ्ख्यानन्तगुणैर्हीना इति षट्स्थानपतिता मिथो भवेयुः ॥ ५७१ ॥ ' संघ '

**संघयण रूव संठाण, वण्ण गइ सत्त सार उस्सासा । एमाइणुत्तराइं, हवंति नामोदए तस्स ॥५७२॥**

संहननं अस्थिरचना, रूपं देहावयवाः, संस्थानं आकारः, वर्णोऽङ्गच्छाया, गतिर्गमनम्, सत्त्वं साहसं, सारो बलं, उच्छ्वासो नागाम्यवायुः । आदिशब्दात् श्वेतमांसादि, एतानि अनुत्तराणि सर्वोत्तमानि अर्हन्नामकर्मोदयादुच्छ्वासोऽनुत्तरत्वं सौरभ्येण ॥ ५७२ ॥ ' पग '

**पगडीणं अण्णासुवि, पसत्थ उदया अणुत्तरा होंति । खय उवसमेऽवि य तहा, खयम्मि अविगप्पमाहंसु ॥**

षष्ठ्यर्थे सप्तमी, अन्यासां प्रकृतीनां अपिशब्दान्नाम्नोऽपि प्रशस्ता उदया उच्चैर्गोत्रसुस्वरत्वाद्यास्तथा क्षयोपशमे सति गहानलाभादयोऽपिशब्दादुपशमेऽपि छद्मस्थकाले उदया अनुत्तरा अनन्यसदृशा स्युः । तथा कर्म्मणां क्षये केवलोत्पत्तौ गुणौघमविकल्पमिति निःसन्देहं सर्वोत्तममाचख्युः ॥ ५७३ ॥ ' अस्सा '

**अस्सायमाइयाओ, जावि य असुहा हवंति पगडीओ । णिंबरसलवोव्व पए ण होंति ता असुहया तस्स ॥**

असातवेदनीयाद्या या अपि निम्बरसलव इव पयसि दुग्धे न भवन्ति ता असुखदाः ॥ ५७४ ॥ ' धम्मो '

**धम्मोदएण रूवं, करेंति रूवस्सिणोऽवि जइ धम्मं । गिज्झवओ य सुरूवो, पसंसिमो तेण रूवं तु ॥५७५॥**

धर्म्मोदयेन रूपं स्यादिति श्रोतारोऽपि धर्म्मे प्रवर्त्तन्ते । कुर्वन्ति रूपस्विनोऽपि यदि ततोऽन्यैः सुष्ठु कार्यं ग्राह्यवाक्यश्च

सुरूपः स्याच्चशब्दात् श्रोतृरूपगर्वच्छेदी च तेनार्हतो रूपं प्रशंसामः ॥५७४॥ गतं रूपद्वा० ३, अथ पृच्छकव्याकरणद्वा० 'काले'

**कालेण असंखेणवि, संखातीताण संसईणं तु। मा संसयवोच्छित्ती, न होज्ज कमवागरणदोसा ॥५७६॥**

असङ्ख्येनापि कालेन सङ्ख्यातीतानां संशयिनां संशयव्युच्छित्तिर्न भवेत् इति माऽस्तु, कुतः क्रमव्याकरणदोषादतो युगपद् व्यागृणोत्येकवाक्येन सर्वसंशयांश्छिनत्तीत्यर्थः ॥ ५७६ ॥ किं च 'सव'

**सव्वत्थ अविसमत्तं, रिद्धिविसेसो अकालहरणं च। सव्वण्णुपच्चओऽवि य, अचिंतगुणभूतिओ जुगवं ॥**

सर्वत्र सत्त्वेषूच्चावचेष्वविषमत्वं तुल्यत्वं। तथा ऋद्धिविशेषोऽयं प्रभोरेवाकालहरणं, अकालक्षेपश्चेत्यर्थ, कालक्षेपे कस्याप्यच्छिन्नसंशीतेरेव मृतिः स्यान्न चार्हन्तमप्याप्य संशयनिवृत्त्यादिफलरहिताः स्युर्जीवाः। तथा लोकानां सर्वज्ञप्रत्ययोऽपि च, तथाऽचिन्त्यगुणानां भूतिः सम्पद् यस्य, यतोऽमी गुणास्ततो युगपत् संशयच्छेत्रीं गिरं वक्तीत्यर्थः ॥ ५७७ ॥ गतं पृच्छादिद्वा० अथ श्रोतृपरिणामद्वारं 'वासो'

**वासोदयस्स व जहा, वण्णादी होंति भायण विसेसा। सव्वेसिंपि सभासा, जिणभासा परिणमे एवं ॥**

वर्षो वृष्टिस्तदुदकस्य, वाशब्दादन्याम्बुनोऽपि यथा भाजनं स्थानं तद्विशेषाद् वर्णगन्धरसादयो भवन्ति। 'सव्वे०' स्वभाषया जिनभाषा परिणमत्येव ॥ ५७८ ॥ 'साहा'

**साहारणासवत्ते, तदुवओगो उ गाहगगिराए। न य निव्विज्जइ सोया, किढिवाणियदासिआहरणा ॥**

साधारणा सर्वात्मनामत एवासपत्नाऽद्वितीया तस्यां, तथा ग्राहयतीति ग्राहिका तस्यां गिरि श्रोता तदुपयोग एव स्यान्न
च निर्विद्यते । कश्चिद्वणिग्दास्युदाहरणात्तच्चेदं कस्यापि दासी किढिः वृद्धा प्रातः काष्ठार्थं गता, वृद्धक्षुधार्त्ता मध्याह्ने आगताऽल्प-
काष्ठानयनात् कुट्टित्वा तादृशैव पुनः प्रेषिता महत्काष्ठौघमानयन्ती पश्चिमपौरुष्यां ज्येष्ठमासे एकं काष्ठं भुवि पतितं लान्त्य-
र्हद्देशनां श्रुत्वा तथैव स्थिता । क्षुत्तृपाश्रमभारान्नाज्ञासीद्यावद्दिनान्ते देशनान्तः ॥ ५७९ ॥ एवं च 'सव्वा'

सव्वाउअंपि सोया, खवेज्ज जइ हु सययं जिणो कहए । सीउण्हखुप्पिवासापरिस्समभए अविगणेंतो ॥

'खवेज्ज' क्षपयेद्यद्यपि दुर्निश्चये सततं जिनो व्याख्यां कथयति ॥५८०॥ गतं श्रोतृपरिणामद्वा० । अथ दानद्वा० 'वित्ती'

वित्ती उ सुवणस्सा, बारस अद्धं च सयसहस्साइं । तावइयं चिय कोडी, पीतीदाणं तु चक्किस्स ॥५८१॥

प्रभुगुद्विकुर्वपं वर्यं वृत्तिराजीविका सुवर्णस्य द्वादश अर्द्धं च शतसहस्राणि १२५०००० जिनागमोक्तौ, चक्रिणः प्रीति-
दानं तावन्त्य एव कोट्यः ॥ ५८१ ॥ 'एयं'

एयं चेव पमाणं, णवरं रययं तु केसवा दिंति । मंडलिआण सहस्सा, पीईदाणं सयसहस्सा ॥५८२॥

एतदेव प्रमाणं वृत्तौ प्रीतिदाने च, नवरं केवलं केशवाः स्वर्णस्थाने रजतं रूप्यं, मण्डलिकानां सार्द्धं १२ रूप्यसहस्राणि
वृत्तिः प्रीतिदानं सार्द्धलक्षाः । १ । ॥ ५८२ ॥ 'भत्ति'

भत्तिविहवाणुरूवं, अण्णेऽवि य दिंति इब्भमाईया । सोऊण जिणागमणं, निउत्तमणिओइएसुं वा ॥

भक्तिर्विभवानुरूपं अन्येऽपि इभ्यादयः, इभ्यः श्रीमान् आदिशब्दाद्ग्रामेशाद्याः श्रुत्वा जिनागमनं नियुक्तेभ्योऽनियोजितेभ्यो वा ॥ ५८३ ॥ 'देवा'

**देवाणुअत्ति भत्ती, पूया थिरकरण सत्तअणुकंपा। साओदय दाणगुणा, पभावणा चेव तित्थस्स ॥५८४॥**

देवाः प्रभौ स्वर्णवृष्ट्यादिपूजां कुर्वन्तीति देवानुवृत्तिः १ प्रभौ भक्तिः २ पूजा च ३ भक्तिर्मनोरागः, पूजा भक्त्या सत्कारकृतिः, नवश्राद्धानां स्थिरीकरणं ४ सत्त्वानुकम्पा ५ सातोदयः सातावेदनीयबन्धश्च कृताः स्युः ६ । एते प्रीतिदा नगुणाः । प्रभावना चैव तीर्थस्य ॥ ५८४ ॥ गतं दानद्वा० । अथ माल्यानयनद्वा० । 'राया' 'भाइ'

**राया व रायमच्चो, तस्सऽसई पउरजणवओ वाऽवि। दुब्बलिखंडियबलिछडियतंदुलाणाढगं कलमा ॥**
**भाइयपुणाणियाणं, अखंडफुडियाण फलगसरियाणं। कीरइ बली सुरावि य, तत्थेव छुहंति गंधाई ॥**

राजा वा राजामात्यो वा तस्यामति अभावे पौरं पुरवासिलोकः ग्रामादिषु जनपद इति तद्वासी लोकस्तेन दुर्बलिकाखण्डितानां बलवती स्त्रीछटितानां भाजितपुनरानीतानां भाजनमीश्वरादिगृहेषु वीननार्थमर्पणं तेभ्यः पुनरानयनं। अखण्डिताऽस्फुटितानां फलके सृतानां गतानां स्थालोपरि फलकं मुक्त्वा तत्र लोठिता न भग्नाः स्फुटिताः। तेषां कलमतंदुलानां द्वे असृती प्रसृतिः द्वे प्रसृती सेतिका, चतुःसेतिकाभिः कुडवः ४ कुडवैः प्रस्थः ४ प्रस्थैराढकस्तन्मात्रो बलिः क्रियते, गन्धादि कर्पूरादि आदिशब्दाचन्दनादीनि क्षिपन्ति ॥ ५८५-८६ ॥ 'बलि'

बलिपविसणसमकालं, पुव्वद्दारेण ठाति परिहकणा। तिगुणं पुरओ पाडण, तस्सद्धं अवडियं देवा ५८७

पूर्वद्वारेण बलेः प्रवेशनसमकालं धर्म्मपरिकथना तिष्ठति। राजादिर्बलिहस्तस्त्रिगुणं प्रदक्षिणय्यार्हत्पादमूले पुरतो बलिपातनं कुर्यात्तस्यार्द्धमपतितं देवा लान्ति ॥ ५८७ ॥ 'अद्ध'

अद्धद्धं अहिवइणो, अवसेसं हवइ पागयजणस्स। सव्वामयप्पसमणी, कुप्पइ णऽण्णो य छम्मासे।५८८।

शेषार्द्धस्य अर्द्धमधिपतेः, अवशेषं प्राकृतजनस्य सामान्यलोकस्य, शिरसि सिक्थोत्क्षेपे सर्वाऽऽमयप्रशमनो बलिः, प्राकृतत्वात् स्त्रीलिङ्गं। कुप्यति नान्यो रोगः षण्मासं यावत् ॥ ५८८ ॥ गतं माल्यद्वा०। अथोपरि तीर्थं द्वा० ७, ततोऽर्हन्नाद्यप्राकारोत्तरद्वारेणेशाने देवच्छन्दके यथासुखं तिष्ठेत्। द्वितीयपौरुष्यां गणी धर्म्मं वक्ति यतः 'खेय'

खेयविणोओ सीसगुणदीवणा पच्चओ उभयओऽवि। सीसायरियकमोऽवि य गणहरकहणे गुणा होंति

खेदस्य विनोदोऽपगमोऽर्हतः स्यात्। १ शिष्यगुणदीपना २ यथार्हतोक्तं तथा गणिनापीत्युभयतोऽपि प्रत्ययः ३ आचार्यशिष्यक्रमश्च ४ प्राकृतत्वाद् व्यत्ययः, गणभृद्धर्म्मकथने एते गुणाः ॥ ५८९ ॥ 'राओ'

राओवणीयसीहासणे, निविट्ठो व पायवीढंमि। जिट्ठो अन्नयरो वा, गणहारी कहइ बीआए ॥५९०॥

राजोपनीतसिंहासनेऽर्हत्पादपीठे वा निविष्टो गणधारी द्वितीयपौरुष्यां धर्म्मं कथयति ॥ ५९० ॥ 'संखा'

संखाईएऽवि भवे, साहइ जं वा परो उ पुच्छिज्जा। ण य णं अणाइसेसी, वियाणई एस छउमत्थो ५९१

सङ्ख्यातीतान् भवान् 'साहइ' वक्ति यद्वा परः पृच्छेत् तत्सर्वं वक्ति नैव 'णं' वाक्यालङ्कारेऽनतिशयो अवध्यादिरहितः पुमान् विजानाति यदेष गणी छद्मस्थः ॥ ५९१ ॥ इति समवसरणं सम्पूर्णम् 'तं दि'

**तं दिव्वदेवघोसं, सोऊणं माणुसा तहिं तुट्ठा। अहो जण्णिएण जट्ठं देवा किर आगया इहइं॥ ५९२ ॥**

तं दिव्यं प्रधानं अहो याज्ञिकेन इष्टं 'इहइं' इह ॥ ५९२ ॥ 'एक्का'

**एक्कारसवि गणहरा, सव्वे उण्णयविसालकुलवंसा। पावाए मज्झिमाए, समोसढा जन्नवाडम्मि ।५९३।**

गणधरत्वं भाविनि भूतवदुपचारात् सर्वे निरवशेषाश्छात्रादिभिः उन्नतानि प्रधानानि विशालानि कुलानि येषु ते एवंविधा वंशा येषां ते समवसृताः समेताः ॥ ५९३ ॥ 'पढ' 'मंडि'

**पढमित्थ इंदभूई, बिइओ उण होइ अग्गिभूइत्ति। तइए य वाउभूई, तओ वियत्ते सुहम्मे य ॥५९४॥**

**मंडियमोरियपुत्ते, अकंपिए चेव अयलभाया य। मेयज्जे य पभासे, गणहरा होंति वीरस्स ॥ ५९५॥**

'वियत्ते' व्यक्तः ४ ॥ ५९४–५९५ ॥ 'जं का'

**जंकारण णिक्खमणं, वोच्छं एएसि आणुपुव्वीए। तित्थं च सुहम्माओ, णिरवच्चा गणहरा सेसा ॥५९६॥**

यत्कारणं निःक्रमणं तद्वक्ष्ये। तीर्थं सुधर्म्माज्जातं, निरपत्याः शिष्यसन्तानरहिताः शेषा गणधरा जाताः ॥ ५९६ ॥ एषामेते क्रमात्संशयाः ॥ 'जीवे'

जीवे[1] कम्मे[2] तज्जीव[3], भूय[4] तारिसयं[5] बंधमोक्खे[6] य। देवा[7] णेरइए[8] या पुण्णे[9] परलोय[10] णेव्वाणे[11] ॥५९७॥

जीवोऽस्ति नास्ति वा १, एवं कर्म्म २, 'तज्जीवे'ति स एव जीव स एव देहः किं वा देहादन्यो जीव इति संशयः ३। भूतानि पृथ्व्यादीनि सन्ति नवा ४, य इह भवे यादृशः पुमान् स्त्री वा, सोऽमुत्रापि किं तादृशः स्यात् ५ बन्धो मोक्षः प्रत्येकमन्देहः ६, देवाः ७, नैरयिकाः ८, वा एवार्थे, पुण्यं ९, परलोकः १०, निर्वाणं सिद्धिपदं ११, एतानि सन्ति नवेति सन्देहाः ११ ॥ ५९७ ॥ 'पंच'

पंचण्हं पंचसया, अद्धुट्ठसया य होंति दोण्हं गणा। दोण्हं तु जुयलयाणं, तिसओ तिसओ भवे गच्छो ॥

एतत्परिकरः। पञ्चानां गणभृतां पञ्चशतानि, द्वयोरर्द्धचतुर्थशतौ गणौ, द्वयोर्गणधरयुगलयोः युगलत्वं वाचनाया ऐक्यात्, प्रत्येकं प्रत्येकं त्रिशतस्त्रिशतो गच्छतः 'एवं द्वादशशतानि' अत्र द्वयोर्द्वयोः शतत्रिकयोर्वाचनाचारस्यैक्यात् षड्भिः षड्भिः शतैरेकैको गण इति द्वौ गणौ एवं ९ गणाः ॥ ५९८ ॥ 'सोऊ'

सोऊण कीरमाणीं, महिंम देवेहि जिणवरिंदस्स। अह एइ अहम्माणी, अमिरिसिओ इंदभूइत्ति ॥

अथेति अहंमानी अमर्षितः इन्द्रभूतिरितिनामा ॥ ५९९ ॥ 'आभ'

आभट्ठो य जिणेणं, जाइजरामरणविप्पमुक्केणं। णामेण य गोत्तेण य, सव्वण्णू सव्वदरिसीणं ॥

आभाषितः सर्वज्ञेन सर्वदर्शिना ॥ ६०० ॥ 'किं'

**किं मन्नि अत्थि जीवो, उआहु नत्थित्ति संसओ तुज्झ। वेयपयाण य अत्थं, न याणसी तेसिमो अत्थो ॥**

किं मन्ये, जानामि उताहो वितर्के, संशयो विरुद्धवेदपदोत्थः, वेदपदानां अर्थं, चशब्दाद्युक्तितत्त्वं च न जानासि, वेदपदानि चामूनि 'विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानु विनश्यति न प्रेत्य संज्ञाऽस्ति' त्वमेषां अर्थमेवं वेत्सि विज्ञानघनश्चैतन्यपिण्ड स एवैतेभ्यो भूतेभ्यः पृथ्व्यादिभ्यः समुत्थायोत्पद्य तान्येव विनश्यन्त्यनु पश्चाद्विनश्यति, प्रेत्य मृत्वा परलोकसंज्ञा नास्ति, अतो नास्ति परभवगो जीवः किन्तु ज्ञानमेव भूतेभ्यो दीपवदुत्पद्य तन्नाशे नश्यति। प्रयोगश्च–ज्ञानं नान्यभवगं भौतिकत्वात् दीपवत्, प्रत्यक्षादिभिश्चात्मा न ज्ञायत इति नास्ति। तथा 'स वै अयमात्मा ज्ञानमय' इत्यादिषु तूक्तोऽतस्तत्सन्देहः, परमस्त्येवात्मा योगिभिः प्रत्यक्षेणोपलभ्यमानत्वादणुवत्, अनुमानादपि अस्त्यात्मा शुद्धपदवाच्यत्वाद् घटवत्, आगमश्चेत्थं व्याख्येयः 'तेसिमो अत्थो' तेषां वेदपदानामयं अर्थः, विज्ञानं ज्ञानदर्शनरूपं ततोऽनन्यत्वादात्मा विज्ञानघनः स एवैतेभ्यो भूतेभ्य इति, भूतानि घटादीनि, तेभ्यो ज्ञेयत्वेनोपगतेभ्यः समुत्थाय 'घटोऽयं घटोऽयं' इत्यादिघटादिज्ञातृपर्यायेणोत्पद्य तान्येवान्यमनस्कत्वेनार्थान्तरोपयोगे सति ज्ञेयत्वेन विनश्यन्त्यनु पश्चात्तद्बोधपर्यायेण विनश्यति न प्रेत्यसंज्ञाऽस्ति प्राक्तनीज्ञानसंज्ञा नास्ति। कोऽर्थः घटोपयोगनिवृत्तौ पटोपयोगः स्यात्, पटोपयोगे घटोपयोगो नास्ति निवृत्तत्वात् ॥ ६०१ ॥ 'छिण्णं'

**छिण्णंमि संसयंमी, जिणेण जरमरणविप्पमुक्केणं। सो समणो पव्वइओ, पंचहिं सह खंडियसएहिं ॥**

खण्डिकाश्छात्राः, प्रथमः ॥ ६०२ ॥ ‘ तं पे ’

तं पवइयं सोउं, वित्तिओ आगच्छई अमरिसेणं। वच्चामि ण आणेमी, पराजिणित्ता ण तं समणं ॥६०३॥

‘ आभ ’ ‘ किंम ’

‘वजामि’ व्रजामि ‘ णं ’ वाक्यालङ्कारे तं पराजित्य बन्धुमानयामि ॥ ६०२ ॥

आभट्ठो य जिणेणं, जाइजरामरणविप्पमुक्केणं। नामेण य गोत्तेण य, सव्वण्णू सव्वदरिसीणं ॥ ६०४ ॥

किं मण्णि अत्थि कम्मं, उदाहु णत्थित्ति संसओ तुज्झ। वेयपयाण य अत्थं ण जाणसी तेसिमो अत्थो ॥

‘ पुरुष एवेदं ग्निं सर्वं यद्भूतं यच्च भाव्यं उतामृतत्वस्येशानो यदन्नेनातिरोहति यदेजति यन्नैजति यद्दूरे यदु अन्तिके यदन्तरस्य सर्वस्य यदु सर्वस्यास्य बाह्यत ’ इत्यादि त्वन्मतावयमर्थः—पुरुषः आत्मा, एवकारः कर्म्मप्रधानादिव्यवच्छित्त्यै, इदं सर्वं प्रत्यक्षं वर्त्तमानं सचेतनाचेतनं ग्निं वाक्यालंकारे, यद्भूतं यच्च भाव्यं उत समुच्चयेऽमृतत्वस्यामरणत्वस्येशान ईशः तथा यदन्नेनातिरोहति वर्द्धते, एजति पश्वादि नैजत्यद्र्यादि, उ अवधारणे। (अन्तिके समीपे यत्, तत्पुरुष एव इत्यर्थः) यदन्तर्मध्येऽस्य लोकस्य सर्वस्य यत्, उ पूर्त्त्यै, सर्वस्यास्य बाह्यतस्तत्सर्वं पुरुष एवेति। तदतिरिक्तस्य कर्म्मणः सत्ता दुःश्रद्धेया प्रमाणाऽसिद्धा च। तथाह्यमूर्त्तस्यात्मनो मूर्त्तेन कर्मणा कथं योगः? कथं वा तज्ञोपघातानुग्रहौ स्तः? लोके तन्त्रान्तरे च कर्म्मसत्तोक्ता ‘यतः पुण्यः पुण्येन पापः पापेन कर्म्मणा’ इत्यादि। तत्र वेदपदानामर्थं न वेत्सि। एतानि ह्यात्मस्तुतिपराणि जात्यादिमदछित्त्यै अद्वैतभावनापराणि न, न कर्म्मनिषेधाय, इत्थं वेदं ज्ञेयं। यतो नाकर्म्मणः कर्तृत्वं प्रवृत्तिहेत्वभावादेकान्तशुद्धत्वाद् व्योमवत्। तथाऽकर्म्मा नारभते

एकत्वादणुवत् न च देही ईशः खल्वारब्धा युज्यते तस्य स्वाङ्गारम्भेऽप्युक्तदोषाप्तेः न चान्यस्तद्देहाय व्याप्रियतेऽङ्गित्वानङ्गित्वाभ्यां तस्याप्यारम्भकत्वाघटना। न च शुद्धस्य देहकृतीच्छा युज्यते रागत्वाच्चतः कर्म्मसद्वितीय आत्मा कर्त्ता न च कर्म्म प्रत्यक्षाद्यतीतं मत्प्रत्यक्षत्वात् त्वत्संशयवत्तत्राप्यनुमानगोचरमस्ति। यथा देहान्तरपूर्वो बालदेहोऽक्षादिमत्वात् युवदेहवन्न च भवान्तरदेहपूर्वोऽसौ तस्यापान्तरालगताव भावाच्चतो यद्देहपूर्वो बालदेहः स कार्मणः, तथाऽमूर्त्तस्यात्मनो विशिष्टपरिणामवतः कर्म्मद्रव्ययोगोऽविरुद्ध एव। व्योम्न इवाभ्रादि योगः। तथाऽमूर्त्तस्यापि मूर्त्तेणोपघातानुग्रहौ स्तः मदिरादिना ज्ञानवत् ॥६०५॥ 'छिण्णं'

छिण्णंमि संसयंमी, जिणेण जरमरणविप्पमुक्केणं। सो समणो पव्वइओ, पंचहि सह खंडियसएहिं ॥
ते पव्वइए सोउं, तइओ आगच्छई जिणसगासं। वच्चामि ण वंदामी, वंदित्ता पज्जुवासामि ॥ ६०७ ॥
आभट्ठो य जिणेणं, जाइजरामरणविप्पमुक्केणं। णामेण य गोत्तेण य, सव्वण्णू सव्वदरिसीणं ॥ ६०८ ॥
तज्जीवतस्सरीरंति संसओ णवि य पुच्छसे किंचि। वेयपयाण य अत्थं, ण जाणसी तेसिमो अत्थो ६०९
छिण्णंमि संसयंमी, जिणेण जरमरणविप्पमुक्केणं। सो समणो पव्वइओ, पंचहिं सह खंडियसएहिं ॥६१०॥
ते पव्वइए सोउं, वियत्तो आगच्छई जिणसगासं। वच्चामि ण वंदामी, वंदित्ता पज्जुवासाामि ॥ ६११ ॥
आभट्ठो य जिणेणं, जाइजरामरणविप्पमुक्केणं। नामेण य गोत्तेण य, सव्वण्णू सव्वदरिसीणं ॥ ६१२ ॥

किं मण्णि पंचभूया,अत्थि नत्थित्ति संसओ तुज्झं । वेयपयाण य अत्थं,ण जाणसी तेसिमो अत्थो ६१३॥
छिण्णंमि संसयंमी,जिणेण जरमरणविप्पमुक्केणं । सो समणो पव्वईओ,पंचहिं सह खंडियसएहिं ६१४॥
ते पव्वइए सोउं, सुहमो आगच्छई जिणसगासं । वच्चामि ण वंदामी, वंदित्ता पज्जुवासामी ॥६१५॥
आभट्ठो य जिणेणं, जाइजरामरणविप्पमुक्केणं। नामेण य गोत्तेण य, सव्वण्णू सव्वदरिसीणं ॥६१६॥
किं मण्णि जारिसो इह, भवंमि सो तारिसो परभवेऽवि ? । वेयपयाण य अत्थं, ण जाणसी तेसिमो अत्थो ॥
छिण्णंमि संसयंमी, जिणेण जरमरणविप्पमुक्केणं । सो समणो पव्वइओ, पंचहिं सह खंडियसएहिं ॥६१८
ते पव्वइए सोउं, मंडिओ आगच्छइ जिणसगासं । वच्चामी ण वंदामि, वंदित्ता पज्जुवासामि ॥६१९॥
आभट्ठो य जिणेणं, जाइजरामरणविप्पमुक्केणं। नामेण य गोत्तेण य, सव्वण्णू सव्वदरिसीणं ॥ ६२०॥
किं मन्नि बंधमोक्खा, अत्थि ण अत्थित्ति संसओ तुज्झं। वेयपयाण य अत्थं, ण याणसी तेसिमो अत्थो ॥
छिण्णंमी संसयंमी, जिणेण जरमरणविप्पमुक्केणं। सो समणो पव्वइओ, अध्धुट्ठहिं सह खंडियसएहिं ॥
ते पव्वइए सोउं, मोरिओ आगच्छई जिणसगासं । वच्चामि ण वंदामी, वंदित्ता पज्जुवासामि ॥ ६२३॥

आभट्टो य जिणेणं, जाइजरामरणविप्पमुक्केणं। नामेण य गोत्तेण य, सव्वण्णू सव्वदरिसीणं ॥६२४॥
किं मन्नसि संति देवा, उयाहु न सन्तीति संसओ तुज्झं। वेयपयाण य अत्थं, न याणसी तेसिमो अत्थो॥
छिन्नंमि संसयंमी, जिणेण जरमरणविप्पमुक्केणं। सो समणो पव्वइओ, अध्धुट्ठहिं सह खंडियसएहिं ॥
ते पव्वइए सोउ, अकंपिओ आगच्छई जिणसगासं। वच्चामि ण वंदामी, वंदित्ता पज्जुवासामि ॥६२७॥
आभट्ठो य जिणेणं, जाइजरामरणविप्पमुक्केणं। नामेण य गोत्तेणय, सव्वण्णू सव्वदरिसीणं ॥ ६२८ ॥
किं मन्ने नेरइया, अत्थि न अत्थित्ति संसओ तुज्झं। वेयपयाण य अत्थं, ण याणसी तेसिमो अत्थो॥६२९॥
छिण्णंमि संसयंमी, जिणेण जरमरणविप्पमुक्केणं। सो समणो पव्वइओ, तिहि उ सह खंडियसएहिं ॥
ते पव्वइए सोउं, अयलभाया आगच्छइ जिणसगासं। वच्चामि ण वंदामी, वंदित्ता पज्जुवासामि ॥६३१॥
आभट्ठो य जिणेणं, जाइजरामरणविप्पमुक्केणं। नामेण य गोत्तेण य, सव्वण्णू सव्वदरिसीणं ॥६३२॥
किं मन्नि पुण्णपावं, अत्थि न अत्थित्ति संसओ तुज्झं। वेयपयाण य अत्थं, ण याणसी तेसिमो अत्थो॥
छिण्णंमी संसयंमी, जिणेण जरमरणविप्पमुक्केण। सो समणो पव्वइओ, तिहि उ सह खंडियसएहिं ६३४

ते पव्वइए सोउं, मेयज्जो आगच्छई जिणसगासं । वच्चामि ण वंदामी, वंदित्ता पज्जुवासामि ॥६३५॥
आभट्ठो य जिणेणं, जाइजरामरणविप्पमुक्केणं । नामेण य गोत्तेण य, सव्वण्णू सव्वदरिसीणं ॥६३६॥
किं मण्णे परलोगो, अत्थि णत्थित्ति संसओ तुज्झं । वेयपयाण य अत्थं, ण याणसी तेसिमो अत्थो ॥
छिण्णंमि संसयंमी, जिणेण जरमरणविप्पमुक्केणं । सो समणो पव्वइओ, तिहि उ सह खंडियसएहिं ॥
ते पव्वइए सोउं, पभासो आगच्छई जिणसगासं । वच्चामि ण वंदामी, वंदित्ता पज्जुवासामि ॥६३९॥
आभट्ठो य जिणेणं, जाइजरामरणविप्पमुक्केणं । नामेण य गोत्तेण य, सव्वण्णू सव्वदरिसीणं॥६४०॥
किं मण्णे निव्वाणं, अत्थि णत्थित्ति संसओ तुज्झं । वेयपयाण य अत्थं, ण याणसि तेसिमो अत्थो ॥
छिण्णंमि संसयंमी, जिणेण जरमरणविप्पमुक्केणं । सो समणो पव्वइओ, तिहि उ सह खंडियसएहिं ॥

अग्रेतनगाथाः ३७ स्पष्टाः । ‘ तज्जीवतस्सरीरं ’ति तत्रायं संशयः, स एव जीवस्तदेव च शरीरमिति । तथा ‘किं मण्णि जारिसो इहे’ ति किं मन्यसे यो मनुष्यादिर्यादृश इहभवे पुंस्त्रीक्लीबरूपः परभवेऽपि स तादृश एव स्यात् । अथ वेदपदानि तद्दुर्गपदार्थश्च लिख्यते, आक्षेपपरिहारास्तु महाभाष्यबृहद्वृत्त्यादिभ्यो ज्ञेयाः । तत्र तज्जीवतच्छरीरसंशये ‘वेदपदे’ ‘विज्ञानघन० न प्रेत्यसंज्ञास्ति’ न देहात्मनोर्भेदसंज्ञास्ति भूतधर्मत्वाद् ज्ञानस्य, शेषोऽर्थः प्राग्वत् । तथा प्रभोर्व्याख्यापि प्राग्वत्, तथा

'सत्येन लभ्यस्तपसा ह्येष ब्रह्मचर्येण नित्यं ज्योतिर्मयो हि यं पश्यति धीरा यतयः संयतात्मान' इति जीवस्य देहाद्भिन्नताज्ञापनापराणि, अत्र ज्ञानस्य भूतेष्वसत्त्वात्तेषु सत्स्वपि विनाशदर्शनाच्च भूतधर्मत्वाऽसिद्धौ, आत्मनि च ज्ञानवत्त्वेनात्मधर्मवत्त्वे सिद्धे सिद्ध एवात्मा देहादन्यः, जीवादन्यो बाह्यदेहः । अयुतत्वेन सम्बद्धत्वाद्गवाक्षनृवत् ३। 'स्वप्नोपमं वै सकलं इत्येष ब्रह्मविधिरञ्जसा विज्ञेयः' एतत्पदं त्वन्मतौ भूतनास्तित्वपरं किन्तु नैवं, इदं हि संयोगानित्यत्वज्ञप्त्यर्थमेव ज्ञेयं न तु पञ्चभूतनास्तित्वार्थं, तथा 'पृथिवी देवता आपो वै देवते'त्यादिवाक्यानि सत्तापराण्येव ज्ञेयानि। सन्ति पृथिव्यादीनि सम्यग् ज्ञायमानत्वात्त्वन्मतिवत् ४ ।' पुरुषो वै पुरुषत्वमश्नुते, पशवः पशुत्वं' इदं वेदपदं प्रायिकोक्त्या ज्ञेयं न तु नियमात्, 'शृगालो वै जायते यः सपुरीषो दह्यते' एतद्वेदपदं परभववैसदृश्यज्ञापकं। नैकरूप एवात्मा भवान्तरे परवशत्वात् घटाकाशादिवत् ।५। 'स एष विगुणो विभुर्न बध्यते संसरति वा, न मुच्यते मोचयति वा, न वा एष बाह्यमभ्यन्तरं वा वेद'। तवायमाशयः—विगुणः सत्त्वादिगुणरहितः न वा एष आत्मा बाह्यं स्वतो भिन्नं महदहङ्कारादि अभ्यन्तरस्वरूपमेव वेद वेत्ति प्रकृतिधर्मत्वात् ज्ञानस्य प्रकृतेश्चाचेतनत्वाद् बन्धमोक्षाघटना, शेषं स्पष्टं। तत्र नैतद्बन्धमोक्षाभाववाचकं किन्तु सिद्धस्वरूपवाचि। तत्र विगताश्छाद्मस्थिका ज्ञानादयो गुणा यस्य स विगुण बाह्यं स्रक्चन्दनादि, आभ्यन्तरमाभिमानिकादि सुखमनुभवात्मना वेत्ति। तथा 'नह वै सशरीरस्य प्रियाप्रिययोरपहतिरस्ति' अशरीरं वा वसन्तं प्रियाप्रिये न स्पृशतः, नह वै नैववचो निश्चये, अशरीरं सन्तं, एतद्बन्धमोक्षस्थापकं, भविकजीवः कर्मणा बध्यते रागादिमत्त्वान्यथानुपपत्तेः व्यतिरेके सिद्धवत्, तथा जीवात्कर्म वियुज्यते मूर्त्तत्वे सत्यविभागसम्बद्धत्वात् स्वर्णमलवत् ६ । 'स एष यज्ञायुधी यजमानोऽञ्जसा स्वर्गं

अपाम् सोमं, अमृता अभूम, अगमन् ज्योतिरविदाम
गच्छति '। यज्ञ एवायुधं, तद्विद्यते यस्य स तथाञ्जसा न्यायेन, तथा ' अपाम् सोमं, अमृता अभूम, अगमन् ज्योतिरविदाम देवान् किं नूनमस्मांस्तृणवदरातिः, किं धूर्तिरमृतमर्त्त्यस्य, अपाम–पीतवन्तः, सोमं–लतारसं, अमृता–अमरणधर्म्माणः, अभूम–भूताः स्म,। अगमन्–गताः, ज्योतिः–स्वर्गं। अविदाम देवान्–देवत्वं प्राप्ताः स्मः। किं नूनमस्मान् तृणवत् करिष्यति, अरातिर्व्याधिः। किं प्रश्ने, धूर्त्तिर्जरा अमृतमर्त्त्यस्यामृतत्वं प्राप्तस्य मर्त्त्यस्य, कोऽर्थः? अमरणधर्मिणो मनुष्यस्य किं कुर्युर्व्याधयः? एतदेवासत्त्ववाचि। अमूनि देवास्तित्ववाचीनि। तथा ' को जानाति? मायोपमान् गीर्वाणान् इन्द्रयमवरुणकुबेरादीन् '। अपि तु न वेत्तीत्यर्थः। इन्द्रादीनामप्यृद्धिर्मायोपमेति को वेत्ति? अत्राहेवाह–अस्यार्थोऽयं–इन्द्रादीन् मायोपमान् को जानाति? ' नारको वै एप जायते यः शुद्रान्नमश्नाति ' एतन्नारकास्तित्ववाचि, 'न ह वै प्रेत्य नरके नारकाः सन्ति' इति नास्तित्ववाचि च। ततस्ते संशयः, परं अस्यार्थोऽयं–न खलु प्रेत्य परलोके मेर्वादिवच्छाश्वताः केऽपि नारकाः सन्ति। किन्तु इहांहःकर्त्ता नारकः स्यात्।८। अस्ति कर्मणां गाढोऽशुभानुभागो विपाकत्वात् विषवृक्षवत्। यश्चात्यन्तोऽशुभोऽनुभागः स भूलोकवासिनारकाणामेव, औदारिकदेहेन महावेदनानुभवाभावस्याऽऽगोपज्ञातत्वात्। नवमगणभृत्सन्देहवेदपदादि द्वितीयगणभृद्वत्।९। पुण्यपापे स्त एव शुभाशुभरसत्वात् फलवत्। दशमश्चाद्यगणभृद्वत्। अस्ति परलोक इहलोकस्यान्यथानुपपत्तेः तत्पूर्वजवत्।१०। ' जरामर्यं वा एतत्सर्वं यदग्निहोत्रं ' तत्रार्थोऽयं यदेतदग्निहोत्रं तत्सर्वं जरामर्यमेव यावज्जीवं कार्यमिति' अग्निहोत्रक्रिया च भूतवधहेतुत्वात् शबलरूपा, सा च स्वर्गफलैव स्यात् न मोक्षफला, यावज्जीवमिति चोक्ते कालान्तरं नास्ति यस्मिन् मोक्षहेतुक्रियारम्भः, ततः साधनाभावान्नास्ति मोक्षः, परमेत-

दर्थोऽयं–यदेतदग्निहोत्रं तद्यावज्जीवं सर्वमपि कालं–वाशब्दान्मुक्त्यर्थिभिर्मोक्षहेतुभूतमप्यनुष्ठानं विधेयं। तथा 'द्वे ब्रह्मणी वेदितव्ये परमपरं च, तत्र परं सत्यं ज्ञानमनन्तं ब्रह्म' इदं निर्वाणस्थापकं। तथा मुक्त्यर्थिना तु तत्क्रिया कार्यैव तत्फलत्वात् कृषिवत्। ११। ६०६–४२। अत्र क्षेपकगाथाः, आद्यगणधरे

मुत्तूण ममं लोगो, किं वच्चइ एस तस्स पासाइं। अन्नो वि जाणइ, मए ठियंमि कत्तोच्चयं एयं ॥ १ ॥

'ममं' मां मुक्त्वै लोकः किं तस्य पादमूलं पार्श्वं व्रजति ?। मयि वादिनि स्थिते सत्यन्योऽपि किं विजानाति ?। एतत् कौतस्त्यं कुतो जातमसम्भवतीत्यर्थः॥ १ ॥

वच्चिज्ज व मुक्खजणो, देवा कहऽणेण विम्हयं नीया। वदंति संथुणंति य, जेणं सव्वण्णुबुद्धीए ॥२॥

व्रजेद्वा मूर्खजनः, देवाः कथमनेन विस्मयं नीताः ? ॥ २ ॥

अहवा जारिसओ सो णाणी, तारिसया सुरा तेऽवि। अणुसरिसो संजोगो, गामनडाणं व मुक्खाणं ॥ ३ ॥

अथवा यादृशश्चैव स ज्ञानी तादृशास्तेऽपि सुराः। यथा ग्रामनटानां मूर्खाणां चानुसदृशोऽनुरूपः संयोगस्तथाऽत्राऽपि ॥३॥

काउं हयप्पयावं, पुरतो देवाण दाणवाणं च। वाएण विविहत्थाण लहु जाणावेमि मं गंतुं ॥ ४ ॥

देवदानवानां पुरतस्तं हतप्रतापं कृत्वा अहं तस्य सर्वज्ञवादं निःशेषं नाशयिष्ये ॥ ४ ॥

इय वोत्तूणं पत्तो, दट्ठूण तिलोयपरिवुडं वीरं। चउतीसतिसयपत्तं, स संकिओऽविय ठिओ पुरओ ॥५॥

इत्युक्त्वा समवसृतिं प्राप्तस्त्रैलोक्यजनपरिवृतं वीरं दृष्ट्वा सशङ्कितः स शङ्कीभूतोऽपि पुरतः स्थितः ॥ ५ ॥

हे इंदभूति ! गोतम ! सागयमुत्ते जिणेण चिंतेइ। नामं पि मे वियाणइ, अहवा को मं न याणइ ?॥६॥

स्वागतमित्युक्त को 'मं' मां ॥ ६ ॥

जइ वा हिययगयं मे संसयमुण्णेज्ज जइ व छिन्नेज्जा। तो होज्ज विम्हओ मे, इय चिंतेंतो पुणो भणिओ ॥

संशयं मन्येत जानीत ॥ ७ ॥ द्वितीयगणधरः

छलिओ छलाइणा सो, मण्णे माइंदजालिओ वा वि। को जाणइ कहवत्तं, एत्ताहे वट्टमाणी से ॥८॥

अहं एवं मन्ये स भ्राता वलजातिनिग्रहस्थानादिना छलितः, मायेन्द्रजालिको वाऽप्यसौ देवार्यः, को जानाति तयोर्वादस्थानं ? कथं वृत्तं निष्पन्नं ? इदानीं मयि तत्र गते तस्यैन्द्रजालिकस्य 'वट्टमाणी' वार्ता यादृशी भविष्यति तादृशीं सर्वोऽपि जनो द्रक्ष्यति।

सो पक्खंतरमेगं पि, जाइ जइ मे तओ मि तस्से व। सीसत्तं होज्ज गओ, वोत्तुं पत्तो जिणसगासे ॥ ९ ॥

यदि स देवार्यो मेऽग्रे पक्षान्तरं प्रतिज्ञान्तरं एकमपि याति निर्वहति, ततोऽस्मि अहं तस्यैव शिष्यत्वं गतो भवेय-

मित्युक्त्वा ॥ ९ ॥

हे अग्गिभूइ! गोयम ! सागयमुत्ते जिणेण चिंतेइ । नामंपि मे वियाणइ, अहवा को मं न याणइ ॥१०॥

जइ वा हियययगयं मे, संसयमुण्णेज्ज जइ व छिन्नेज्जा। तो होज्ज विम्हओ मे इय चिंतेंतो पुणो भणिओ ॥

सीसत्तेणोवगया संपयमिंदग्गिभूइणो जस्स । तिहुयणकयप्पणामो, स महाभागोऽभिगमणिज्जो ॥१२॥

सम्प्रति यस्येन्द्राग्निभूती शिष्यत्वेनोपगतौ स त्रिभुवनेन कृतप्रणामो महाभाग्यो अभिगमनीयः सेव्यः ॥ १२ ॥

तदभिगमण-वंदणो-वासणाइणा होज्ज पूयपावोऽहं । वोच्छिण्णसंसओ वा मोत्तुं पत्तो जिणसगासे॥१३॥

पूतपापो गतपापः ॥ १३ ॥ एवं सर्वगाथाः ६४ । गणधरवादः सम्पूर्णः । 'खेत्ते'

खेत्ते काले जम्मे, गोत्तमगारछउमत्थपरियाए। केवलिय आउ आगम, परिणेव्वाणे तवे चेव ॥६४३॥

गणभृद्वाच्यद्वाराणि । क्षेत्रं जन्मग्रामः १ । कालो जन्मर्क्षचन्द्रोपलक्षितः २ जन्मेति पितरौ प्राकृतत्वात् प्रथमैकवचनांतेष्वेकारः ३ गोत्रं ४ 'अगारे'ति अगारवासो गृहवासः ५ छद्म ६ केवलिपर्यायः ७ आयुः ८ आगमः शास्त्रं ९ परिनिर्वाणं मुक्तिः, तपो मुक्तिकाले ॥ ६४३ ॥

मगहा गोब्बरगामे, जाया तिण्णेव गोयमसगोत्ता। कोल्लागसन्निवेसे, जाओ विअत्तो सुहम्मो य ॥६४४॥

मगधदेशे गोर्वरगामे त्रय आद्याः, सह गोत्रं येषां ते सगोत्राः गौतमगोत्रेण सगोत्राः गौतमसगोत्राः। कोल्लागसंनिवेशे व्यक्तः सुधर्म्मा च जातः ॥ ६४४ ॥ 'मोरी'

मोरीयसन्निवेसे, दो भायरो मंडमोरिया जाया। अयलो य कोसलाए, महिलाए अकंपिओ जाओ ॥६४५॥

मौर्यसंनिवेशे द्वौ भ्रातरौ मण्डितमौर्यपुत्रौ ॥ ६४५ ॥ 'तुंगी'

तुंगीयसन्निवेसे, मेयज्जो वच्छभूमिए जाओ। भगवंपि य प्पभासो, रायगिहे गणहरो जाओ ॥६४६॥

तुंगिकाम० वत्सभूम्यां कौशाम्बीदेशे। गतं क्षेत्रद्वारं ॥ ६४६ ॥ 'जेट्ठा'

जेट्ठाकित्तिय साई, सवणो हत्थुत्तरा महाओ य। रोहिणि उत्तरसाढा, मिगसिर तह अस्सिणी पूसो६४७

ज्येष्ठा १ कृत्तिका २ स्वातिः ३ श्रवणः ४ हस्तोत्तरा उत्तराफाल्गुन्यः ५ मघा ६ रोहिणी ७ उत्तराषाढा ८ मृगशिरः ९ अश्विनी १० पुष्यः ११ कालद्वारं ॥ ६४७ ॥ 'वसु'

वसुभूई धणमित्ते, धम्मिल धणदेव मोरिए चेव। देवे वसू य दत्ते, बले य पियरो गणहराणं ॥६४८॥

वसुभूतिः आद्यत्रयाणां पिता ॥ ६४८ ॥ 'पुह'

पुहवी य वारुणी, भद्दिला य विजयदेवा तहा जयंती य। णंदा य वरुणदेवा, अइभद्दा य मायरो॥६४९॥

गणधर-क्षेत्रकाल-जन्म-द्वाराणि ॥

पृथ्वी त्रयाणां माता । अत्र विजयदेवाया आद्यः सुतो मंडितः, धनदेवे मृते मौर्येण धृतायास्तु द्वितीयो मौर्यपुत्रः तद्देशे तु नैवं निन्दा ॥ ६४९ ॥ जन्मद्वार ३ । 'तिण्णि'

**तिण्णि य गोयमगोत्ता, भारद्दाअग्गिवेसवासिट्ठा । कासवगोयमहारिय, कोडिण्णदुगं च गोत्ताइं ॥६५०॥**

भारद्वाजआग्निवैश्यायनवाशिष्टानि, काश्यपं, गौतमं, हारितं, कौण्डिन्यगोत्रद्विकं च ॥ ६५० ॥ द्वार ४ । 'पण्णा' 'छत्ती'

**पण्णा छायालीसा, बायाला होइ पण्ण पण्णा य । तेवण्ण पंचसट्ठी, अडयालीसा य छायाला ॥६५१॥**

**छत्तीसा सोलसगं, अगारवासो भवे गणहराणं । छउमत्थयपरियागं, अहक्कमं कित्तइस्सामि ॥६५२॥**

५० । ४६ । ४२ । ५० । ५० । ५३ । ६५ । ४८ । ४६ । ३६ । १६ । वर्षाणि अगारे वासो गृहवासः ॥ ६५१–५२ ॥ द्वार ५ । 'तीसा'

**तीसा बारस दसगं, बारस बायाल चोद्दसदुगं च । णवगं बारस दस, अट्ठगं च छउमत्थपरियाओ ॥६५३॥**

३० । १२ । १० । १२ । ४२ । 'चोद्दसदुगं' द्वौ वारौ चतुर्दश १४ । १४ । ९ । १२ । १० । ८ । वर्षाणि ॥ ६५३ ॥ द्वार ६ । 'छउ'

**छउमत्थपरीयागं, अगारवासं च वोगसित्ता णं । सव्वाउगस्स सेसं, जिणपरियागं वियाणाहिं ॥६५४॥**

छद्मस्थपर्यायं अगारवासं च व्युपकृष्य निःकाष्य सर्वायुषः शेषं जिनपर्यायं केवलिपर्यायं विजानीहि ॥६५४॥ यथा 'बार'

बारस सोलस अट्ठारसेव, अट्ठारसेव अट्ठेव। सोलस सोल तहेकवीस, चोद्द सोले य सोले य ॥६५५॥

॥ ६५५ ॥ द्वार ७ । 'बाण'

बाणउई चउहत्तरि, सत्तरि तत्तो भवे असीई य। एगं च सयं तत्तो, तेसीई पंचणउई य ॥ ६५६ ॥

अत्र मंडिको ज्येष्ठो मौर्यस्तु लघुः, गृहवासस्तु ज्येष्ठस्य ५३ लघोः ६५ वर्षाण्युक्तं, आयुर्ज्येष्ठस्य ८३ लघोस्तु ९५ तत-त्त्वं ज्ञानिगम्यं, किन्तु गृहवासायुर्गाथयोः प्राकृतत्वाद् व्यत्ययव्याख्यायां सुस्थं स्यादिति केचित्। तथा मध्यमवृत्तौ 'पण्णा छायालीसा' इति गाथायां 'पणसट्ठी तेवन्ना,' 'बाणउई चउहत्तरि' इति गाथायां 'पणनउई चेव तेसीई' इति पाठो दृश्यते तथा सिद्धमेव ॥ ६५६ ॥ 'अट्ठ' 'सव्वे'

अट्ठत्तरिं च वासा, तत्तो बावत्तरिं च वासाइं। बावट्ठी चत्ता खलु, सव्वगणहराउयं एयं ॥ ६५७ ॥

सव्वे य माहणा जच्चा, सव्वे अज्झावया विऊ। सव्वे दुवालसंगी य, सव्वे चोद्दसपुव्विणो ॥ ६५८ ॥

सर्वे ब्राह्मणा जात्या अध्यापकाः, 'विऊ' चतुर्दशविद्याविदः ॥ ६५८ ॥ आगमद्वा० ९। 'परि'

परिणिव्वुया गणहरा, जीवंते णायए णव जणा उ। इंदभूई सुहम्मो य, रायगिहे निव्वुए वीरे ॥६५९॥

गणधरकेवलिपर्यायादिद्वाराणि ॥

ज्ञातजे श्रीवीरे जीवति नव जना गणधराः परिनिर्वृताः सिद्धाः ॥ ६५९ ॥ द्वार १० । ' मासं '

**मासं पाओवगया, सव्वेऽवि य सव्वलद्धिसंपण्णा । वज्जरिसहसंघयणा, समचउरंसा य संठाणा ॥६६०॥**

मासं यावत्पादपोपगमं गताः संस्थाने संस्थानविषये ॥ ६६० ॥ द्वार ११ । एवं सामायिकसूत्रार्थप्रणेत्रर्हद्गणभृन्निर्गम उक्तः । एवं च ' उद्देसे निद्देसे निग्गमे ' इति गाथायां जीवद्रव्यनिर्गमद्वारं व्याख्यातं । अथ ' खित्तकालपुरिसे य ' इत्यादिद्वाराणां व्याख्या । तत्र क्रमागतं सामायिकनिर्गमक्षेत्रद्वारमल्पत्वादुल्लङ्घ्यौकादशधा तन्निर्गमकालद्वारमाह । तत्र नामस्थापनाकालौ सुगमत्वान्नोक्तौ ' दव्वे '

**दव्वे अद्ध अहाउय, उवक्कमे देसकालकाले य । तह य पमाणे वण्णे, भावे पगयं तु भावेणं ॥६६१॥**

द्रव्येऽद्धाया यथाऽऽयुषि उपक्रमे देशकाले काले च तथैव प्रमाणे वर्णे भावे च कालः स्यात् । तत्र भावेन भावकालेन क्षायिकभावलक्षणेन प्रकृतमधिकारः । यतः क्षायिके भावेऽर्हता सामायिकं प्रकाशितं । तथा प्रमाणकालेन च यत आद्यपौरुपीरूपे प्रमाणकालेऽर्हता सामायिकमुपदिष्टं । द्वारगाथा ॥ ६६१ ॥ क्रमेणाह ' चेय '

**चेयणमचेयणस्स व दव्वस्स ठिइ उ जा चउवियप्पा । सा होइ दव्वकालो, अहवा दवियं तु तं चेव ॥६६२**

ज्ञभव्यशरीरातिरिक्तो द्रव्यकालः चेतनं द्रव्यं जीवः अचेतनं चाजीवः तयोः स्थितिश्चतुर्विकल्पा अनन्तरगाथायां वक्ष्यते । स द्रव्यकालः, अथवा तद्द्रव्यमेव कालो द्रव्यकालः कालाख्यं द्रव्यमित्यर्थः ॥ ६६२ ॥ ' गइ '

**गइ सिद्धा भवियाया, अभविय पोग्गल अणागयद्धा य । तीयद्ध तिन्नि काया, जीवाजीवट्ठिई चउहा॥६६३**

जीवाजीवयोः प्रत्येकं स्थितिः चतुर्द्धा यथा 'गइ' त्ति । देवादिगतिषु जीवा साद्यन्ताः १ सिद्धाः साद्यऽनन्ताः २ भव्यात्मानो भव्यत्वेन केऽप्यनादिमान्ताः ३ अभव्या अनाद्यनन्ताः ४ इति जीवस्थितेः ४ भङ्गी । 'पोग्गले' ति पुद्गला अणवः पुद्गलत्वेन साद्यन्ताः १ अनागतोऽद्धा कालः साद्यनन्तः २ अतीताऽद्धा अनादिसान्तः ३ त्रयो धर्म्माधर्म्माकाशास्तिकायाः अनाद्यनन्ताः ४ अजीवस्थितेः ४ भङ्गी ॥ ६६३ ॥ गतो द्रव्यकालः द्वार १ । अद्धाकालमाह 'सम'

अद्धाकालद्वारम् ॥

**समयावलिय मुहुत्ता, दिवसमहोरत्त पक्ख मासा य । संवच्छर युग पलिया, सागर ओसप्पि परियट्टा॥६६४**

समयः परमसूक्ष्मकालः १, जघन्ययुक्तासङ्ख्यातसमयमाना आवलिका २, षट्पञ्चाशदधिकद्विशत्यावलिकाभिरेकः क्षुल्लकभवः ३, सार्द्धसप्तदशक्षुल्लकभवैरेक उच्छ्वासः ४, शतैः त्रिसप्तत्यधिकसप्तत्रिंशता उच्छ्वासैर्मुहूर्त्तो द्विघटिकारूपः ५, त्रिंशता घटिकाभिर्दिवसः ६, त्रिंशता मुहूर्त्तैरहोरात्रं ७, पञ्चदशाहोरात्रैः पक्षः ८, त्रिंशताहोरात्रैर्मासः ९, द्वाभ्यां ऋतुः १०, द्वादशमासैर्वर्षं ११, पञ्चवर्षात्मकं युगं १२, असङ्ख्ययुगात्मकं पल्यं १३, तत्त्रिधा उद्धाराद्धाक्षेत्रभेदात्, एकैकं च बादरसूक्ष्मभेदाद् द्विधा, तत्रोत्सेधाङ्गुलनिष्पन्नवृत्तयोजनोच्चपल्यः एकाहिकादिसप्ताहिकान्तानां देवकुरुयुग्मिनां वालाग्राणां निचितं भृतः तस्मात्समये समये एकैकस्मिन् वालाग्रेऽपहृते यः कालः सङ्ख्येयः समयरूपः स बादरोद्धारपल्यः, तान्येव रोमाणि असङ्ख्यखण्डान्यदृश्यानि बादरपृथ्व्येकजीवदेहमानानि कृत्वा भृतपल्यः समये समये एकैकखण्डापहारे सङ्ख्येया वर्षकोट्यः सूक्ष्मोद्धार-

पल्यः, दशपल्यकोटीकोटीभिः सागरोपमं। अर्द्धतृतीयसागराणां यावन्तः समयास्तावन्तो द्वीपाब्धयः स्युः। तथा वर्षशतैः २ बादरखण्डेऽपहृते बादरद्धापल्यः सङ्ख्येया वर्षकोट्यः। सूक्ष्मखण्डे वर्षशतेऽपहृते सूक्ष्मोऽद्धापल्योऽसङ्ख्या वर्षकोट्यः एतद्दशकोटाकोटीभिः सागरोपमं १४। एतद्दशकोटाकोटीभिः उत्सर्पिण्यवसर्पिण्यः स्युः। सर्वात्मनां कर्मस्थितिभवस्थितयोऽनेन पल्येन मीयन्ते। तस्मिन् पल्ये बादरे खण्डस्पृष्टनभःप्रदेशेषु कृष्टेषु बादरं क्षेत्रपल्यं, सूक्ष्मखण्डस्पृष्टास्पृष्टाकाशप्रदेशेषु कृष्टेषु सूक्ष्मं। असङ्ख्या उत्सर्पिण्यः एतत्सागरैः षट्जीवानां मानं क्रियते। दशकोटाकोटीसागरैरुत्सर्पिण्यवसर्पिणी च १५ विंशतिकोटाकोटिसागरैः कालचक्रं १६ अनन्तकालचक्रैः पुद्गलपरावर्त्तो १७ ज्ञेयः। स नमस्कारे व्याख्यास्यते ॥ ६६४ ॥ गतं अद्धाकालद्वार २। अथ यथायुःकालद्वार ३। 'नेर'

**नेरइयतिरियमणुयादेवाण अहाउयं तु जं जेण। निव्वत्तियमण्णभवे, पालेंति अहाउकालो सो ॥६६५॥**

नारकिर्यङ्मनुजदेवानां, आकारः प्राकृतत्वात्, यदायुर्येनात्मना यथा रौद्रध्यानादिनाऽन्यभवे निवर्त्तितं कृतं तद्यथायुरुच्यते तच्च ते यथा पालयन्ति स यथायुःकालः ॥ ६६५ ॥ द्वार० ३। 'दुवि'

**दुविहोवक्कमकालो, सामायारी अहाउयं चेव। सामायारी तिविहा, ओहे दसहा पयविभागे ॥६६६॥**

दुरस्थस्यासन्नानयनमुपक्रमः कालकालवतोरभेदोपचारात् उपक्रमश्चासौ कालश्चेति वाक्यं। स द्विविधः पदैकदेशे पदसमुदायोपचारात् सामाचार्युपक्रमकालो यथायुष्कोपक्रमकालश्च। तत्र सामाचार्या उपक्रमः पूर्वादिश्रुतादत्रानयनं बहुकालीन-

शिष्यपाठार्हाया अल्पकालीनशिष्यपाठार्हत्वं वा। यतः 'एगुणवीसगस्स उ दिट्ठीवाउ' त्ति वचनादीक्षाया अन्वेकोनविंशतिवर्षैः

पाठार्हायाः सम्प्रति दीक्षाहे एव पाठार्हत्वात् सामाचार्याः पाठनादिकालस्योपक्रमणं सामाचार्युपक्रमकालः यथायुष उपक्रमो

दीर्घकालभोग्यस्याल्पकालेन क्षपणं, अत्रापि कालस्योपक्रमणादुपक्रमकालः। सामाचारी त्रिधा, ओघः सामान्यं तद्रूपा सामा-

चारी ओघनिर्युक्तिः, सा नवमपूर्वे तृतीयाचारवस्तुनि विंशतिप्राभृते ओघाख्यप्राभृतप्राभृतान्निर्यूढा। १। तस्या आद्या गाथा

**अरहंते वंदित्ता चउदसपूव्वी तहेव दसपूव्वी। एक्कारसंगसुत्तत्थधारए सव्वसाहू य ॥ १ ॥**

अर्हदादीन्नत्वा ओघनिर्युक्तिं वक्ष्ये इति सम्बन्धः। इह श्रुतकेवलिनाऽपि यद्दशपूर्वादिनतिः कृता तत्सर्वसाधुभ्यो नम-

स्कारगय सर्वर्षीणां गर्वहान्यै च १ दशधा सामाचारी वक्ष्यमाणा उत्तराध्ययनषड्विंशतितमाऽध्ययनान्निर्यूढा, पदविभाग-

सामाचारी छेदग्रन्थरूपा नवमपूर्वात् ॥ ६६६ ॥ इति गणधरावलिका सम्पूर्णा। सामाचार्युपक्रमकालद्वारमध्ये एव दशधा

सामाचारीमाह। 'इच्छा' 'उव'

**इच्छा[1] मिच्छा[2] तहाकारो[3], आवासिया[4] य निसीहिया[5]। आपुच्छणा[6] य पडिपुच्छा[7], छंदणा[8] य निमंतणा[9]॥६६७॥**

**उवसंपया[10] य काले, सामायारी भवे दसहा। एएसिं तु पयाणं, पत्तेय परूवणं वोच्छं ॥ ६६८ ॥**

'इच्छे'ति इच्छाकारः १ 'मिच्छे'ति मिथ्यादुःकृतं २ 'तहाकारे'ति तथेति ३ आवश्यिकी ४ नैषेधिकी ५ आपृच्छना ६ प्रतिपृच्छा ७ छंदना ८ निमन्त्रणा ९ उपसम्पच्च १०। 'काले'ति निज २ प्रस्तावे कालविषया सामाचारी दशधा भवेत्।

दशधा सामाचारी ॥

एषां पदानां प्रत्येकं प्ररूपणां विचारणां वक्ष्ये ॥ ६६७–६८ ॥ क्रमेणाह ' जइ '

**जइ अब्भत्थेज्ज परं, कारणजाए करेज्ज से कोई। तत्थवि इच्छाकारो, न कप्पई बलाभिओगो उ ॥६६९॥**

यदि परमन्यं कारणजाते उत्पन्ने सत्यभ्यर्थयेत्तथा कोऽप्यन्यः कारणजाते तस्य कार्यं कुर्यात् । तत्रापिशब्दात् ' अहवा सयं ' इत्यादिगाथाद्वयोक्तविषयेऽपि तेनान्येन वा इच्छाकारः कार्यः ॥ ६६९ ॥ उक्तार्थस्य स्पष्टनार्थं गाथा ' अब्भु '

**अब्भत्थिज्जइ ! नज्जइ, अब्भत्थेउं ण वट्टइ परो उ। अणिगूहियबलविरिएण, साहुणा ताव होयव्वं॥६७०॥**

'अब्भत्थिज्जइ' इत्यत्र यदिशब्दोऽभ्युपगमे तस्मिन् सत्येवं ज्ञायते मुख्यतः परोऽभ्यर्थयितुं न वर्त्तते न युज्यते स्वयं दासास्तपोधना इति रूढेः । तावत्साधुना निगृहितं अगोपितं बलं शारीरं वीर्यमान्तरः पराक्रमो यस्य ईदृशेन ॥ ६७० ॥ ' जइ '

**जइ हुज्ज तस्स अणलो, कज्जस्स वियाणती ण वा वाणं। गिलाणाइहिं वा हुज्ज, वियावडो कारणेहिं सो६७१**

तस्य कार्यस्य अनलो असमर्थः स्यात्तद्वा न जानाति। ' वाणं ' पादपूर्त्तौ। ग्लानादिभिर्वा कारणैर्व्यापृतः ॥ ६७१ ॥ ' राइ '

**राइणियं वज्जेत्ता, इच्छाकारं करेइ सेसाणं। एयं मज्झं कज्जं, तुब्भे उ करेह इच्छाए ॥ ६७२ ॥**

स्वतो ज्ञानादिरत्नैरधिकं रत्नाधिकपर्यायादिज्येष्ठं वर्जयित्वा शेषाणां इच्छाकारं कुर्यात् । कथमित्याह। ' एयं उ ' पूरणे। हे इच्छाकारिणः ! यूयं एतन्मे कार्यं इच्छया कुरुत। अत्र रत्नाधिकस्येच्छाकारो वैयावृत्त्यादिकार्यविधापने, एवं निषेद्धो ज्ञेयो नत्वादेशयाचनादौ, यतोऽत्रैवाऽग्रे वक्ष्यते ' इच्छा पउंजियव्वा सेहे रा ' इति ॥ ६७२ ॥ ' अह '

अहवाऽवि विणासेंतं, अब्भत्थेंतं च अण्ण दट्ठूणं। अण्णो कोइ भणेज्जा, तं साहुं णिज्जरट्ठीओ ॥६७३॥

अथवा अन्यं साधुं कार्यं विनाशयन्तं अन्यं साधुं वा स्वार्थायाभ्यर्थयन्तं दृष्ट्वाऽन्यः कोऽपि साधुस्तं साधुं निर्जरार्थी भणति ॥ ६७३ ॥ 'अह'

अहयं तुब्भं एयं, करेमि कज्जं तु इच्छकारेणं। तत्थऽवि सो इच्छं, से करेइ मज्जायमूलियं ॥ ६७४ ॥

अहं युष्माकं एतत्कार्यं करोमि इच्छकारेणेति, यदि च इच्छा स्यात्। तत्रापि स कारयिता 'से' तस्य कर्तुर्मर्यादारूपमूलाय हितं मर्यादामूलीयं इच्छाकारं कुर्यात् ॥ ६७४ ॥ 'अह'

अहवा सयं करेन्तं, किंची अण्णस्स वावि दट्ठूणं। तस्सवि करेज्ज इच्छं, मज्झंपि इमं करेहित्ति ॥६७५॥

स्वकं निजं अन्यस्य वाऽपि कार्यं कुर्वन्तमन्यं दृष्ट्वा तस्यापीच्छाकारं कुर्यात् 'ममापि एतत्कुरु' ॥ ६७५ ॥ 'तत्थ'

तत्थवि सो इच्छं, से करेइ दीवेइ कारणं वाऽवि। इहरा अणुग्गहत्थं, कायव्वं साहुणो किच्चं ॥ ६७६ ॥

सोऽभ्यार्थितः सन् तस्य इच्छाकारं करोति इच्छाम्यहं तव करोमीति, दीपयति वा कारणं 'गुर्वादिकार्यविधानं इतरथाऽवशिष्टकार्याभावेऽस्तमानुग्रहार्थं साधोः कार्यं कर्त्तव्यं' ॥ ६७६ ॥ 'अह'

अहवा णाणाईणं, अट्ठाए जइ करेज्ज किच्चाणं। वेयावच्चं किंची, तत्थवि तेसिं भवे इच्छा ॥ ६७७ ॥

दशधा सां-
माचारी ॥

ज्ञानादीनामर्थाय यदि कृत्यानामाचार्याणां वैयावृत्त्यं कोऽपि कुर्यात्तत्रापि तेषां आचार्याणां साधौ 'इच्छेति' इच्छाकारो भवेत् ॥ ६७७ ॥ 'आणा'

**आणाबलाभिओगो, णिग्गंथाणं ण कप्पई काउं । इच्छा पउंजियव्वा, सेहे राईणिए (य) तहा ॥६७८॥**

आज्ञा त्वयेदं कार्यमेवेति, बलाभियोगो हठात्करणं तौ न कल्पते । 'इच्छे'ति इच्छाकारः शिष्ये तथा पुण्यकृत्यज्ञप्त्यादौ रत्नाधिकेऽपि प्रयोक्तव्यः ॥ ६७८ ॥ 'जह'

**जह जच्चबाह्लाणं, आसाणं जणयएसु जायाणं। सयमेव खलिणगहणं, अहवावि बलाभिओगेणं ६७९**

जात्यबाल्हीकानामश्वानां स्वयं खलीनं कविका, तद्ग्रहण तेषां प्रायो विनीतत्वात् । मगधादिजनपदेषु जातानां तु स्वयं वा बलाभियोगेन वा खलीनग्रहणं केषाञ्चिद्विनीतत्वादविनीतत्वाच्च ॥ ६७९ ॥ 'पुरि'

**पुरिसज्जाएऽवि तहा, विणीयविणयंमि नत्थि अभिओगो । सेसंमि उ अभिओगो, जणवयजाए जहा आसे**

तथा पुरुषजाते पुरुषप्रकारेऽपि विनीतः शिक्षितो विनयो येन तस्मिन्नास्ति बलाभि० शेषेऽविनीतेऽस्ति, यथा मगधादिजनपदजातेऽश्वे, तस्मात् बलात्कारं विना स्वयमेवान्येषामिच्छाकारं अचिन्तयित्वाऽनभ्यर्थितेन वैयावृत्त्यं कार्यं, यतः ॥ ६८० ॥ 'अब्भ'

**अब्भत्थणाए मरुओ, वानरओ चेव होइ दिट्ठंतो । गुरुकरणे सयमेव उ, वाणियगा दुण्णि दिट्ठंता॥६८१॥**

इच्छाकारद्वारम् ॥

अभ्यर्थनायां मरुको वटुः । यथा सोऽभ्यर्थनां विना दानक्षणे जनगृहेष्वगच्छन् दरिद्रीभूतः तथाऽभ्यर्थनां विनां वैयावृत्त्यमकुर्वन्निर्जराहीनः स्यात् । तथा यो गुरुणा वैयावृत्त्यं कुर्विति नोदितो गुरोरपि तदेव वक्ति स वानरोपमः । यथा वानरो वृष्ट्या कम्पमानो नीडस्थया सुगृह्या गृहं किं न करोपीत्युक्तो रुष्टस्तन्नीडं बभञ्ज। 'गुरुकरणे' तु गुरुः स्वयमेव वैयावृत्त्यं किं न करोतीति गुरुकरणे। 'वाणि०' एको वणिकार्पण्यात्प्रावृषि स्वयं गृहं छादयन् लाभाद्भ्रष्टो द्वितीयो मौल्येनान्यैश्छादयंस्तद्दिने व्यवसायवाहुल्याद् बहुलाभवान् जातः। एवं गुरुः स्वयं वैयावृत्त्यं कुर्वन् प्रतिबोधादिलाभाद् भ्रश्यत्यन्यैस्तु कारयन् ज्ञानदानादिलाभवान् स्यात् ॥ ६८१ ॥ अत्रार्थे पुनर्दोषानाह 'सुत्तत्थेसु अचिन्तण आएसे वुड्ढसेहगगिलाणे। बाले खमइ वाई इड्ढीमाइ अणिड्ढीय'। १। यद्याचार्यः स्वयं वैयावृत्यं कुर्यात् तदा सूत्रार्थयोरचिन्तना स्यात्। आदेशे प्राघुणके वृद्धशैक्षग्लाने क्षपके चान्नपानादिअचिन्तना स्यात्। व्यालोऽहिस्तद्दष्टे साधौ औषधादिसारा न स्यात्। वादिनि ऋद्धिमति राजादौ चागते, आकारो लक्ष०, पानकाद्यर्थे गते गुरौ अनृद्धिर्लघुत्वं च। 'एएहिं कारणेहिं तुंबभूओ उ होति आयारिओ। वेयावच्चं ण करे कायव्वं तस्स सेसेहिं'। २। तुम्बं चक्रनाभिः तद्भूतस्तत्समो वैयावृत्त्यं न कुर्यात्। 'जेण कुलं आयत्तं तं पुरिसं आयरेण रक्खेज्जा। न हु तुंबंमि विणट्ठे अरया साहारया होंति'। ३। यस्य कुलं मुनिवृन्दं, पष्ठ्यार्थे तृतीया, आयत्तं वशं अरकाः साधारकाः समानाधारकास्तुम्बवदाधारकत इत्यर्थः। 'संज'

**संजमजोए अब्भुट्ठियस्स, सद्धाए काउकामस्स। लाभो चेव तवस्सिस्स, होइ अदीणमणसस्स॥६८२॥**

वैयावृत्त्ये भिक्षायां अन्यसाधुकृतेऽभ्युत्थितस्य उद्यतस्य श्रद्धया कर्तुकामस्य तपस्विनोऽलाभेऽप्यदीनमनसो निर्जराया

लाभ एव ॥ ६८२ ॥ उक्तः इच्छाकारः द्वार १ । 'संज'

**संजमजोए अब्भुट्ठियस्स, जं किंचि वितहमायरियं । मिच्छा एतंति वियाणिऊण मिच्छत्ति कायव्वं ।६८३।**

संयमयोगे समितिगुप्तिरूपे वितथं विपरीतमाचरितं, मिथ्याऽलीकमेतन्मयाकृतमिति ज्ञात्वा 'मिच्छा' मिथ्यादुःकृतमिति ॥ ६८३ ॥ 'जइ'

**जइ य पडिक्कमियव्वं, अवस्स काऊण पावयं कम्मं । तं चेव न कायव्वं, तो होइ पए पडिक्कंतो ॥६८४॥**

यदि वा पापकर्म्म कृत्वा अवश्यं प्रतिक्रान्तव्यं मिथ्यादुःकृतं देयं पुनस्तन्न कर्त्तव्यमेव ततः पदे उत्सर्गपदे। ६८४। 'जं दु'

**जं दुक्कडंति मिच्छा, तं भुज्जो कारणं अपूरेंतो । तिविहेण पडिक्कंतो, तस्स खलु दुक्कडं मिच्छा ॥६८५॥**

यद्दुःकृतमाश्रित्य मिथ्यादुःकृतं दत्तं तद्भूयो दुःकृतकारणमपूरयन्नकुर्वन् त्रिविधेन प्रतिक्रान्तः स्यात्। तस्य दुःकृतं मिथ्या ॥ ६८५ ॥ 'जं दु'

**जं दुक्कडंति मिच्छा, तं चेव निसेवए पुणो पावं । पच्चक्खमुसावाई, मायानियडीपसंगो य ॥ ६८६ ॥**

यद्दुःकृतमाश्रित्य मिथ्यादुःकृतं दत्तं तच्चैव पापं पुनर्निषेवते सेवते, तस्य माया निकृतिर्लोककृतो निकारस्तिरस्कारः पुनः पुनः कृतिप्रसङ्गश्च स्यात् ।। ६८६ ॥ 'मित्ति' 'कत्ति'

**मित्ति मिउमद्दवत्ते, छत्ति य दोसाण छायणे होइ । मित्ति य मेराएँ, ठिओ दुत्ति दुगुंछामि अप्पाणं ॥**

कत्ति कडं मे पावं, डत्ति य डेवेमि तं उवसमेणं। एसो मिच्छादुक्कडपयक्खरत्थो समासेणं ॥ ६८८ ॥

'मी'तिवर्णो मृदु मार्दवत्वे वर्त्तते, मृदुत्वं कायनम्रता। मृदोर्भावः कर्म्म वा मार्दवं तस्य भावो मार्दवत्वं भावनम्रता। 'छे'ति दोषाणां छादने वारणे 'मी'ति 'मेराए' मर्यादायां स्थितः, 'दु' इत्यात्मानं जुगुप्से 'क' इति मया पापं कृतं 'ड' इति तत्पापमुपशमेन डेपयामि क्षिपामि। एषां सैद्धान्तिकशब्दानां निष्पत्तिर्वर्णलोपागमाभ्यासविरुद्धैव यथा पुरि शेते पुरुषः, मह्यां शेते महिषः इत्यादिवत् ॥ ६८७-८८ ॥ द्वा० २ 'कप्पा'

कप्पाकप्पे परिणिट्ठियस्स, ठाणेसु पंचसु ठियस्स। संजमतवड्डगस्स उ, अविकप्पेणं तहाकारो ॥६८९॥

कल्पाकल्पे आचारानाचारे 'परि०' ज्ञाननिष्ठां गतस्य, स्थानेषु पञ्चमहाव्रतेषु संयमतपआढ्यस्याविकल्पेन निश्चयेन तथाकारस्तथेति शब्दः कार्यः ॥ ६८९ ॥ केत्याह-' वाय '

वायणपडिसुणणाए, उवएसे सुत्तअत्थकहणाए। अवितहमेयंति तहा, पडिसुणणाए तहक्कारो ॥६९०॥

वाचना सूत्रदानं तत्प्रतिश्रवणे १ उपदेशे सामान्यव्याख्याने २ सूत्रार्थे ३ तथा गुरूक्तकार्यप्रतिश्रवणे ४ चाऽवितथमेतदिति तथाकारः ॥ ६९० ॥ ' जस्स '

जस्स य इच्छाकारो, मिच्छाकारो य परिचिया दोऽवि। तइओ य तहक्कारो, न दुल्लभा सोग्गई तस्स ॥

इच्छाकारो मिथ्यादुष्कृतं चैते द्वे परिचिते ॥ ६९१ ॥ द्वा० ३ ' आव '

तथाकारद्वारम् ॥

आवस्सियं च णिंतो, जं च अइंतो निसीहियं कुणइ। एयं इच्छं नाउं,गणिवर ! तुब्भंतिए णिउणं ॥

'णिंतो' निर्यान् साधुः 'अइन्तो' आयन् हे गणिवर! गणिर्द्वादशाङ्गाध्येता तस्मिन् वर श्रेष्ठ एतदिच्छामि ज्ञातुं तवान्तिके ॥ ६९२ ॥ गुरुराह-' आव '

आवस्सियं च णिंतो, जं च अइंतो णिसीहियं कुणइ। वंजणमेयं तु दुहा, अत्थो पुण होइ सो चेव ॥६९३॥

व्यञ्जनं शब्दरूपमेतद् द्विधा वर्तते, अर्थो द्वयोरपि स एव। यतः संयमेऽवश्यंक्रियाऽऽवश्यिकी, अतिचारेभ्यो निषिद्धात्मनः क्रिया नैषेधिकी ॥ ६९३ ॥ तत्र ' एग '

एगग्गस्स पसंतस्स, न होंति इरियाइया गुणा होंति। गंतव्वमवस्सं कारणंमि आवस्सिया होइ ॥ ६९४ ॥

एकाग्रस्य, ईर्या गमनं, आदितः आत्मसंयमविराधनादयो दोषास्तिष्ठतो न स्युः, गुणाः स्वाध्यायाध्ययनादयः स्युः। तथापि ' गंतव्व० ' कारणे ग्लानादेः, ततः ' आव० ' ॥ ६९४ ॥ ' आव० '

आवस्सिया उ आवस्सएहिं, सव्वेहिं जुत्तजोगिस्स। मणवयकायगुत्तिंदियस्स आवस्सिया होइ ॥६९५॥

आवश्यकी आवश्यकैः प्रतिक्रमणादिभिः सर्वैर्युक्तयोगिनः स्थानस्थस्यापि स्यात्, युक्ता योगा मनोवाकायव्यापारा यस्य तस्य, कारणे गमनकालेऽपि गुप्तमनोवाकायेन्द्रियस्यावश्यि० ॥ ६९५ ॥ ' सेज्जं ' ' सेज्जं '

सेज्जं ठाणं च जहिं, चेएइ तहिं निसीहिया होइ। जम्हा तत्थ निसिद्धो, तेणं तु निसीहिया होइ ॥६९६॥

आवश्यि-
कीनैषे-
धिक्यौ ॥

सेज्जं ठाणं च जदा, चेतेति तया निसीहिया होइ। जम्हा तदा निसेहो, निसेहमइया च सा जेणं ॥६९७॥

शय्यां स्थानं च । यत्र चेतयतेऽनुभाव्यतया वेत्ति, 'तर्हि', अथ नैषेधिकीनिरुक्तिः, यस्मात्तत्रातिचारेभ्यो निषिद्धो वर्त्तते,
'तेणं' ॥ ६९६ ॥ पाठान्तरं 'सेज्जं' अथ भाष्यं 'आव'

आवास्सियं च णिंतो,जं च अइंतो निसीहियं कुणइ। सेज्जाणिसीहियाए, णिसीहियाअभिमुहो होइ ।१२०।

'आवस्सि० जं च अ०' एतत्पादद्वयं व्याख्यातं । उपलक्षणत्वाद् 'वंजणमे०' इति तृतीयपादोऽपि, अथ 'अत्थो
पुण०' इति स्पष्टयति । 'सेज्जा०' शय्या वसतिः सैव नैषेधिकी, कस्मात् ? निषिध्यते प्रविशद्भिर्बहिः संयतातिचारा इति
नैषेधिकी, तस्यां आगमनं प्रति नैषेधिक्याऽभिमुखोऽस्मि । नैषेधिकी पापव्यापारनिषिद्धात्मनो देहस्तयाऽतः साधुभिः संवृते-
भाव्यमिति संज्ञां करोति, ततोऽवश्यंकर्त्तव्यभावित्वान्नैषेधिक्यप्यावश्यिकीत्येकार्थता । चूर्णिव्याख्या त्वेवं 'आव' 'जं च'
तत्रायं हेतुः 'सेज्जा' यन्निर्गच्छन्नावश्यिकीतिसंज्ञया गमनस्यावश्यकत्वात् शय्यानैषेधिक्यां वसतिनिषेधेऽभिमुखोऽस्मि, भवद्भि-
र्भगिन्ना कार्येति गुरुनिवेदनं विनयप्रयोगादि च, आयांस्तु 'निसीहियं' इत्यादि विराधनानिषेधरूपनैषेधिकीसंज्ञया युष्मभ्य-
मभिमुखोऽस्मि मा सागारिकभ्रान्त्या क्षुभ्यमिति, एवमपि गुरुनिवेदनादिप्रयोजनैक्यादेकार्थता ॥१२०॥ उक्तमेवार्थमाह 'जो हो'

जो होइ निसिद्धप्पा, निसीहिया तस्स भावओ होइ। अणिसिद्धस्स निसीहिय,केवलमेत्तं हवइ सद्दो॥१२१

पापे निषिद्धात्मा ॥ १२१ ॥ 'आव'

आवस्सयंमि जुत्तो,नियमणिसिद्धोत्ति होइ नायवो।अहवाऽवि णिसिद्धप्पा,णियमा आवस्सए जुत्तो १२२

आवश्यके मूलोत्तरगुणानुष्ठानरूपे युक्तो नियमेन निश्चयेन पापान्निषिद्ध इति ॥ १२२ ॥ द्वा० ४-५, 'आपु'

आपुच्छणा उ कज्जे, पुवनिसिद्धेण होइ पडिपुच्छा। पुवगहिएण छंदण, णिमंतणा होअगहिएणं ॥६९८॥

कार्ये सति करोमीति गुरुपार्श्वे आपृच्छना, द्वा० ६ । पूर्वनिषिद्धेन कुतोऽपि हेतोस्तत्कर्तुकामेन प्रतिपृच्छा द्वा० ७ । पूर्वगृहीतेन भक्तादिना अन्यर्षीणां इच्छाकारेणेदं भक्तादि गृह्यतामिति छन्दना, द्वा ८ । अगृहीतेन भक्तादिना भवत्कृते भक्ताद्यानयामीति निमन्त्रणा द्वा० ९ ॥ ६९८ ॥ 'उव'

उवसंपया य तिविहा, णाणे तह दंसणे चरित्ते य। दंसणणाणे तिविहा, दुविहा य चरित्तअट्ठाए ॥६९९॥

उपसम्पद् अन्यगच्छाद्याश्रयणं, त्रिविधा दर्शनज्ञानयोरुपसम्पद्, द्विविधा चारित्रार्थाय ॥ ६९९॥ तत्र ज्ञाने 'वत्त'

वत्तणा संधणा चेव, गहणं सुत्तत्थतदुभए। वेयावच्चे खमणे, काले आवकहाइ य ॥ ७०० ॥

वर्त्तना १ संधना २ ग्रहणं ३ एतत्त्रयं प्रत्येकं सूत्रेऽर्थे तदुभये सूत्रार्थरूपे एवं नवभेदाः, एवं दर्शनेऽपि दर्शनप्रभावकशास्त्रविषया ९ भेदाः, चारित्रे तु द्विधा वैयावृत्त्यविषया क्षपणं तपस्तद्विषया च, एकैका कालतो यावत्कथिका चशब्दादित्वरा च स्यात् ॥ ७०० ॥ सामान्येनोक्त्वा विशेषेणाह-'संदि'

संदिट्ठो संदिट्ठस्स, चेव संपज्जई उ एमाई। चउभंगो एत्थं पुण, पढमो भंगो हवइ सुद्धो ॥ ७०१ ॥

उपसम्प-
द्वारम् ॥

सम्पद्यते उपसम्पदमादत्ते इत्याद्यो

सन्दिष्टो गुरुणाऽनुज्ञातः सन्दिष्टस्य गुरुणैव ज्ञापितस्य पार्श्वे स्वगच्छेऽन्यगच्छे वा सन्दिष्टस्येति यथा-
मङ्गः १ एवं सन्दिष्टोऽसन्दिष्टस्य २ असन्दिष्टः सन्दिष्टस्य ३ असन्दिष्टोऽसन्दिष्टस्य ४ तत्र असन्दिष्टः सन्दिष्टस्येति यथा-
मृऽकाचार्यपार्श्वे उपसम्पद् ग्राह्या परं नाधुनेति, एवं चत्वारो भङ्गाः ॥ ७०१ ॥ वर्त्तनादीनि व्याख्याति 'अथि'

**अथिरस्स पुव्वगहियस्स, वत्तणा जं इहं थिरीकरणं । तस्सेव पएसंतरणट्ठस्सऽणुसंधणा घडणा ॥७०२॥**

प्राग्गृहीतस्य सूत्रादेरस्थिरस्य सतो यत् स्थिरीकरणं गुणनं क्रियते सा वर्त्तना १ तस्यैव प्रदेशान्तरनष्टस्य किञ्चिद्विस्मृ-
तस्याऽनु पश्चाद् घटना मेलना संधना ॥ ७०२ ॥ 'गह'

**गहणं तप्पढमतया, सुत्ते अत्थे य तदुभए चेव । अत्थग्गहणंमि पायं, एस विही होइ णायव्वो ॥ ७०३ ॥**

तत् प्रथमतया सूत्राद्यादानं ग्रहणं । तत्र 'अत्थ०' प्रायोग्रहणात्सूत्रग्रहणेऽपि कश्चिद् भूमिप्रमार्जनादिविधिः स्यात् ॥७०३॥
अत्र ज्ञानोपसम्पदि वाच्यद्वारगाथा 'मज्ज'

**मज्जणणिसेज्जअक्खा, कितिकंमुस्सग्ग वंदणं जेट्ठे । भासंतो होई जेट्ठो, नो परियाएण तो वन्दे ॥७०४॥**

मार्जनं १ निषिद्या २ अक्षाः ३ कृतिकर्म्म ४ उत्सर्गः ५ वन्दनं ज्येष्ठे ६ ज्येष्ठश्चात्र भाषमाणो ज्ञेयो न तु पर्यायेण ततो
वन्दते ७ ॥ ७०४ ॥ क्रमेणाह 'ठाणं०'

**ठाणं पमज्जिऊणं, दोण्णि निसिज्जाउ होंति कायव्वा । एगा गुरुणो भणिया, बितिया पुण होंति अक्खाणं ॥**

द्वा० १ 'दोन्नि' समवसरणाक्षाणां द्वा० ३ ॥ ७०५ ॥ कृतिकर्म्मद्वारमाह द्वा० २ ' दो चे '

दो चेव मत्तगाइं, खेले तह काइयाए बीयं तु। जावइया य सुणेंती, सव्वेऽवि य ते तु वंदंति ॥ ७०६ ॥

द्वे मात्रके स्तः खेलस्य श्लेष्मणः कायिक्या निरोधस्य, वन्दन्ते ज्यायसं वन्दनेन ॥ ७०६ ॥ द्वा० ४ ' सव्वे '

सव्वे काउस्सग्गं, करेंति सव्वे पुणोऽवि वंदंति। णासण्णे णाइदूरे, गुरुवयणपडिच्छगा होंति ॥७०७॥

विघ्नशान्त्यै अनुयोगहेतुं कायोत्सर्गं ' पडिच्छगा ' प्रतीच्छकाः ॥ ७०७ ॥ ' णिद्दा '

णिद्दाविगहापरिवज्जिएहिं, गुत्तेहिं पंजलिउडेहिं । भत्तिबहुमाणपुव्वं, उवउत्तेहिं सुणेयव्वं ॥ ७०८ ॥

भक्तिरान्तरा प्रीतिर्बहुमानं बाह्या प्रतिपत्तिः ॥ ७०८ ॥ ' अभि '

अभिकंखंतेहिं सुहासियाइं, वयणाइं अत्थसाराइं। विम्हियमुहेहिं, हरिसागएहिं हरिसं जणंतेहिं॥७०९॥

अभिकाङ्क्षद्भिः सुभाषितानि शब्दार्थदोषरहितानि। हर्षादागतैः, हर्षं गुरोर्जनयद्भिः एवंविधैः श्रोतव्यं ॥ ७०९ ॥ ' गुरु '

गुरुपरिओसगएणं, गुरुभत्तीए तहेव विणएणं । इच्छियसुत्तत्थाणं, खिप्पं पारं समुवयंति ॥ ७१० ॥

गमनं गतं गुरुपरितोषस्य गतं तेन, क्षिप्रं शीघ्रं पारं समुपयान्ति ॥ ७१० ॥ ' वक्खा '

वक्खाणसमत्तीए, जोगं काऊण काइयाईणं। वंदंति तओ जेट्ठं, अण्णे पुव्वं चिय भणन्ति ॥७११॥

व्याख्यानगमायां व्याख्यानकालबाहुल्येन कायिक्यादिनिरोधात्मा भूद् ग्लानत्वं इति कायिकादेर्योगव्यापारं कृत्वा व्याख्यानान्तरं वन्दन्तेऽन्ये त्वाहुः पूर्वं व्याख्यारम्भकाले एव वन्दन्ते ॥ ७११ ॥ गतं वन्दनद्वार० ६ इति द्वा० ६ । 'भासंतो०' इति द्वारव्याख्यायां परः 'चोए'

चोएति जइ हु जिट्ठो, कहिंचि सुत्तत्थधारणाविगलो। वक्खाणलद्धिहीणो, निरत्थयं वंदणं तंमि ॥७१२॥

नोदयति प्रेरयति यदि च ज्येष्ठः कथञ्चित्सूत्रार्थधारणायां विकलोऽशक्तः अर्थव्याख्यालब्धिहीनः, ततो निरर्थकं तस्मिन् वन्दनं ॥ ७१२ ॥ 'अह'

अह वयपरिआएहिं, लहुगोऽवि हु भासओ इहं जेट्ठो। रायणियवंदणे, पुण तस्सवि आसायणा भंते! ७१३

वयःपर्यायाभ्यां लघुरपि भाषकोऽत्र ज्येष्ठः रत्नाधिकवन्दापने ॥ ७१३ ॥ गुरुराह 'जइ'

जइवि वयमाइएहिं, लहुओ सुत्तत्थधारणापडुओ। वक्खाणलद्धिमंतो, सो चिय इह घेप्पई जेट्ठो ॥७१४॥

यद्यपि वयआदिभिर्लघुस्तथापि यः 'सुत्त०' पटुर्व्याख्यानलब्धिमान् स एवेह गृह्यते ॥ ७१४ ॥ 'आसा'

आसायणावि णेवं, पडुच्च जिणवयणभासयं जम्हा। वंदणयं राइणिए, तेण गुणेणंपि सो चेव ॥७१५॥

यस्माज्जिनवचनभाषितं जिनवाक्स्थापनशक्तिं प्रतीत्याश्रित्य श्रुतकाले रत्नाधिके वन्दनं उक्तं तेनार्हद्वचनव्याख्यारूपेण गुणेन स एव लघुरपि रत्नाधिकः ॥ ७१५ ॥ प्रसङ्गात्सामान्यवन्दनेऽपि नयविचारमाह 'न व'

ज्ञानोपसम्पदि ज्येष्ठवन्दनद्वारम् ॥

**न वओ एत्थ पमाणं, न य परियाओऽवि णिच्छयमएणं। ववहारओ उ जुज्जइ, उभयनयमयं पुण पमाणं॥**

निश्चयमतेन न वयो न च पर्यायः प्रमाणं किन्तु क्रियैव, व्यवहारतस्तु युज्यते वयःपर्यायवृद्धत्व, ततः किमत्र तत्त्वमित्याह। उभयनयमतं पुनः प्रमाणं पर्यायज्येष्ठः सत्क्रियश्च वन्दनार्ह इत्यर्थः, परं व्यवहारेणैव व्यवहर्त्तव्यं ॥ ७१६ ॥ यतः 'निच्छ'

**निच्छयओ दुन्नेयं, को भावे कम्मि वट्टई समणो?। ववहारओ उ कीरइ, जो पुव्वठिओ चरित्तंमि ॥७१७॥**

निश्चयतो दुर्ज्ञेयं कः श्रमणः कस्मिन् भावे वर्त्तते, यः पूर्वं चारित्रे स्थितः तस्य व्यवहारतः क्रियते वन्दनं ॥७१७॥ 'वव'

**ववहारोऽवि हु बलवं, जं छउमत्थंपि वंदई अरहा। जा होइ अणाभिण्णो, जाणंतो धम्मयं एयं॥१२३॥**

अर्हन्नपि केवल्यपि यावदन्यैरनभिज्ञातः स्यात्। एतां व्यवहारबलाधिक्यरूपां धर्म्मतां जानन् ॥ १२३ ॥ 'एत्थ'

**एत्थ उ जिणवयणाओ, सुत्तासायणबहुत्तदोसाओ। भासंतगजेट्ठगस्स, उ कायव्वं होइ किइकम्मं॥७१८॥**

अत्र श्रुतव्याख्याप्रस्तावे जिनवचनात् अवन्दने च सूत्राऽऽशातनाबहुत्वदोषाद् भाषमाणरूपज्येष्ठस्य ॥ ७१८ ॥ उक्ता ज्ञानोपसम्पत्। एवं दर्शनोपसम्पदपि 'दुवि'

**दुविहा य चरित्तंमी, वेयावच्चे तहे व खमणे य। णियगच्छा अण्णंमि य, सीयणदोसाइणा होति॥७१९॥**

निजगच्छादन्यस्मिन् गच्छे गमनं स्यात्। सीदनं ज्ञानचारित्रादिना तद्दोषेण आदितः स्वगच्छेऽन्यो वैयावृत्त्यकर्त्ताऽ-

स्तीत्यादिनापि ॥ ७१९ ॥ 'इत्त'

**इत्तरियाइविभासा, वेयावच्चंमि तहे व खमणे य। अविगिट्ठविगिट्ठंमि, य गणिणो गच्छस्स पुच्छाए ॥**

वैयावृत्त्यार्थं उपसम्पदि इत्वरादिविभाषा कार्या। कोऽर्थः वैयावृत्त्योपसम्पद्ग्राहको द्विधा इत्वरो यावत्कथिकश्च। तत्रायं विधिः-यद्यग्रे वैयावृत्त्यकरो नास्ति तदेष्यते, चेदस्ति स यावत्कथिको लब्धिमांश्च तदा नव्यो नेष्यते। उपाध्यायादिभ्यो वा द्वयोऽथ नव्यो यावत्कथिको लब्धिमांश्च, तदा स स्थाप्यः, वास्तव्य उपाध्यायादीनां, अथ द्वावपि लब्धियुक्तौ तदा वास्तव्यः स्थाप्योऽन्य उपाध्यायादेः, अथ स आगन्तुकः नेच्छेत्तदा स्थाप्यो वास्तव्य उपाध्यायादेः, एवं वास्तव्यागन्तुकयोरित्वर उपाध्यायादेः यावत्कथिकः स्थाप्यः द्वयोरित्वरयोरेकः प्रतीक्ष्यतेऽन्यः कार्यतेऽन्यस्मै वा दीयते। नेच्छेत्तदा विवेकः कार्यः यद्वा यावत्कथिको वास्तव्यो विश्राम्यते। आगन्तुक इत्वरः कार्यते वृत्त्यं, इति विभाषा कार्या। तथैव क्षपणार्थं उपसम्पत्तरि इत्वरे यावत्कथिके च, अविकृष्टे विकृष्टे च गणिना गणधरेण गच्छस्य पृच्छया विभाषा कार्या, तत्र क्षपक इत्वरश्चतुर्थषष्ठकर्त्ताऽविकृष्टः, स चेत् पारणे ग्लायते तदा नेष्यते भण्यते च त्वया नैवं तपः कार्यं किंतु सूत्रेऽर्थे चादरं कुरु, विकृष्टस्तु योऽष्टमादिकर्त्ता सोऽप्येवं तान्यः, यावत्कथिकश्च योऽन्ते अनशनग्राही, तौ गच्छं पृष्ट्वा स्थाप्यौ। साध्वपृच्छया विकृष्टतपोऽनशनिनो रक्षणे दोषः, यदा विकृष्टतपा आत्मना प्रतिलेखनादि कुर्यात् तवानाहं (?) यदि साधवो ब्रूयुः अग्रे क्षपकोऽस्ति, ततो नवः साधुः प्रतीक्ष्यतेऽग्रेतनपारणं यावत्। द्वयोर्वैयावृत्त्यं साधवः कुर्युः तदा स्थाप्यः, साधुप्रपन्ने विस्मृते तदुद्वर्त्तनादिशुश्रूषाविधौ च यतयः प्रेर्याः नेन्मासादर्वा विकृष्टतपस्वी पारणे न ग्लायति तदाऽर्हः मासादितपोऽर्ह एव ॥ ७२० ॥ 'उव'

चारित्रोपसम्पद्द्वारम् ॥

उवसंपन्नो जं कारणं, तु तं कारणं अपूरेंतो । अहवा समाणियंमी, सारणया वा विसग्गो वा ॥ ७२१ ॥

यत्कारणं यन्निमित्तं उपसम्पन्न उपसम्पदं प्रपन्नस्तत्कारणमपूरयन् यदि स्यात्तदा 'सारणया वा विसग्गो वे 'ति सारणा नोदना कार्या विसर्गस्त्यागो वा 'अहवा समा०' समाप्ते उपसम्पत्कार्ये सारणा, यथा सम्पूर्णं ते कार्यं, विसर्गो वा कार्यः ॥ ७२१ ॥ अथगृहस्थोपसम्पदमाह 'इत्त'

इत्तरियं पि न कप्पइ, अविदिन्नं खलु परोग्गहाईसुं । चिट्ठि त्तु निसिइ त्तु, व तइयवयरक्खणट्ठाए॥७२२॥

इत्वरमप्यल्पकालमपि परावग्रहादिषु स्थातुं निषीदितुं, अविदत्तं इति क्रियाविशेषणं, न कल्पते । तृतीयमहाव्रतरक्षणार्थं ॥ ७२२ ॥ द्वा० १० 'एवं'

एवं सामायारी, कहिया दसहा समासओ एसा । संजमतवड्ढयाणं, निग्गंथाणं महरिसीणं ॥ ७२३॥

संयमतपआढ्यानां निर्ग्रंथानां सामाचारी कथिता ॥ ७२३ ॥ 'एयं'

एयं सामायारिं, जुंजंता चरणकरणमाउत्ता । साहू खवंति कम्मं, अणेगभवसंचियमणंतं ॥ ७२४ ॥

युञ्जानाश्चरणकरणयोगयुक्ता उपयुक्ताः, मो लाक्ष० ॥ ७२४ ॥ इति सामाचारी । उक्तः सामाचार्युपक्रमकालः । यथायुष्कोपक्रमकालमाह 'अज्झ'

अज्झवसाणनिमित्ते, आहारे वेयणा पराघाए । फासे आणापाणु, सत्तविहं झिज्जए आउं ॥ ७२५ ॥

अतिहर्षविषादाभ्यां अधिकमवमानं चिन्तनं अध्यवसानं तत् अध्यवसानं रागस्नेहभयभेदात्त्रिधा । तत्र रूपादिगुणेक्ष-
णोत्थो रागः, सामान्येन प्रतिबन्धः स्नेहः, भयमाकस्मिकं । तेषां अध्यवसाने सति १ तथा निमित्ते वक्ष्यमाणदण्डकशादौ
सति २ आहारे प्रचुरे ३ वेदनायां ४ पराघाते गर्त्तादिपाते ५ सर्पादिस्पर्शे ६ आनपानयोर्निरोधे ७ इति सप्तविधैः प्रकारैः
सोपक्रमायुः क्षीयते ॥ ७२५ ॥ ' दंड '

**दंडकससत्थरज्जू, अग्गी उदगपडणं विसं वाला । सीउण्हं अरइ भयं, खुहा पिवासा य वाही य ॥७२६॥**

दण्डाः १ कशाः २ शस्त्रं ३ रज्जवः ४ अग्निः ५ उदकं ६ पतनं ७ विषं ८ व्यालः ९ शीतः १० उष्णं ११ अरतिः १२
भयं १३ क्षुधा १४ पिपासा १५ व्याधिः १६ ॥ ७२६ ॥ ' मुत्त '

**मुत्तपुरीसनिरोहे, जिण्णाजिण्णे य भोयणे बहुसो । घंसणघोलणपीलण, आउस्स उवक्कमा एए ॥७२७॥**

मूत्रपुरीषौ निरोधौ १७–१८ जीर्णाजीर्णं १९ तथा बहुशोऽनेकशो भोजनं २० घर्षणं चन्दनस्येव २१ घोलनं अंगु-
ल्यङ्गुलिभ्यां यूकाया इव २२ पीडनमिक्ष्वादेरिव २३ आयुषः शीघ्रभोग्यत्वे उपक्रमकारित्वादुपक्रमाः । तत्र "देवा नेरइया
वा असंखवासाउया तिरियमणुया । उत्तमपुरिसा य तहा चरमसरीरा य निरुवकमा । १ । सेसा संसारत्था भइया सोव-
क्कमा य इयरे य" ॥७२७॥ उक्त उपक्रमकालः द्वा० ४, देशकालः प्रस्ताव उच्यते, स एव कालः, स च प्रशस्तोऽप्रशस्तश्च ।
प्रशस्तो मोक्षहेतुर्यथा ' निद्र '

यथा-युष्कोप-क्रमकालः॥

३१

**निध्धूमगं च गामं, महिलाथूभं च सुण्णयं दट्ठुं। णीयं च कागा ओलेन्ति जाया भिक्खस्स हरहरा ॥७२८॥**

निर्धूमं ग्रामं, महिलास्तूपं कूपं शून्यं दृष्ट्वा, तथा नीचं 'ओलेन्ति' अवपतन्ति काकाः, ततो जाता भैक्षस्य 'हरहरा'अतीव-प्रस्तावः ॥ ७२८ ॥ अप्रशस्तो भवहेतुर्यथा ' निम्म '

**निम्मच्छियं महुं पायडो, णिही खज्जगावणो सुण्णो। जा यंगणे पसुत्ता, पउत्थवइया य मत्ता य ॥ ७२९ ॥**

निर्माक्षिकं मधु, प्रकटो निधिः, खाद्यकानामापणो हट्टः शून्यः, या चाङ्गणे प्रसुप्ता स्त्री सा प्रोषितपतिका मत्ता च, एषां ग्रहणप्रस्ताव इत्यर्थः ॥ ७२९ ॥ द्वा० ५ । अथ कालो मरणं तस्य कालः कालकालस्तमाह ' काले '

**कालेण कओ कालो, अम्हं सज्झायदेसकालंमि। तो तेण हओ कालो, अकालकालं करेंतेणं ॥ ७३० ॥**

कालेन कृष्णेन शुना कृतः कालो मरणं अस्माकं स्वाध्यायस्य देशकाले प्रस्तावे ततस्तेन हतः कालः प्रादोषिकादिः अकाले प्रस्तावे कालं मरणं कुर्वता ॥ ७३० ॥ द्वा. ६ । ' दुवि '

**दुविहो पमाणकालो, दिवसपमाणं च होइ राई अ। चउपोरिसिओ दिवसो,राती चउपोरिसी चेव ॥७३१॥**

प्रमाणमेव कालः प्रमाणकालो द्विविधः दिवसप्रमाणकालो रात्रिप्रमाणकालश्च । प्रमाणाद्धाकालयोरयं भेदः । अद्धा-कालोऽनाद्यनन्तः प्रमाणकालस्तु प्रमाणवानेव ॥ ७३१ ॥ ' पंच '

पंचण्हं वण्णाणं, जो खलु वण्णेण कालओ वण्णो। सो होइ वण्णकालो, वणिज्जइ जो व जं कालं ॥७३२॥ भाव-

वर्णेन छायया कालो वर्णः मः, वर्णश्चासौ कालश्च वर्णकालः, यो वा पदार्थो यत्कालं, आश्रित्य वर्ण्यते स वर्णनं वर्ण- कालः ॥

नस्य कालः ॥ ७३२ ॥ द्वा० ८ । 'सादी'

सादीसपज्जवसिओ, चउभंगविभागभावणा एत्थं । ओदइयादीयाणं, तं जाणसु भावकालं तु ॥७३३॥

औदायिकादीनां भावानां कालः सादिसपर्यवसितः। अत्र चतुर्भङ्ग्या विभागस्य व्यक्तेर्भावना कार्या, सादिसपर्यवसितः १

सादपर्यवसितः २ अनादिसपर्यवसितः ३ अनाद्यपर्यवसितः ४ । तं भावकालं जानीहि । तत्र कर्मणां उदयोत्थ औदयिको भावो

द्वितीयभङ्गशून्यः। यथा नारकादिभावो गत्यादिनामकर्मण उदयत्वादौदयिकः स आद्ये भङ्गे, मिथ्यात्वादिस्तु भव्यानां तृतीय-

भङ्गे ३, स एवाभव्यानां चतुर्थे भङ्गे ४, मिथ्यात्वाद्युपशमः औपशमिको द्व्यादिशून्यः, क्षायिकस्त्वादिशून्यः, यतः क्षायिकं चारित्रं

आद्ये भङ्गे १ सिद्धानां चारित्राचारित्र्यादिविकल्पातीतत्वात्, क्षायिकज्ञानदर्शने द्वितीयो भङ्गः, अन्ये तु क्षायिकं द्वितीयभङ्गे

प्राहुः । क्षायोपशमिको द्वितीयभङ्गशून्यः यतो ज्ञानचतुष्कमाद्ये १ अज्ञानत्रिकं भव्यानां तृतीये ३ अभव्यानां चतुर्थे ४।

पारिणामिकोऽप्येवं जीवानां पुद्गलानां च विविधरूपः परिणामलक्षणः पारिणामिको भावः, यतः पुद्गलकाये द्व्यणुकादिः पारि-

णामिको भावः आद्ये भङ्गे १ भव्यानां भव्यत्वपरिणामस्तृतीये ३ जीवस्य जीवत्वपरिणामश्चतुर्थे भङ्गे ४ ॥ ७३३ ॥ भाव-

कालद्वा० ९ । 'एत्थं'

एत्थं पुण अहिगारो, पमाणकालेण होइ नायव्वो। खेत्तंमि कंमि काले, विभासियं जिणवरिंदेणं ॥७३४॥

इह यत्प्राक् ' पगयं तु भावेणं ' अत्र तु प्रमाणकालेनेत्युक्तं । ततः क्षायिकभावकाले स्वामिना प्रमाणकाले पूर्वाह्णे भाषितमित्यविरोधः । अथोत्तरार्द्धे शिष्यपृच्छा ' खेत्तं ' कस्मिन् क्षेत्रे काले वा सामायिकाध्ययनं जिनवरेन्द्रेण विभाषितं ॥ ७३४ ॥ उत्तरमाह ' वइ '

वइसाहसुद्धएक्कारसीए, पुव्वण्हदेसकालंमि । महसेणवणुज्जाणे, अणंतर परंपर सेसं ॥ ७३५ ॥

कालस्यान्तरंगत्वज्ञप्त्यै प्रश्नव्यत्ययेनोत्तरं, पूर्वाह्णे आद्यपौरुष्यां नोआगमतो ज्ञशरीराद्यतिरिक्तद्रव्यक्षेत्रे महसेनवने, भावक्षेत्रेषु तु गणभृत्सु, अनन्तरनिर्गमनं सामायिकस्य, शेषं गुणशिलादिक्षेत्रं जम्बूमुख्यगणिनश्चाश्रित्य परंपरनिर्गमनं तस्य ॥ ७३५ ॥ गतं ' उद्देसे निद्देसे ' मूलद्वारगाथाद्वयोक्तं क्षेत्रकालद्वारद्वयं, क्षेत्रकालपुरुषद्वाराणां च निर्गमाङ्गतोक्ताऽतः 'नामं० एसो उ निग्गमस्सा ' इत्यादिगाथाया भावनिर्गममाह ' खइ '

खइयंमि वट्टमाणस्स,निग्गयं भयवओ जिणिंदस्स । भावे खओवसमियंमि,वट्टमाणेहिं तं गहियं ॥७३६

क्षायिके भावे वर्त्तमानस्य जिनेन्द्रस्य मुखान्निर्गतं । ' भावे ' तत् सामायिकं अन्यदपि च श्रुतं गणधरादिभिः क्षायोपशमिके भावे वर्त्तमानैर्गृहीतं । तत्र प्राग्भवभावितैर्गणिभिरेकनिषद्यया एकादशाङ्गानि, चतुर्दशनिषद्यादिभिश्च प्रायः चतुर्दश पूर्वाण्यात्तानि, गौतमेन तु चतुर्दशपूर्वाणि 'उप्पन्ने इ वे' त्याद्युत्तरयुक्तनिषद्यात्रयेण कृतानि, निषद्या तु प्रणम्य पृच्छा । ततोऽ-

मुधर्म्मं चादौ कृत्वा स्वस्वायुर्यावद्युष्मदायत्तास्ततः सुधर्म्मायत्ता इति

ईंना गौतमादीनां क्रमाद् द्रव्यगुणपर्यवैस्तीर्थमनुज्ञातं,

गणाश्च अनुज्ञाताः चूर्णवृष्टिः प्रभुणा देवैश्च कृता ॥ ७३६ ॥ अथ पुरुषद्वारं ' दव्व '

**दव्वाभिलावचिंधे, वेए धम्मत्थभोगभावे य । भावपुरिसो उ जीवो, भावे पगयं तु भावेणं ॥ ७३७ ॥**

द्रव्यपुरुषोऽभिलापपुरुष इत्यादि । तत्र नोआगमतो ज्ञशरीराद्यतिरिक्तो द्रव्यपुरुषस्त्रिधा । एकस्माद्वर्त्तमानभवादनु यः पुमान् भावी स एकभविकः १ स एव पुरुषायुर्बन्धादनु बद्धायुष्कः २ अभिमुखे अन्तर्मुहूर्त्तादनु भावितया पुरुषनामगोत्रे यस्य सोऽभिमुखनामगोत्रः ३ अभिलापशब्दस्तद्रूपः पुरुषो यथा पुल्लिङ्गो घटः, अपुरुषोऽपि नृचिह्नश्चिह्नपुरुषो यथा नृवेषा स्त्री। स्त्रीपुंनपुंसकेषु पुंवेदोदये वेदपुरुषः धर्म्मार्जनपरो धर्म्मपुरुषः साधुः । एवं अर्थपुरुषः मम्मणः, प्राप्तसमस्तभोगो भोगपुरुषः न चक्री । 'भावे' भावद्वारे भावपुरुषः आत्मा। पुरि देहे शेते इति व्युत्पत्तेः, सामायिकेऽर्थतो भावपुरुषेणार्हता तुशब्दात्सूत्रतो वेदपुरुषेण च गणिना प्रकृतं ॥ ७३७ ॥ उक्तं पुरुषद्वा० ६ ' निक्खे '

**णिक्खेवो कारणंमी, चउव्विहो दुविहु होइ दव्वंमि । तद्दव्वमण्णदव्वे, अहवावि णिमित्तनेमित्ती ॥७३८॥**

नाम १ स्थापना २ द्रव्य ३ भावभेदात् ४ चतुर्द्धा कारणे निक्षेपः । तत्रापि ज्ञशरीरभव्यशरीरव्यतिरिक्ते द्रव्यकारणे द्विधा निक्षेपः । ' तद्द० ' तद्द्रव्यकारणं अन्यद्रव्यकारणं च, तस्य घटपटादेरेव द्रव्यं तद्द्रव्यं तन्त्वादि तदेव कारणं अन्यद्रव्यं वेमादि २, यद्वान्यथा द्विधा कारणं निमित्तकारणं नैमित्तिककारणं च । तत्र पटस्य निमित्तकारणं तन्तवो नैमित्तका-

रणं वेमादि, पटनिमित्तं तन्तुगतातानादिगतचेष्टानां कारणत्वात् ॥ ७३८ ॥ ' सम '

**समवाइ असमवाई, छव्विह कत्ता य कम्म करणं च। तत्तो य संपयाणापयाण तह संनिहाणे य ॥७३९॥**

यद्वाऽन्यथा द्विधा कारणं । समवायिकारणं असमवायिकारणं च, सं एकीभावेनावायोऽपृथग्गमनं समवायः संश्लेषस्तद्युक् समवायिकारणं, यथा तन्तवः यतस्तेषु पटं समवैतीति । असमवायिकारणं च वेमादि २ । अर्थभेदेऽनेकधा कारणद्वयकल्पना तंत्रातराभ्युपगमज्ञस्यै, यद्वा षड्विधं कारणं यथा कर्त्ता घटस्य कुलालः १, करणं दण्डादि २, कर्म्म तन्निष्पादिका क्रिया ३, सम्प्रदानं यस्मै क्रियते ४ अपादानं मृत्पिण्डः ५, सन्निधानं आधारः चक्रं ६ ॥ ७३९ ॥ ' दुवि '

**दुविहं च होइ भावे, अपसत्थ पसत्थगं च अपसत्थं। संसारस्सेगविहं, दुविहं तिविहं च नायव्वं ॥७४०॥**

भाव औदयिकादिरेव कारणं । भावकारणं द्विधा अप्रशस्तं प्रशस्तं च । तत्राप्रशस्तं संसारस्य हेतुः, तच्चैकविधादि स्यात्, चशब्दाच्चतुर्विधाद्यपि ॥ ७४० ॥ ' अस्सं '

**अस्संजमो य एक्को, अण्णाणं अविरई य दुविहं तु । अण्णाणं मिच्छत्तं च अविरती चेव तिविहं तु ॥७४१**

असंयमोऽविरतिरित्येकविधं संसारकारणं, तथा कषायेन्द्रियादि चतुर्विधाद्यपि संसारकारणं स्यात् ॥ ७४१ ॥ ' होइ '

**होइ पसत्थं मोक्खस्स, कारणं एगदुविहातिविहं वा। ते चेव य विवरीय, अहिगारो पसत्थएणेत्थं॥७४२॥**

' तं चेव ' तत् असंयमादि विपरीतं, संयमादि मोक्षकारणं ॥७४२॥ अत्रैव द्वारे पूर्वार्द्धे शिष्यपृच्छा उत्तरार्द्धे उत्तरं । 'तित्थ

तित्थयरो किं कारण, भासइ सामाइयं तु अज्झयणं?। तित्थयरणामगोत्तं, कम्मं मे वेइयव्वंति ॥७४३॥

तीर्थंकरनामकर्म्म बद्धं मे वेदितव्यं इति हेतोः ॥ ७४३ ॥ अत्रापि प्रश्नमुत्तरं चाह । 'तं च'

तं च कहं वेइज्जइ? अगिलाए धम्मदेसणाईहिं। वज्झइ तं तु भगवओ, तइयभवोसक्कइत्ता णं ॥७४४॥

तत् कथं वेद्यते? उच्यतेऽग्लान्या धर्मदेशनादिभिः इत्यादि प्राग्वत् ॥ ७४४ ॥ 'णिय' 'गोय'

णियमा मणुय गतीए, इत्थी पुरिसेयरोव सुहलेसो। आसेवियबहुलेहिं, वीसाए अण्णयरएहिं ॥७४५॥

गोयममाई सामाइयं, तु किंकारणं निसामिन्ति?। णाणस्स तं तु सुंदरमंगुलभावाण उवलद्धी ॥७४६॥

अत्रोत्तरं । 'नाणस्स' ज्ञानाय । तत्तु ज्ञानं सुन्दराः शुभा मंगुला अशुभास्तेषां भावानामुपलब्धये स्यात् ॥ ७४५-७४६ ॥ 'होइ'

होइ पवित्तिनिवित्ती, संजमतवपावकम्मअग्गहणं। कम्मविवेगो य तहा, कारणमसरीरया चेव॥७४७॥

शुभाशुभज्ञानाच्च शुभे प्रवृत्तिरशुभे निवृत्तिश्च स्यात्। तत्र प्रवृत्तेस्तपो जायते, निवृत्तेश्च संयमः, संयमाच्च पापकर्म्माग्रहणं, तपसस्तु कर्म्मविवेकः कर्म्मपृथग्भावः, स च कारणं, कार्यं त्वशरीरता। अत्र संयमस्य तपसः प्रागुपादानं नवकर्म्मरोधित्वात्प्राधान्यख्यप्त्यै ॥ ७४७ ॥ एतदेवाह 'कम्म'

कारण-
द्वारम् ॥

**कम्मविवेगो असरीरयाय, असरीरया अणाबाहा । होअणबाहनिमित्तं, अवेयणमणाउलो निरुओ ॥७४८**

कर्म्मविवेकोऽशरीरताया हेतुः, सा चाऽनाबाधाया हेतुः, अनाबाधानिमित्तं अवेदनं वेदनाया अभावो भवति । अनाबाधैव निमित्तं यस्येति, ततो जीवोऽनाकुलः, ततो नीरुक् ॥ ७४८ ॥ 'नीरु'

**नीरुयत्ताए अयलो, अयलत्ताए य सासओ होइ । सासयभावमुवगओ, अव्वाबाहं सुहं लहइ ॥७४९॥**

नीरुक्तयाऽचलः स्यात्, अचलतया शाश्वतः स्यात् ॥ ७४९ ॥ गतं कारणद्वारं ७ । 'पच्च'

**पच्चयणिक्खेवो खलु, दव्वंमी तत्तमासगाइओ । भावंमि ओहिमाई, तिविहो पगयं तु भावेणं ॥७५०॥**

प्रत्ययः प्रतीतिस्तन्निक्षेपः प्राग्वत् । द्रव्ये तप्तमापकादिः द्रव्यमेव प्रत्यायकत्वात्प्रत्ययः, द्रव्याद्वा प्रत्ययः, एवं भावेऽपि अवध्यादि अवधिमनःपर्यायकेवलरूपस्त्रिविधः प्रत्ययः जीवप्रत्यक्षत्वात् ॥ ७५० ॥ अत एवाह 'केव'

**केवलणाणित्ति अहं, अरहा सामाइयं परिकहेई । तेसिंपि पच्चओ खलु, सव्वण्णू तो निसामिंति ॥७५२॥**

केवलज्ञान्यहमिति स्वप्रत्ययादर्हन् प्रत्यक्षत एव सामायिकार्थं ज्ञात्वा परिकथयति । तेषां श्रोतॄणां हृत्स्थसंशयच्छित्त्या प्रत्ययः सर्वज्ञोऽयमिति, ततोऽर्हदुक्तं निशामयन्ति श्रुण्वन्ति ॥ ७५१ ॥ प्रत्ययद्वा० ८ 'नामं' 'वीरि'

**नामं ठवणा दविए, सरिसे सामण्णलक्खणागारे । गइरागइ णाणत्ती, निमित्त उप्पाय विगमे य ॥७५३॥**

**वीरियभावे य तहा, लक्खणमेयं समासओ भणियं। अहवावि भावलक्खण, चउविहं सद्दहणमाई ॥**

लक्षण-द्वारम् ॥

नामलक्षणं, स्थापनालक्षणं, द्रव्यलक्षणं, सादृश्यलक्षणं, सामान्यलक्षणं, आकारलक्षणं, गत्यागतिल०, नानात्वल०, निमित्तल०, उत्पादल०, विगमल०, वीर्यल०, भावल०। तत्र द्रव्यल० यद्यस्य धर्म्मादिद्रव्यस्य स्वरूपं गतिलक्षणादि। सादृश्यल० यथायं घटस्तथान्योऽपि। सामान्यल० द्विधा अनर्पितं अर्पितं च, तत्रानर्पितं अविशिष्टं यथासिद्धः सर्वोऽप्यमूर्त्तत्वादिनाऽन्यसिद्धैः समः १। अर्पितं तु विशिष्टं यथैकसमयसिद्ध एकसमयसिद्धेनैव समो नान्येन २। आकारल० आकारेङ्गितगत्यादिभिर्मनोगतभावलक्षणं। द्वयोः पादयोर्विशेषणविशेष्ययोरनुलोमगमनं गतिः, प्रतिलोमागमनमागतिस्ताभ्यां ते एव वा लक्षणं गत्यागतिलक्षणं चतुर्धा पूर्वपदव्याहृतं १ उत्तरपदव्याहृतं २ उभयपदव्याहृतं ३ उभयपदाव्याहृतं च ४ तत्र पूर्वपदव्याहृतं यथा रूपी घटः किं वा घटो रूपी, अत्र रूपी घटादन्योऽपि स्यात् घटस्तु रूप्येव। उत्तरपदव्याहृतं यथा जीवति, जीवः किं वा जीवो जीवति अत्र जीवति स जीव एव। जीवस्तु जीवति नो वा, सिद्धानां प्राणाभावेन जीवनाभावात् २। एवं उभयपदव्याहृतं नीलोत्पलं ३। उभयपदाव्याहृतं आत्मा ज्ञानी ४। नानात्वलक्षणं स्वैरन्यैश्च द्रव्यक्षेत्रकालभावैर्भिन्नता। तत्र स्वैर्द्रव्यैर्यथा अणूनामन्योऽन्यं नानात्वं १। अन्यैस्तेषामेव द्व्यणुकादिभिः नानात्वं २। एवं एकादिप्रदेशावगाढैकादिसमयस्थित्येकादिगुणशुक्लानां स्वैरन्यैश्च नानाता ज्ञेया नानाताया लक्षणत्वं पदार्थस्वरूपावस्थापकत्वात्। निमित्तमेव शुभाशुभयोर्लक्षणं निमित्तलक्षणं, तद्दिव्याद्यष्टधा, उत्पाद एव लक्षणं यतो नानुत्पन्नं वस्तु लक्ष्यते। एवं विगमो विनाशोऽपि, यतो न वक्रतयाऽविनष्टमङ्गुलिद्रव्यं ऋजुतयोत्पद्यते। ध्रौव्यलक्षणं तु द्रव्यलक्षणाभिधानेनैवोक्तं ध्रुवत्वद्रव्ययोरैकार्थ्यात्, षड्द्रव्याणामपि च द्रव्यत्वेन कदाप्यविनाशाच्च।

वीर्यमेव लक्षणं यथौषधादीनां सामर्थ्यं स्वयमेव स्वनामज्ञापकं यथा ज्वरारि नागदमन्यादि । भावानां लक्षणं यथा उदयलक्षण औदायिकः १ उपशमलक्षण औपशमिकः २ अनुत्पत्तिलक्षणः क्षायिकः ३ मिश्रलक्षणः क्षायोपशमिकः ४ परिणामलक्षणः पारिणामिकः ५ एतत्संयोगलक्षणः सांनिपातिकः ६ 'अह०' भावः सामायिकं तस्य सम्यक्त्व १ श्रुत २ सर्व ३ देशविरति ४ भेदाचतुर्विधस्य क्रमाल्लक्षणं चतुर्विधं श्रद्धानादि पुरो वक्ष्यमाणं स्यात् ॥ ७५२–५३ ॥ 'सद्द'

**सद्दहण जाणणा खलु, विरती मीसा य लक्खणं कहए । तेऽवि णिसामिंति तहा, चउलक्खणसंजुयं चेव ॥**

श्रद्धानं सम्यक्त्वस्य लक्षणं १ ज्ञानं श्रुतस्य २ विरतिश्चारित्रस्य ३ मिश्रा विरताविरतिर्देशविरतेः, एवमर्हन् कथयति । तेऽपि गौतमाद्याः चतुर्लक्षणयुक्तं शृण्वन्ति । यथार्हन् वक्ति तथैव श्रोतॄणां परिणमति नान्यथेत्यर्थः ॥७५४॥ लक्षणद्वा० ९ । 'नेग'

**णेगमसंगहववहारउज्जुसुए चेव होइ बोद्धव्वे । सद्दे य समभिरुढे, एवंभूए य मूलणया ॥ ७५५ ॥**

नैकगमः १ सङ्ग्रहः २ व्यवहारः ३ ऋजुसूत्रः ४ शब्दः ५ समभिरूढः ६ एवम्भूतः ७ एते सप्त मूलनयाः ॥७५५॥ 'णेगे'

**णेगेहिं माणेहिं, मिणइत्ती णेगमस्स णेरुत्ती । सेसाणंपि णयाणं, लक्खणमिणमो सुणेह वोच्छं ॥७५६॥**

अनन्तधर्म्मात्मकं वस्त्वेकधर्म्मेण नयतीति नयः । नैकैर्मानैर्ज्ञानैर्मिनोति मन्यते स नैकगमो नैयायिकदर्शनं । स च सर्वं सदिति सर्वार्थानां सत्त्वेन समत्वज्ञापकं महासामान्यं, द्रव्यत्वगोत्वादिः स्वस्वजातिसाम्यहेतुरवान्तरसामान्यं, अन्योन्यव्यावृत्तिहेतुं च विशेषं परमाणुमिति त्रिकमपि मन्यते । नन्वेवमसौ सम्यग्दृष्टिः ? नैवम्, त्रयाणामत्यन्तभेदेनाभ्युपगमात् ।

यत्र निगमाः पदार्थबोधास्तेषु भवो नैगमः। यथा क्व त्वं तिष्ठसीति पृष्टो लोकेऽत्राऽपि तिर्यग्लोके एवं नृक्षेत्रे आद्यद्वीपे भरतक्षेत्रे अमुकदेशे पुरे पाटके वसतौ पट्टे आकाशप्रदेशेषु देहे तिष्ठामीति विकल्पान् सर्वान्। तथा प्रस्थो धान्यमानं। तथा कतिनयोग्यकाष्ठं वृक्षावस्थायां ततस्तच्छिन्नं, स्कन्धे कृतं, गृहानीतमित्यादि निष्पत्तिं यावत् सर्वावस्थासु प्रस्थकं। तथा कतिनिवृत्तायातेषु ग्रामोऽस्मावित्यादिवाक्यविशेषांश्चेच्छेत् ॥ ७५६ ॥ 'संग'

संगहियपिंडियत्थं, संगहवयणं समासओ बेंति। वच्चइ विणिच्छियत्थं ववहारो सव्वदव्वेसु ॥७५७॥

पिण्डितः सत्ताख्यधर्मेण एकजातिमापन्नः सामान्यरूपोऽर्थः पिण्डितार्थः स सङ्ग्रहीतो येन तत्। सङ्ग्रहनयस्य साङ्ख्यमीमांसकादेस्तस्य वचनं ब्रुवते अर्हन्तः। तथा स चैवं ब्रूते घटादिविशेषाः सत्त्वाद् भिन्ना अभिन्ना वा, अभिन्नाश्चेत्तदा सामान्यमेव, भिन्नाश्चेत्तर्ह्यवस्तु असत्त्वात्। 'वच्चइ' व्रजति व्यवहारनयश्चार्वाकमतः सर्वद्रव्येषु निराधिक्येन चयो निश्चयः सामान्यं, विगतो निश्चयो विनिश्चयः सामान्याभावस्तदर्थं, कोऽर्थः द्रव्येषु विशेषानेव गच्छति। यथाऽऽम्रादिविशेषेभ्यः पृथग् वृक्षत्वादिसामान्यं नास्ति अनुपलम्भात् व्यवहारासाधकत्वाच्च। यद्वा विनिश्चयार्थं सर्वलोकव्यवहारार्थं यथाऽलिं पञ्चवर्णमपि श्यामसेवेच्छेत् ॥ ७५७ ॥ 'पच्चु'

पच्चुप्पण्णग्गाही उज्जुसुओ, नयविही मुणेयव्वो। इच्छइ विसेसियतरं, पच्चुप्पण्णं णओ सद्दो ॥७५८॥

प्रत्युत्पन्नग्राही ऋजुसूत्रः। यथा प्रत्युत्पन्नं वर्त्तमानमेव वस्तु क्षणिकं नातीतमेष्यं च तयोर्विनष्टानुत्पन्नत्वेनावस्तु-

त्वात् । तदपि स्वं वस्तु नान्यदीयं निष्फलत्वात् । तच्च तटस्तटी तटं इति लिङ्गैः, आपोऽम्बुइत्यादिर्वचनैर्नामस्थापनाद्रव्यभावैश्च भिन्नमप्येकमेव गृह्णाति । अतीतादिवक्रत्यागादृजु सूत्रयतीति ऋजुसूत्रो नयविधिर्नयमार्गः, एष बौद्धः । अमी चत्वारो द्रव्यनयाः । अथ पर्यायनया वैयाकरणाद्दताः । 'इच्छइ' नामस्थापनाद्रव्यवर्जं तुल्यलिङ्गवचनस्वपर्यायध्वनिवाच्यं । अत एव विशेषिततरं प्रत्युत्पन्नं शब्दनय इच्छति यथेन्द्रः शक्रो हरिरित्याद्येकं एकार्थवाचित्वात्, न तु तटस्तटीत्यादि ॥७५८॥ 'वत्थू'

**वत्थूओ संकमणं, होइ अवत्थू णए समभिरूढे । वंजणमत्थतदुभयं, एवंभूओ विसेसेइ ॥७५९॥**

वस्तुनो घटाख्यस्यान्यत्र कुटाख्यादौ सङ्क्रमणं अवस्तु असदित्यर्थः समभिरूढे नये मतं, 'घटि चेष्टायां' 'कुटि कौटिल्ये' 'उभ पूरणे' इत्यादिना घटकुटकुम्भादीनां भिन्नभिन्नप्रवृत्तिनिमित्तत्वात् भिन्नवस्तुत्वं घटपटादिवत् । 'वंज' एवम्भूतो नयः व्यञ्जनं शब्दः अर्थस्तद्वाच्यं तद्रूपमुभयं, को भावः, शब्दं अर्थेनार्थं च शब्देन विशेषयति । यथा चेष्टया घटशब्दं, घटशब्देन च चेष्टां, ततः शिरस्थश्चेष्टते तदा घटो नान्यदा चेष्टायोगेन स्वस्वरूपान्तराद् वस्त्वन्तरापत्तेः, एवम्भूतार्थवादित्वादेवम्भूतः । एषु परः परः सूक्ष्मविषयः ॥ ७५९ ॥ 'जावइया वयणपहा तावइया हुंति नयवाया' इत्यस्ति, तथापि रूढ्या 'एक्के'

**एक्केक्को य सयविहो, सत्त णयसया हवंति एमेव। अण्णोऽवि य आएसो, पंचेव सया नयाणं तु॥७६०॥**

अन्योऽपि चादेशः यथा ५०० । तत्र शब्दादीनामैक्यात् नैगमः १ सङ्ग्रहः २ व्यवहारः ३ ऋजुसूत्रं ४ शब्द ५ इति ।

नयाः ॥

अपिशब्दात्संगमस्य सङ्ग्रहव्यवहारयोः प्रवेशात् ६००, सङ्ग्रहव्यवहारऋजुसूत्रशब्दाद्येकनयैः ४००, द्रव्यपर्यायनयाभ्यां तु

२०० ॥ ७६० ॥ 'एए'

एएहिं दिट्ठिवाए, परूवणा सुत्तअत्थकहणा य। इह पुण अणब्भुवगमो, अहिगारो तिहि उ ओसन्नं॥

एतैर्नयैर्दृष्टिवादे पूर्वेषु सर्ववस्तूनां प्ररूपणा सूत्रार्थकथना वासीत्। इह पुनः कालिकश्रुते तेषामनभ्युपगमो नावश्यं

नयैर्व्याख्या। किन्तु श्रोत्रपेक्षया उत्पन्नं प्रायस्त्रिभिराद्यैरधिकारः ॥ ७६१ ॥ 'णत्थि'

णत्थि णएहिं विहूणं, सूत्तं अत्थो व जिणमए किंचि। आसज्ज उ सोयारं, णए णयविसारओ बूया॥७६२॥

आसाद्य प्राप्य तु श्रोतार नयान् नयविशारदो नयदक्षः ॥ ७६२ ॥ नयद्वा० १०। अथ समवतारणा 'मूढ'

मूढनइयं सुयं, कालियं तु ण णया समोयरंति इहं। अपुहुत्ते समोयारो, नत्थि पुहुत्ते समोयारो॥७६३॥

मूढा गूढा नया यस्मिंस्तन्मूढनयकं। काले प्रथमचरमपौरुष्योः पठ्यते इति कालिकं आचाराङ्गादि। 'इहं' अत्र नया न

समवतरन्ति सन्तोऽपि नोच्यन्ते। प्रायः अपृथक्त्वे चरणकरण १ धर्म्मकथा २ गणित ३ द्रव्यानुयोगानां ४ प्रतिसूत्रमविभागे

समवतारोऽभूत्। यत्रैक एवानुयोगो भण्यते नान्ये सन्तोऽपि तत् पृथक्त्वं, तत्र नास्ति समवतारः ॥ ७६३ ॥ 'जावं'

जावंति अज्जवइरा, अपुहुत्तं कालियाणुओगस्स। तेणारेण पुहुत्तं, कालियसुअ दिट्ठिवाए य ॥७६४॥

यावदार्यवज्रा गुरवस्तावदपृथक्त्वं, कालिकोपलक्षणादुत्कालिकस्यापि। तत आरत आरभ्य पृथक्त्वं विभागः कालि-

कश्रुते दृष्टिवादे चाभूत् ॥ ७६४ ॥ समवतारणाद्वारमध्य एव श्रीवज्रोत्पत्तिप्रमुखविस्तरमाह 'तुम्ब'

**तुंबवणसंनिवेसाओ, निग्गयं पिउसगासमल्लीणं। छम्मासियं छसु, जयं माऊयसमन्नियं वंदे ॥७६५॥**

तुम्बवनारण्यसंनिवेशान्निर्गतं तत्र जातमित्यर्थः। जातजातिस्मृतिं मात्रा दीक्षितुः पितुरर्पणे षाण्मासिकं पितृसकाशं आलीनं साधिकवर्षत्रिकादनु राजकुलव्यवहारे धर्म्मध्वजादानादनु दीक्षायां षट्सु कायेषु यतं संयतं, आत्तदीक्षया मात्रा समन्वितं 'शकुनस्वरात् सचित्ता भिक्षाऽद्याऽऽनेया इति गुरूक्त्या' साधुनाऽऽनीय गुरुहस्तेऽर्पितं। वज्रवद्भारात् वज्राख्यं, वन्दे इति श्रीभद्रबाहूक्तं चेत्तदा सर्वसाधुवत्। यदि च पाश्चात्येन केनाप्युक्तं तथा तथास्तु। श्रुतकेवलिनो भविष्यमपि दिशन्ति तेन न संशयः। श्रीसिंहगिरिणा साधूनां ज्ञप्त्यै स्वयं ग्रामं याता कर्णश्रुत्याऽऽनायितं श्रुतं योगवाचनयोरभावेऽपि वैरेण साधवो भणिताः स्वयं ग्रामं गताः आयातैः साधूनां स्तुतिं श्रुत्वोत्सारकल्पेन सूत्रार्थपौरुषीभ्यां वैरः सर्वश्रुतमनुज्ञापितः परं अर्थपौरुष्यां गुरोरपि सन्देहो भग्नो वैरेण ॥ ७६५ ॥ 'जो गु'

**जो गुज्झएहिं बालो, णिमंतिओ भोयणेण वासंते। णेच्छइ विणीयविणओ, तं वइररिसिं णमंसामि॥७६६॥**

उज्जयिन्यां गुह्यकैर्जृम्भिकैर्देवैर्भोजनेन प्रासुककूष्माण्डफलरूपेण वर्षति मेघे निमन्त्रितो द्रव्यतः कूष्माण्डफलं, क्षेत्रत उज्जयिनी, कालत प्रथमप्रावृट् भावतो निर्निमेषा भुव्यलग्नपादा हृष्टदेहा दातारस्तत इदं सर्वमसम्भवि इत्युपयुक्तो देवान् ज्ञात्वा नेच्छति, विनीतोऽभ्यस्तो विनयो येन। तदा च देवैर्वैक्रियविद्या दत्ता ॥ ७६६ ॥ 'उज्जे'

श्रीवज्र-
वृत्तान्तः ॥

सींहगिरिपसंसियं वंदे॥७६७॥
उज्जेणीए जो जंभगेहिं, आणक्खिऊण थुयमहिओ। अक्खीणमहाणसियं,
बहिर्भूमौ गतो जृम्भिकदेवैर्दीयमानघृतपूरानुपयोगादनिच्छन्, 'आणक्खिउण' परीक्ष्य स्तुतः नभोगामिविद्यादानेन
महितः, तं अक्षीणमहाणसीक्षीराश्रवादिलब्धिवन्तं सींहगिरिगुरुणा पदानुसारिलब्धित्वात् साधुवाचनाक्षणे स्वसंशयछेत्तृत्वाच्च
शंसितं ॥ ७६७ ॥ 'जस्स'
जस्स अणुन्नाए, वायगत्तणे दसपुरंमि नयरंमि। देवेहिं कया महिमा, पयाणुसारिं नमंसामि ॥७६८॥
दशपुरे सिंहगिरिणोद्दिष्टो गुरोरल्पदृष्टिवादत्वादुज्जयनीस्थभद्रगुप्तगुर्वन्तिके दशपूर्वाण्यधीत्य, यैर्दृष्टिवाद उद्दिष्टस्तैरेवा-
नुज्ञातव्य, इति पुनर्दशपुरागतस्य सिंहगिरिणाऽनुयोगेऽनुज्ञाते वाचकत्वे सूरित्वे स्थापिते देवैर्महिमा कृतः ॥ ७६८ ॥ इतश्च
पाटलीपुरे प्रभुगुणान् श्रुत्वा धनगृहपतिपुत्र्याऽचिन्ति पतिश्चेत्तदा स एवान्यथा तत्करेण दीक्षा। अथ तत्रागतः प्रभुः क्षीरा-
श्रवलब्ध्या व्याख्याति, परं मा प्रार्थनीयोऽभूवमिति सामान्यं रूपं बिभर्त्ति ततो जनेनोक्तं अहो प्रभुः सुस्वरः परं नीरूप-
स्ततः प्रभुणा लब्धदलाब्जस्थं स्वं देवाधिकरूपं दर्शितं। ततः सर्वो हृष्टस्तदा च 'जो क'
जो कन्नाइ धणेण य, निमंतिओ जुव्वणंमि गिहवइणा। नयरम्मि कुसुमनामे, तं वइररिसिं नमंसामि ॥
कुसुमनाम्नि पाटलिपुरे धनगृहपतिना कन्यया धनकोटीभिश्च निमन्त्रितः। वज्रेण तु कन्या प्रबोध्याऽदीक्षि ॥७६९॥ 'जेणु'
जेणुद्धरिया विज्जा, आगासगमा महापरिन्नाओ। वंदामि अज्जवइरं, अपच्छिमो जो सुअहराणं ॥७७०॥

आचाराङ्गे सप्तममहापरिज्ञाध्ययनात् विद्योद्धृता। आकाशे गमनं गमो यस्यां, अपश्चिमो दशपूर्वश्रुतधराणाम् ॥७७०॥ 'भण'

**भणइ अ आहिंडिज्जा, जंबुद्दीवं इमाइ विज्जाए। गंतुं च माणुसनगं, विज्जाए एस मे विसओ ॥७७१॥**

श्रीवज्रो भणति नरोऽनया विद्यया जम्बूद्वीपं आहिण्डेत पर्यटेत् मानुषाद्रिं च गत्वा तिष्ठेत्, एष मे विद्याया अतिशयः ॥ ७७१ ॥ 'भण'

**भणइ अ धारेअव्वा, नहु दायव्वा इमा मए विज्जा। अप्पिड्ढिया उ मणुआ, होहिंति अओ परं अन्ने ॥७७२॥**

शासनहिताय धार्या अल्पर्द्धयोऽगम्भीरत्वात् अतः परं, तुरेवार्थः। वज्रो दुर्भिक्षे साधून् पटे उपवेश्य पुरीपुर्यां गतः ॥ ७७२ ॥ 'माहे'

**माहेसरीउ सेसा, पुरिअं नीआ हुआसणगिहाओ। गयणयलमइवइत्ता, वइरेण महाणुभागेण ॥७७३॥**

तत्र बौद्धेन राज्ञा पर्युषणायां अर्हच्चैत्ये पुष्पदाने निषिद्धे सङ्घाग्रहाच्छासनोन्नत्यै माहेश्वरीपुर्यां हुताशनव्यन्तरगृहात् पितृमित्रदेवार्चकार्पितानि 'सेस'त्ति पुष्पाणि कुम्भमानानि हिमाद्रिवासिलक्ष्मीदत्तार्हत्पूजार्थानीताब्जं क्षिप्त्वा विमानं विकुर्व्याब्जवृन्ते उपविश्य जृम्भकोपास्यमानेन गगनतलं व्यतीत्य पुर्यां नीतानि। एवं स विहरन् श्रीमालं गतः। एवं (आर्यवज्राः) यावदपृथक्त्वमासीत् ॥ ७७३ ॥ 'अ पु'

**अपुहुत्ते अणुओगो, चत्तारि दुवार भासई एगो। पुहत्ताणुओगकरणे, ते अत्थ तओ उ वुच्छिन्ना ॥७७४॥**

श्रीआर्य-
रक्षित-
वृत्तान्तः॥

अपृथक्त्वे एकोनुयोगश्चत्वारि चरणधर्म्मकालद्रव्याख्यानि द्वाराणि भापते, सर्वेपामपि गृह्यमाणत्वात् 'पुहु०' अनुयोग-
पृथक्त्वकरणे तेऽर्थाश्चरणादयोऽधिकृतार्थं विना ततः पृथक्त्वादुव्यवच्छिन्नाः ॥ ७७४ ॥ 'देविं'

**देविंदवंदिएहिं, महाणुभागेहिं रक्खिअअज्जेहिं। जुगमासज्ज विभत्तो, अणुओगो तो कओ चउहा॥७७५॥**

मथुरायां व्यन्तरैर्न्ये निगोदपृच्छायां देवेन्द्रवन्दितैर्महानुभागैर्महाभाग्यैरक्षितार्यैर्दुर्वलिकापुष्पमित्रं नवपूर्विणं प्राज्ञ-
मप्यनुयोगानिगुपिलत्वाद्विस्मृतसूत्रार्थं दृष्ट्वा युगं कालहीनमासाद्य शासनहिताय विभक्तोऽनुयोगश्चतुर्द्धा कृतः। कृत इत्यतीतः
कालः, प्राग्भणतीति वर्त्तमानः, 'निमंतिओ' अतीतस्तवः, पश्चात्केनापि गाथाः कृतास्तद्वृत्त्यादिषु न दृश्यन्ते, श्रीभद्रबाहुनैवोक्तं
स्यात्तदा विचित्रा सूत्राणां कृतिरिति । यतः श्रीवीरेण वैरभव उक्तोऽभूत्। रक्षितस्यापीन्द्ररूपपरावर्त्तद्वारपरावर्त्तसुगन्ध-
गृहादि कालकाचार्यवद् ज्ञेयं ॥ ७७५ ॥ अतस्तस्योत्पत्तिमाह 'माया' 'निज्ज'

**माया य रुद्दसोमा, पिआ य नामेण सोमदेवुत्ति। भाया य फग्गुरक्खिअ, तोसलिपुत्ता य आयरिया॥७७६**
**निज्जवण भद्दगुत्ते, वीसुं पढणं च तस्स पुव्वगयं। पव्वाविओ य भाया, रक्खिअखवणेहिं जणओ अ॥७७७**

सोमदेवरुद्रसोमासुतो रक्षितविप्रः। फल्गुरक्षितः भ्राता। स सर्वविद्या अधीत्यागतो मात्रा सावद्यशास्त्राण्यधीतानीति
भर्त्सितस्तोसलिपुत्राचार्यान्तिके प्रव्रज्याङ्गान्यधीत्य गुरोर्यावन्नायाति तावन्तं दृष्टिवादं चारभ्य शेषमध्येतुं गुर्वादिशाद् व्रजन्नन्तरा
उज्जयिन्यां भद्रगुप्ताचार्याणां निर्यामणां कारयन्तस्तैर्वज्रस्वामिना समं मा वात्सीत् यतस्तैः सममेकरात्रिमपि वस्ता स

सौभाग्यात्तैः समं म्रियते इत्युक्ते 'तस्स'त्ति वज्रस्य पार्श्वे विष्वग् वसतिस्थः २४ जविकाधिकनवपूर्वगतं पठनं चक्रे। रक्षितक्षपणैरार्यरक्षितैराह्वानागतो भ्राता प्रव्राजितस्ततो दशपुरं गत्वा जनकः चशब्दाद् गोष्ठामाहिलादिस्वजनोऽपि ॥ ७७६-७७ ॥ तैरनुयोगपृथक्त्वं कृतं यथा 'कालि'

**कालियसुयं च इसिभासियाइं तइओ य सुरपण्णत्ती। सव्वो य दिट्ठिवाओ, चउत्थओ होइ अणुओगो॥**

कालिकश्रुतं एकादशाङ्गरूपं कालग्रहणैर्निर्वृत्तं कालिकं प्रथमश्चरणकरणानुयोगः १ ऋषिभाषितान्युत्तराध्ययनादीनि द्वितीयो धर्म्मकथानुयोगः २ सूर्यप्रज्ञप्त्यादिस्तृतीयः कालानुयोगः गणितानुयोगाख्यः ३ 'सव्वो' प्रमाणादिभिर्जीवानां तथा धातुमणिमुक्तादीनां च द्रव्याणां सिद्धिहेतुत्वाद्द्रव्यानुयोगः ॥१२४॥ 'जं च'

**जं च महाकप्पसुयं, जाणि य सेसाणि छेयसुत्ताणि। चरणकरणाणुओगोत्ति, कालियत्थे उवगयाइं॥७७८**

महाकल्पश्रुतं व्युच्छिन्नं, यानि च शेषाणि छेदसूत्राणि कल्पादीनि एष चरणकरणानुयोग इति कालिकार्थे उपगतानि कालिकश्रुतान्तर्भूतानीत्यर्थः ॥ ७७८ ॥ अथ श्रीरक्षितेषु स्वर्गतेषु तन्मातुलो गोष्ठामाहिलः सप्तमो निह्नवोऽभूदित्यधिकारादन्यनिह्नवानप्याह 'बहु'

**बहुरय पएस अव्वत्त, समुच्छ दुग तिग अबद्धिया चेव। सत्तेए णिण्हगा खलु तित्थंमि उ वद्धमाणस्स॥**

बहुरता नैकसमयेन वस्तूत्पद्यते किन्तु बहुभिः समयैस्तन्निष्पत्तिं यातीति बहुसमयरताः १। प्रदेशा अन्त्यप्रदेशवादिनो

गयात्मनः सर्वप्रदेशेऽवन्त्यप्रदेशो जीवः २ अव्यक्ताः संयताऽसंयताद्यवगमे सन्दिग्धाः ३ सामुच्छेदा उत्पत्त्यनन्तरमेवोच्छेदवादिनः ४ द्वैक्रिया एकसमये क्रियाद्वयानुभाववादिनः ५ त्रैराशिकाः जीवाजीवनोजीवरूपत्रिराशिवादिनः ६ अबद्धिकाः स्पृष्टकर्म्मवादिनः ७ निह्नुवते जिनोक्तमिति निह्नवाः ॥ ७७९ ॥ ' बहु '

बहुरय जमालिपभवा, जीवपएसा य तीसगुत्ताओ। अवत्ताऽऽसाढाओ, सामुच्छेयाऽऽसमित्ताओ॥७८०॥

बहुरता निह्नवा जमालिप्रभवा जमालेरुत्पन्नाः१,जीवप्रदेशास्तु तिष्यगुप्तात् २,अव्यक्ता आषाढात् ३ सामुच्छेदा अश्वमित्रात् ४ ॥ ७८८ ॥ ' गंगा '

गंगाओ दोकिरिया, छलुगा तेरासियाण उप्पत्ती। थेरा य गोट्ठमाहिल, पुट्ठमबद्धं परूविंति ॥७८१॥

द्वैक्रिया गंगनामसूरेः ५ त्रैराशिकानां षडुलूकादुत्पत्तिः ६ स्थविरा इति संयमपर्यायमाश्रित्य पुरा ज्येष्ठाः स्पृष्टं अबद्धं च कर्म्म प्ररूपयन् तेन तेऽबद्धिकाख्याः ॥ ७८१ ॥ ' साव '

सावत्थी उसभपुरं, सेयविया मिहिल उल्लुगातीरं। पुरिमंतरंजि दसपुर, रहवीरपुरं च नगराइं ॥७८२॥

श्रावस्ती, मिथिला, उल्लुकानदीतीरं, अन्तरंजिकापुरी, दशपुरं। एतानि निह्नवोत्पत्तिनगराणि। रथवीरपुरं वक्ष्यमाणबोटिकानामुत्पत्तिपुरं ॥ ७८२ ॥ ' चोद्द '

चोद्दस सोलस वासा, चोद्दस वीसुत्तरा य दोण्णि सया। अट्ठावीसा य दुवे, पंचेव सया उ चोयाला ७८३

१४-१६ वर्षाणि । 'चौद' इत्यादि द्वे शते क्रमात् चतुर्दशभिर्विंशत्या चाधिके २१४-२२० इत्यर्थः । 'अट्ठावीसे'त्यादि अष्टाविंशाधिके द्वे शते २२८ इत्यर्थः, ५४४ ॥ ७८३ ॥ 'पंच'

**पंचसया चुलसीया, छच्चेव सया णवोत्तरा हौंति । णाणुप्पत्तीय दुवे, उप्पण्णा णिव्वुए सेसा ॥७८४॥**

पञ्चशतानि चतुरशीत्यधीकानि यदा गतानि तदा सप्तमो निह्नवोऽभूत् । ६०९ वर्षाणि गतानि तदा बोटिका जाताः । श्रीवीरज्ञानोत्पत्तेरारभ्य यावत् १४-१६ वर्षाण्यगुः तदा द्वौ निह्नवौ उत्पन्नौ शेषास्तु प्रभौ निर्वृते मुक्तिं गते सति ।७८४। 'चोद्द'

**चोद्दस वासाणि तया, जिणेण उप्पाडियस्स णाणस्स । तो बहुरयाण दिट्ठी, सावत्थीए समुप्पण्णा ॥१२५॥**

ध्यानादिनोत्पादितस्य ज्ञानस्य चतुर्दश वर्षाण्यतीतानि ततो दृष्टिर्मतं ॥ २५५ ॥ 'जेट्ठा'

**जेट्ठा सुदंसण जमालिऽणोज्ज सावत्थि तेंदुगुज्जाणे । पंचसया य सहस्सं, ढंकेण जमालि मोत्तूणं ॥१२६॥**

श्रीवीरस्य ज्येष्ठस्वसुः सुदर्शनायाः सुतो जमालिः पञ्चशतयुक् तद्भार्या च श्रीवीरपुत्री अनवद्याङ्गी प्रियदर्शनाऽन्याह्वा सहस्रयुक् प्राव्राजीत्, अन्यदा जमालिः श्रावस्त्यां तिंदुगोद्याने ज्वरार्त्तः शिष्यान् संस्तारं कुर्वतोऽपृच्छत्, संस्तृतं नवा ? तैरुक्तं संस्तृतं ततो गतोऽर्द्धसंस्तृतं वीक्ष्य क्रियमाणं कृतमिति जिनोक्तं वृथाऽध्यक्षविरुद्धत्वात् अनुष्णाग्निवत्, एवं ध्यात्वा क्रियमाणं क्रियमाणमेव, कृतं तु कृतमिति प्ररूपयन् साधुभिराचार्य ! अर्हद्वाक् सत्यैव, चेत् क्रियमाणं कृतं नेष्यते ततः कथं क्रियायाः प्रारम्भसमय इवान्त्यसमये तदिष्यते सदाभावप्रसङ्गात् क्रियायाश्चाविशेषात्, ततो निष्पद्यमानं निष्पन्नमेव समये समये

उत्पत्तिमत्त्वात्, यथान्त्यसमये पटः, न चाध्यक्षवैरुध्यं, यतो यद्वस्त्राद्यास्तीर्यते तदास्तीर्णमेवेत्युक्तोऽप्यनिच्छन् स्वं सहदी-क्षितसाधुसाध्वीश्च मिथ्यात्वेऽपानयत् । अन्यदा शय्यातरश्राद्धेन ढंककुम्भकृता साध्वीजवनिकाङ्गारैरेकदेशे दग्धा साध्वीभि-रुक्तं ढंक ! संघाटी दग्धा सोऽवक् यूयमेव वक्त दह्यमानमदग्धं । ततः केन वः संघाटी दग्धाऽद्यापि दग्धुमारब्धास्ति, ततः सामन्यः साधवश्च जमालिं मुक्त्वा बुद्धाः श्रीवीरान्तिके आलोच्य प्रतिक्रान्ताः १ । उक्त आद्यनिह्नवः ॥ १२६ ॥ 'सोल'

**सोलस वासाणि तया, जिणेण उप्पाडियस्स णाणस्स । जीवपएसियदिट्ठी, उसभपुरंमी समुप्पण्णा ॥**

ऋषभपुरं राजगृहस्याऽऽख्याह्ना ॥ १२७ ॥ 'राय'

**रायगिहे गुणसिलए, वसु चोद्दसपुव्वि तीसगुत्ताओ । आमलकप्पा णयरी, मित्तासिरी कूरपिउडाइ ॥१२८॥**

गुणशिले चैत्ये चतुर्दशपूर्विणो वसुसूरेः शिष्यात्तिष्यगुप्ताद् दृष्टिर्जाता । यथा स आत्मप्रवादे पूर्वे 'एगे भंते जीवप्पएसे जीवेत्ति वत्तव्वं सिया ? नो इणमट्ठे समट्ठे एवं दो जीवपेदेसा तिन्नि संखिज्जा वा जाव एगेणावि पएसेण ऊणे नोजीवत्ति वत्तव्वं सिया । जम्हा कसिणे पडिपन्ने लोगागासपदेसतुल्लपदेसे जीवेत्ति वत्तव्वं' इत्यादि पठन्नित्थं प्रतिपन्नो यदि जीवप्र-देशा एकप्रदेशेनापि हीना नात्माख्यां लभन्ते किन्त्वन्त्यप्रदेशयुक्ता एव ततोऽन्त्यप्रदेश आत्मा आत्मत्वस्य तद्भावभावित-त्वादित्याख्यान् गुरुणा भाषित एवं आत्माऽभावप्रसङ्गात् । यतोऽन्त्यप्रदेशोऽप्यजीवोऽन्यप्रदेशतुल्यत्वात्, प्रथमादिप्रदेशवत्, प्रथमादिप्रदेशो वा जीवः शेषप्रदेशतुल्यपरिणामत्वादन्त्यप्रदेशवत् । न च पूरण इति कृत्वा तस्यात्मत्वं युक्तं, एकैकस्य पूरण-

त्वाविशेषादेकमपि विना तस्याऽपूर्णतेत्युक्तोऽप्यमन्वानो गुरुणोत्सृष्ट आमलकल्पापुर्यां मित्रश्रीश्राद्धेन कूरपिटकादेः कूरभाजनादेः कूराद्यन्तसिक्थानि वस्त्रादेश्चान्त्यं तन्तुं ददता किमिदं इत्याख्याश्चेत् त्वन्मतं सत्यं तेन चार्थसिद्धिः स्यात्तदा तथादत्तं न तु श्री वीरमतेनेत्यबोधि । गतो द्वितीयो निह्नवः २ ॥ १२८ ॥ 'चोद्दा'

**चोद्दा दो वाससया, तइया सिद्धिं गयस्स वीरस्स । अव्वत्तयाण दिट्ठी, सेयवियाए समुप्पन्ना ॥१२९॥**

'सिद्धिं' वीरस्य चतुर्दशाधिके द्वे वर्षशते यदा गते ॥ १२९ ॥ 'सेय'

**सेयावि पोलासाढे, जोगे तद्दिवसहियय सूले य । सोहंमि णलिणिगुम्मे, रायगिहे मुरियबलभद्दे ॥१३०॥**

श्वेतव्यां पुर्यां पोलासोद्याने आपाढाचार्य आगाढयोगान्वाहयन्निशि तद्दिनशूले जाते मृतः सौधर्म्मे नलिनीगुल्मविमानें उत्पद्य स्नेहात् स्वाङ्गमधिष्ठाय तदजानतामेवर्षीणां योगान् सम्पूर्य नवं सूरिं संस्थाप्य स्वं देवत्ववृत्तान्तं निवेद्य गतस्ततो मुनयोऽसंयत इयत्कालं वन्दित इति शङ्किताः । को वेत्ति कः कीदृशोऽस्तीति मिथोऽप्यनमन्तोऽव्यक्तत्वं स्थापयन्तो राजगृहे मौर्यवंशीयबलभद्रराजेन कटकमर्देन मारयितुमारब्धास्त्वं श्राद्धोऽस्मान् यतीन् कथं हंसीति वदन्तो युष्मन्मते को वेत्ति कीदृशा यूयमिति । तथाऽस्त्येव विश्वे सत्यं वस्तु अभ्रान्त्या ज्ञायमानत्वात् समुद्रनीरवदिति बोधिताः । तृतीयो निह्नवः ३ ॥ १३० ॥ 'वीसा' 'मिहि'

**वीसा दो वाससया, तइया सिद्धिं गयस्स वीरस्स । सामुच्छेइयदिट्ठी, मिहिलपुरीए समुप्पण्णा ॥**

...रायगिहे खंडरक्खा य ॥

मिहिलाए लच्छिघरे, महगिरि कोडिण्ण आसमित्ते य । णेउणियाणुप्पवाए, रायगिहे खंडरक्खा य ॥

मिथिलायां लक्ष्मीगृहचैत्ये महागिरिशिष्यकोडीन्नशिष्योऽश्वमित्रोऽनुप्रवादपूर्वे नैपुणिकाख्यं वस्तु पठन्नुत्पत्त्यनन्तरं
न्मुगमुच्छेद इति दृष्ट्वा विप्रतिपन्नस्तथैव वदन् गुरुणा पर्यायरूपेणैवेदमुक्तं न तु द्रव्यरूपेण, चेद् द्रव्यरूपेणाप्युच्छित्तिः स्यात्
तदा क्रिमाश्रित्य क्षणिकत्वव्यवस्था । तथाऽणुर्नित्यः पर्यायेषु सत्स्वपि मुख्यस्वरूपाऽहानेरनन्तज्ञानवदित्युक्तोऽप्यनिच्छन्
राजगृहापराख्ये काम्पील्यपुरे खण्डरक्षादाणग्राहिणस्तैः कुट्यमानो यूयं श्राद्धा मां साधुं किं हथेत्याख्यांस्त्वन्मते न ते
यं न च त्वं न इत्यबोधि, तुर्यनिह्नवः ४ ॥ १३२ ॥ ' अट्ठा ' ' णइ '

अट्ठावीसा दो वाससया, तइया सिद्धिं गयस्स वीरस्स । दोकिरियाणं दिट्ठी, उल्लुगतीरे समुप्पण्णा ॥
णइखेडजणवउल्लुग, महागिरि धणगुत्त अज्जगंगे य । किरिया दो रायगिहे, महातवोतीर मणिणाओ ॥१३४॥

उल्लुकाजनपदे उल्लुकानदीतटे धूलीप्राकारवृत्तं खेटमुच्यते । तत्र खेटस्थाने महागिरिशिष्यधनगुप्तशिष्यगङ्गाचार्यो
नदीमुत्तरन् खल्वाटशीर्षे आतपोष्णं पदोश्चाम्बुशैत्यमनुभवन्नाह–एकसमये क्रियाद्वयानुभवः इति वदन् गुरुणा नैकसमये
क्रियाद्वयानुभवः किन्तु समयमनसी सूक्ष्मत्वान्न लक्ष्येते, तथा शैत्यौष्णे युगपन्न संवेद्येते भिन्नदेशत्वात् विन्ध्यहिमाद्रि-
स्पर्शक्रियावत् इत्युक्तोऽप्यनिच्छन् राजगृहे महातपस्तीरे प्रभाख्ये जलाशये मणिनागाख्ययक्षचैत्ये युगपत् क्रियाद्वयानुभवं
प्ररूपयन् यक्षेण अरे ! श्रीवीरवरादपि त्वं दक्ष इत्युक्तोऽबोधि । गतः पञ्चमः ॥ १३४ ॥ ' पंच '

**पंचसया चोयाला, तइया सिद्धिं गयस्स वीरस्स। पुरिमंतरंजियाए, तेरासियदिट्ठी उववण्णा ॥१३५॥**

अन्तरंजिकापुर्यां ॥ १३५ ॥ 'पुरि'

**पुरिमंतरंजि भूयगुह, बलसिरि सिरिगुत्त रोहगुत्ते य। परिवाय पोट्टसाले, घोसणपडिसेहणा वाए॥१३६॥**

बलश्रीनृपः श्राद्धस्तत्र भूतगुहचैत्ये श्रीगुप्ताचार्यास्तद्भागिनेयः शिष्यो रोहगुप्तः। तत्रैकः परिव्राट् विद्यया पुट्टं उदरं स्फुटतीति बद्धलोहपट्टः जम्बूद्वीपे मत्प्रतिवादी नास्तीति जम्बूद्रुशालायुत्करः। अतश्च स पुट्टसालाख्यो वादार्थं घोषणां कारितवान्। रोहगुप्तेन पटहप्रतिषेधः कृतस्ततो वादे अभ्युत्थिते प्रपन्ने गुरुराह ॥ १३६ ॥ 'विच्छु'

**विच्छुय सप्पे मूसग, मिई वराही य कागि पोआई। एयाहिं विज्जाहिं, सो उ परिव्वायओ कुसलो ॥१३७॥**

वृश्चिकप्रधाना विद्या, सर्पविद्या, एवं मूषका, मृगी, वराही, काकीविद्या, पोताकी शकुनिका, एताभिर्विद्याभिः स परवादिनं हन्ति ॥ १३७ ॥ 'मोरी'

**मोरी नउलि बिराली, सीहीय उल्लूगि ओवाई। एयाओ विज्जाओ, गेण्ह परिवायमहणीओ ॥ १३८ ॥**

उलूकी, घूकी, 'ओवाई' श्येनिका। स च परिव्राजं जीवाजीवरूपराशिद्वयस्थापकं जीवाजीवनोजीवरूपराशित्रयस्थापनेन विद्याः प्रतिविद्याभिश्च गुरुदत्ताभिर्मन्त्रितविश्वविद्याजेयधर्म्मध्वजेन तु रासभीविद्यां जिग्ये। तत्र नोशब्दो देशवाची तेन नोजीवस्तत्क्षणत्रुटितपल्लीपुच्छादिः आमलिततन्त्वादिश्च। अस्ति नोजीवः प्रत्यक्षत्वात् जीववत् इति राशित्रयं स्थापितं

॥ १३८ ॥ ' सिरि '

सिरिगुत्तेणऽवि छलुगो, छम्मास विकड्ढिऊण वायजिओ । आहरण कुत्तियावण, चोयालसएण पुच्छाणं॥

श्रीगुप्तेन नसतो आगतः वक्ष्यमाणषट्पदार्थस्थापकत्वादुलूकगोत्रप्रभवाच षडुलूको रोहगुप्तोऽभाणि त्वया श्रुतानुक्तमुक्तं ततो गत्वगमध्यं ब्रूहि वादिनिग्रहाय राशित्रयं स्थापितं परं श्रुते नास्तीति । सोऽनिच्छन् गुरुणा राज्ञोऽग्रे षण्मासान् वादे विकृष्यालिगात्र तत्प्रणीतद्रव्यगुणकर्म्मसामान्यविशेषसमवायरूपषट्पदार्थसम्बद्धवक्ष्यमाणपृच्छानां चतुश्चत्वारिंशदधिकशतेन कुत्रिकापणे आहरणानि दृष्टान्तान् प्रदर्श्य जितः । कूनां पृथ्वीनां त्रिके त्रिभुवने यद्द्रव्यं तद्देवानुभावाल्लभ्यते लक्षेण येषु ते कुत्रिकापणाः ॥ १३९ ॥ पृच्छा एवाह ' नव '

नव द्रव्याणि, गुणाः सप्तदश, कर्म्मसत्तयोर्द्वे पञ्चके, कर्म्मपञ्चकं सत्तापञ्चकं चेत्यर्थः ॥ १ ॥ अमुमर्थं स्पष्टयति ' भूज '

भूजलजलणानिलनहकालादिसाया मणो य दव्वाइं । भण्णंति नवेयाइं सत्तरस गुणा इमे अण्णे ॥२॥

भूमिः १ जलं २ ज्वलनः ३ अनिलः ४ नभः ५ कालः ६ दिक् ७ मनः ८ आत्मा च ९ नवैतानि द्रव्याणि भण्यन्ते ॥ २ ॥ ' रूव '

रूवरसगन्धफासा संखा परिमाणमह पुहुत्तं च । संजोगविभागपरापरत्तबुद्धी सुहं दुक्खं ॥ ३ ॥

१ अत्र ग्रन्थकारैः सत्तापञ्चकमध्ये विशेषसमवाययोरन्तर्भावः कृतो दृश्यते परं विशेषावश्यकभाष्ये तयोः पृथग्भावो दृश्यते ।

सङ्ख्या एकादिका, परिमाणं इयत् । अथ पृथक्त्वं अनादिसिद्धं पार्थक्यं । संयोगो द्वयोर्भिन्नवस्तुनो मिलनं, विभागः संयोगपूर्वं पार्थक्यं, परत्वं, अपरत्वं ॥ ३ ॥ 'इच्छा'

**इच्छा दोस—पयत्ता, एत्तो कम्मं तयं च पंचविहं। उक्खेवणवक्खेवणपसारणाऽऽकुंचणं गमणं ॥ ४ ॥**

इच्छाद्वेषप्रयत्नानि सप्तदशगुणाः । उत्क्षेपणं आदानं, अवक्षेपणं मोचनं ॥ ४ ॥ 'सत्ता'

**सत्ता सामण्णं पिय सामण्णविसेसया विसेसो य । समवाओ य पयत्था छ छत्तीसप्पभेया य ॥ ५ ॥**

सामान्येन सर्वेष्वस्तिमात्रं सत्ता, द्रव्यत्वगुणत्वादि सामान्यं, भूत्वश्वेतत्वाद्यवान्तरसामान्यरूपं सामान्यविशेषः ४ । स्वस्वजातिष्वनन्यसमत्वेन विशेषको विशेषः मुख्यवृत्त्याणुरौपचारिकस्तु शाबलबाहलत्वादिविशिष्टगोपिण्डादि ५। अयुतसिद्धानामाधार्याधारभूतानामिह प्रत्ययहेतुः समवायः, कोऽर्थः अन्यतोऽन्यत आगत्य मिलिता, युतसिद्धा, न युतसिद्धाः अयुतसिद्धाः, घटे रूपं इत्याद्या भावा आधार्याधारभूतास्तेषां, इह घटे रूपमस्ति, इह गवि गोत्वमस्तीत्यादि प्रत्ययहेतुः समवायो नाम पदार्थः स्यात् ६ । ॥ ५ ॥ 'पय'

**पगईए अगारेण य, नोगारोभयनिसेहओ सवे। गुणिआ चोयालसयं, पुच्छाणं पुच्छिओ देवो ॥ ६ ॥**

शुद्धं पदं प्रकृतिस्तया, तथा अकारेण नोकारेण उभयं नो अकारश्च ताभ्यां यो निषेधस्तेन चतुर्भी राशिभिर्गुणिताः सर्वो द्रव्यगुणादिवर्गश्चत्वारिंशदधिकशतं पृच्छानां, देवः पृष्टः ॥ ६ ॥ यथा 'जीवा'

जीवः, अजीवः, नोजीवः, नोअजीवः, 'पुढवा०' एवं पृथ्व्यादिष्वपि ज्ञेयं, भूः, अभूः, नोभूः, नोअभूः, एवं जलादिष्वपि ॥ ७ ॥ 'इमे'[1]

सर्वराशिषु याचितेषु पुनरपि पुनरपि सुरो द्वावेव राशी दत्ते ॥ ८ ॥ तत्र 'पुढ'

**पुढवि त्ति देइ लेट्ठुं, देसोऽवि समाणजाइलिङ्गो त्ति। पुढवि त्ति सोऽपुढवीं, देहि त्ति य देइ तोयाइं ॥ ९ ॥**

पृथ्वीं देहीत्यापणसुरो याचितस्तां दातुमक्षमो लेष्टुं दत्ते, पृथ्वीदेशोऽपि समानजातेर्लिङ्गं चिह्नमिति पृथ्वी ज्ञेया। 'सो अपु०' ततो अपृथ्वीं देहीति तोयादि दत्ते। नोकारो एकदेशार्थो निषेधार्थश्च। तत्र मूर्त्तैकदेशो दातुं शक्योऽतस्तत्रोभयथापि स्यादमूर्त्तैकदेशो दातुं त्वशक्यस्तत्र निषेधवाच्येव, ततो नोपृथ्वीं याचितः पृथ्व्येकदेशं लेष्टुखण्डं अम्बु वा, नोअपृथ्वीं याचितस्त्वम्बुदेशं पृथ्वीं वा दत्ते। अत्र लेष्ट्वम्बुदेशयोरपि भूजलरूपत्वाद्राशिद्वयमेव ॥ ९ ॥ एताः क्षेपकगाथाः। अत्र भाष्यं 'जीव'

**जीवमजीवं दाउं, नोजीवं जाइओ पुणरजीवं। देइ चरिमम्मि जीवं, न उ नोजीवं स जीवदलं ॥ १० ॥**

चरमे नोअजीवं देहीति प्रश्ने जीवं दत्ते। तृतीयप्रश्ने न तु स सुरो नोजीवं दत्ते, किं रूपं? जीवदलं जीवखण्डरूपं। तथा नास्ति नोजीवः अवस्तुत्वात् शशशृङ्गवत् ॥ १० ॥ 'चाए'

[1] इमाः ९–७–८ गाथा भाष्यचूर्णिवृत्तिषु न मिलिता अत एवात्र न निबद्धाः

वाए पराजिओ सो, निव्विसओ कारिओ नरिंदेणं। घोसावियं च णगरे, जयइ जिणो वद्धमाणोत्ति ॥१४०॥

गतः षष्ठो निह्नवः ॥ १४० ॥ 'पंच' 'दस'

पंचसया चुलसीया, तइया सिद्धिं गयस्स वीरस्स। अबद्धियाण दिट्ठी, दसपुरनयरे समुप्पण्णा ॥१४१॥

दसपुरनगरुच्छुघरे, अज्जरक्खियपूसमित्ततियगं च। गोट्ठामाहिल नवमट्ठमेसु, पुच्छा य विंझस्स ॥१४२॥

इक्षुगृहे इक्षुवाटे रक्षितः प्राव्राजीत्। तच्छिष्याः घृतलब्धिमान् घृतपुष्पमित्रः तस्मै अधना वृद्धा धिग्जापि स्त्री षण्मास-मीलितं घृतं हृष्टा दद्यात्, एवं वस्त्रपुष्पमित्रः। तथा नवपूर्वी नित्यं घृताश्यपि सर्वश्रुतचतुरनुयोगार्थस्मृतिध्यानात्कृशो दुर्ब-लिकापुष्पमित्रः इति पुष्पमित्रत्रिकं अभूत्। तथा दुर्बलिकापुष्पमित्रः १, विन्ध्यः २, फल्गुरक्षितः ३, गोष्ठामाहिलश्चेति ४ प्राज्ञाः। रक्षितैर्मथुरायां नास्तिकवादिजयाय गोष्ठामाहिलः प्रैषि। स्वयं च कालं कुर्वद्भिर्दुर्बलिकापुष्पमित्रः पट्टेऽस्थापि। गोष्ठामाहिलो वादिनं जित्वाऽऽयातो दुर्बलिकापुष्पमित्रं पट्टे श्रुत्वा अमर्षात् पृथक्स्थानस्थस्तच्छिद्राण्यपश्यन् साधून् व्युद्-ग्राहयितुं चाक्षमो गर्वाद् दुर्बलिकापार्श्वे न शृणोति किन्तु तत्पार्श्वेऽधीत्य विन्ध्यस्य 'नवमट्ठमेसु'त्ति नवाष्टमपूर्वयोर्विचारं चिन्तयतोऽन्तिके शृणोति, अन्यदाऽष्टमपूर्वे किञ्चित्कर्माऽऽत्मप्रदेशैर्बद्धमात्रमेव शुष्ककुड्यलग्नधूलीवद्विघटते, किञ्चित्तु बद्धस्पृष्टं आत्मप्रदेशैरात्मीकृतमार्द्रकुडये सस्नेहचूर्णवत्, किञ्चित्तु निकाचितं आत्मना सहाऽन्योऽन्यःपिण्डवदैक्यं प्राप्तं इति विन्ध्योक्ते आह—नैवं मोक्षाभावाऽऽप्तेः यतो जीवाद् बद्धं कर्म्म न वियुज्यते अन्योऽन्यविभागासम्बद्धत्वात् स्वप्रदेशवत् ॥१४२॥ ततः 'पुट्ठो'

पुट्ठो जहा अबद्धो, कंचुइणं कंचुओ समन्नेइ । एवं पुट्ठमबद्धं, जीवं कम्मं समन्नेइ ॥१४३॥ (मू. भा.)

जीवः कर्म्मणा स्पृष्टो न तु स्पृष्टः परं यथाऽबद्धः, कञ्चुकः कञ्चुकिनं नरं समन्वेति। एवं स्पृष्टमबद्धं कर्म्म जीवं समन्वेति। ततो विन्ध्यस्य दुर्बलिकापुष्पमित्रगुरुपार्श्वे पृच्छा–गुरुराह–माहिलोक्तो बद्धः वियुज्यमानत्वात् कञ्चुकेनेव तद्वानिति। ततो विन्ध्यस्य दुर्बलिकापुष्पमित्रगुरुपार्श्वे पृच्छा–गुरुराह–माहिलोक्तो हेतुरनैकान्तिकोऽन्योऽन्यानिभागानामपि क्षीरनीरादीनामुपायतो वियोगदर्शनात् दृष्टान्तोऽपि न साधनधर्म्मानुगः स्वप्रदेशात्मना सह सम्बन्धासिद्धेः यतोऽत्र सम्बन्धो भिन्नानां संयोगे सतीष्यते, स च भिन्नत्वात्कर्म्मणो जीवेन सहास्ति न तु प्रदेशस्य, अनादिकालादपि जीवस्वप्रदेशयोरैक्यात्, यच्चोक्तं 'जीवः कर्म्मणा स्पृष्ट इत्यादि' तत्र चेत् कञ्चुकेनैव बाह्यप्रदेशेष्वेव स्पृष्टो न तु प्रतिप्रदेशं तदाऽऽन्तरप्रदेशेष्वात्मनः सद्वर्त्ति आन्तरज्ञानं प्रतिघाताभावादनन्तं सर्वदा स्यान्न चैतद् दृष्टमिष्टं वा। तथा कर्म्मबन्धहेतुजीवाध्यवसायस्य ज्ञानमयस्य सर्वात्मनि सद्भावात्कर्मवेदनायाः सर्वात्मनाऽनुभवनाच्च सर्वात्मप्रदेशैर्बद्धं कर्म्मेति मन्तव्यं एवमपि जीवकर्मणोर्वियोगः स्यादेव यतः जीवात्कर्म्म वियुज्यते मूर्त्तत्वे सत्यविभागसम्बन्धत्वात् स्वर्णमलवत्। कर्म्मवियोग एव मोक्षः। एवं विन्ध्येनोक्ते गोष्ठामाहिलो निरुत्तरः सन् नवमपूर्वे प्रत्याख्यानाधिकारे वक्ति ॥ १४३ ॥ 'पच्च'

पच्चक्खाणं सेयं, अपरिमाणेण होइ कायव्वं। जेसिं तु परीमाणं, तं दुट्ठं आससा होइ ॥१४४॥ (मू.भा.)

श्रेयोहेतुत्वात् श्रेयः, अपरिमाणेनावधिं त्यक्त्वेत्यर्थः। परिमाणप्रत्याख्यानं पौरुष्यादि दुष्टं, यतस्तत्र 'आससा' अनुस्वार-

लोपादाशंसा प्रत्याख्यानकालादनु भोक्ष्ये इति वाञ्छा स्यात् । ततः स विन्ध्येनोपेक्षितः पुष्पान्तिके गत्वा स्वमतं वक्ति । पुष्प आह–अहो ! अपरिमाणमिति कोऽर्थः किं यावच्छक्ति उतानागताद्धा । आद्ये शक्तिमितकालावधिभावेनास्मन्मताभ्युपगमः । द्वितीये तु मृतानां देवत्वेऽवश्यं भावीव्रतभङ्गोऽतः परिमितप्रत्याख्यानं कार्यं । ततोऽयं दुर्बलिकापुष्पमित्रगुरोस्तथा सङ्घाऽऽकारितायाः श्रीसीमन्धरं पृष्ट्वाऽऽगतायाः सुर्याश्च वाचममन्वानो निह्नवो जातः ७ ॥ १४४ ॥ सप्तनिह्नवानुक्त्वा बहुविसंवादिनिह्नवानाह ' छव्वा ' ' रह '

**छव्वाससयाइं नवुत्तराइं,तइया सिद्धिं गयस्स वीरस्स । तो बोडियाण दिट्ठी, रहवीरपुरे समुप्पण्णा॥१४५॥**

**रहवीरपुरं नयरं, दीवगमुज्जाणमज्जकण्हे य । सिवभूइस्सुवहिम्मि य, पुच्छा थेराण कहणा य ॥१४६॥**

रथवीरपुरे सहस्रमल्लः शिवाख्यः क्षत्रियो राजमान्यः क्रीडादि कृत्वा नित्यं निशीथ एति । ततः पत्नी खिन्ना मातुरुक्त्वा सुप्ता । मात्रा चागतोऽवादि अधुना यत्र द्वाराण्युद्घाटितानि तत्र याहि, ततः स दीपकोद्याने कृष्णसूरिपार्श्वे गत्वा स्वयं लोचं चक्रे । गुरुभिर्लिङ्गं दत्तं । अन्यदा तस्य राजा रत्नकम्बलं ददे । गुरुणा साधूनां बहुमूल्यं न युक्तमित्युक्तोऽपि स गुरुछन्नं संगोप्य गोचरादेरागतोऽन्वहं वीक्षते । मुधा मूर्च्छाऽस्येति गुरुणा तत्परोक्षे तच्छित्वा साधूनां निषद्यादि कृतं स च दूनः । अन्यदा जिनकल्पो वर्ण्यते यथा–' जिणकप्पिया च दुविहा पाणीपत्ता पडिग्गहधरा य । पाउरणमपाउरणा इक्किका ते भवे दुविहा । १ । दुगतिगचउक्कपणगं नवदसेक्कारसेव बारसगं । एए अट्ठविगप्पा जिणकप्पे हुंति नायव्वा ' । २ । तत्र द्विविधोपधिः

रजोहरणमुखवस्त्रिकापञ्चं

रजोहृतिर्मुखपोतिश्च २। कल्पेन सह ३। कल्पद्वयेन सह ४। तृतीयेनोर्णाकल्पेन ५। नव ९ रजोहरणमुखवस्त्रिकापञ्चं २ पत्ताबंधो ३ पायठवणं ४ पायकेसरिया ५ पडलाइं ६ रयत्ताणं ७ गोच्छओ ८ पायनिज्जोगो एतैः ९। कल्पेन १० कल्पद्वयेन ११ कल्पत्रयेण १२ ततः शिवभूतिः किं जिनकल्पोऽधुना न क्रियते ? किं दोषमूलोपधिपरिग्रहेण ? जिना अप्यचेला इत्यागमस्तित्युपधौ पृच्छा। स्थविराणां गुरूणां कथना यथा—' मणपरमो हि पुलाए, आहारगखवगउवसम कप्पे। संजमतिगकेवलि सिज्झणाय जंबूमि वुच्छिन्ना '। १। मनोज्ञानं १ परमावधिः २ पुलाकलब्धिः ३ आहारकदेहः ४ क्षपको ५ पशमश्रेणी ६ जिनकल्पः ७ परिहारविशुद्ध्यादिसंयमत्रिकं १०, तथाऽयतीनां नाग्न्येऽपि न कषायादिदोषहानी रागादिमत्त्वात्तिर्यग्वत्। यतीनां तु वस्त्राद्यपापाय संयमहेतुत्वात् शुद्धाहारादिवत्, प्रतिलिख्य प्रमृज्योपवेशने धर्मध्वजस्य, संपातिमसत्त्वादिरक्षार्थं मुखपोतेर्जीवयतनार्थं पात्रस्य, शीतातपादिवेदनायामसहस्य चित्तस्थैर्यवत्त्वेन महिकावर्षादौ च संयमहेतुत्वं वस्त्राणां स्पष्टमेव। एवं च परिग्रहोऽपि न 'न सो परिग्गहो वुत्तो' इत्यादि। उक्तं—जिनानामपि न सर्वथाऽचेलत्वं 'सव्वेवि एगदूसेणेत्याद्युक्तेः, '। स च तदमन्वानः कषायमोहाद्युदयान्नग्नी भूतः। उत्तराख्या तत् स्वसापि तथैव कृत्वा भ्रातृपृष्ठिगामिनी वेश्यया माऽस्मासु जनो व्यरांक्षीत् इति वासः परिधापिता। भ्रात्रा च वीभत्सेयमिति सोक्ता सूर्या दत्तमिदं न त्याज्यं ॥१४६॥

अत्र भाष्यं ' ऊहा '

ऊहाए पण्णत्तं, वोडियसिवभूइउत्तराहि इमं। मिच्छादंसणमिणमो, रहवीरपुरे समुप्पण्णं ॥१४७॥

शिवभूत्युत्तराभ्यां ऊहया विचारेण प्रज्ञप्तं ॥ १४७ ॥ ' वोडि '

बोडियसिवभूईओ, बोडियलिंगस्स होइ उप्पत्ती । कोडिण्णकोट्टवीरा, परंपराफासमुप्पणा ॥ १४८ ॥

शिवशिष्यौ कौण्डिन्यकोट्टवीरौ ताभ्यां सकाशात्परम्परास्पर्शे शिष्यप्रशिष्यसम्पर्के प्राप्योत्पन्ना बोटिकदृष्टिः ॥ १४८ ॥ 'एवं' 'मोत्तु'

एवं एए कहिया, ओसप्पिणीए उ निण्हया सत्त। वीरवरस्स पवयणे, सेसाणं पवयणे णत्थि ॥७८५॥

मोत्तुणमेसिमिक्कं, सेसाणं जावजीविया दिट्ठी । एक्केक्कस्स य एत्तो, दो दो दोसा मुणेयव्वा ॥ ७८६ ॥

एकं गोष्ठामाहिलं मुक्त्वा शेषाणां दृष्टिः प्रत्याख्यानं यावज्जीवं नत्वपरिमाणं एकैकस्याऽतोऽन्यापेक्षया द्वौ द्वौ दोषौ, यथा जमालिर्द्वितीयं निह्नवं वक्ति त्वं द्वाभ्यां दोषाभ्यां मिथ्यात्वी यत्क्रियमाणं कृतं अन्त्यप्रदेशश्चात्मेति वक्षि। एवं द्वितीयोऽपि त वक्ति त्वमपि द्वाभ्यां यत् कृतमेव कृतं बहुप्रदेशश्चात्मेति, एवं सर्वत्र, गोष्ठामाहिलं त्वाश्रित्यैकैकस्य त्रयो दोषाः माहिलस्यापरिमितप्रत्याख्यानकर्म्मस्पर्शरूपदोषद्वयाख्यानात् । अर्हन्मतमाश्रित्य तु षण्णामेको दोषोऽन्त्यस्य तु द्वौ ॥ ७८६ ॥ 'सत्ते'

सत्तेया दिट्ठीओ, जाइजरामरणगब्भवसहीणं । मूलं संसारस्स उ, भवंति निग्गंथरूवेणं ॥७८७॥

सप्तैता बोटिका मिथ्यादृश एवेति न तद्विचारः । जातिर्नारकाद्याः, जातिजरामरणगर्भवसतयः संसारस्य मूलं, 'णं' वाक्यालङ्कारे ॥ ७८७ ॥ 'पव'

पवयणनीह्नूयाणं, जं तेसिं कारियं जहिं जत्थ । भज्जं परिहरणाए, मूले तह उत्तरगुणे य ॥ ७८८ ॥

'नीह्नूयाणं' इति देश्युक्त्या प्रवचनक्रियास्वकिञ्चित्कराणां यदशनादि तेषां निह्नवानां कृते कारितं कृतं वा यस्मिन् काले यत्र क्षेत्रे तत्परिहरणाय भाज्यं, चेल्लोको वेत्ति-एते निह्नवाः साधुभ्यो भिन्नास्तदा न परिह्रियतेऽन्यथा परिह्रियते, मूलगुणे आधाकर्मादौ, उत्तरगुणे क्रीतादौ, तदेवममी न साधवो न गृहस्था नान्यतीर्थाः किन्तु लिङ्गेन साधर्मिका न तु प्रवचनेन ॥ ७८८ ॥ 'मिच्छा'

मिच्छादिट्ठीआणं जं, तेसिं कारियं जहिं जत्थ । सव्वंपि तयं सुद्धं, मूले तह उत्तरगुणे य ॥ ७८९ ॥

बोटिकानां ॥ ७८९ ॥ उक्तं समवतारद्वारं ११ । अथ नयानुगतद्वा० १२ 'तव'

तवसंजमो अणुमओ, निग्गंथं पवयणं च ववहारो । सद्दुज्जुसुयाणं पुण, निव्वाणं संजमो चेव ॥७९०॥

व्यवहारः एवं वक्त्युपलक्षणत्वान्नैगमसङ्ग्रहावपि । अस्माकं तपःप्रधानसंयम इति चारित्रसामायिकं १ नैर्ग्रन्थ्यं प्रवचनमिति श्रुतसामायिकं चशब्दात्सम्यक्त्वसामायिकं इति सामयिकत्रयं मोक्षमार्गतयाऽनुमतं । आह यद्येवं किमेते मिथ्यादृशः? उच्यते व्यस्तान्यप्यनुमन्यन्ते न सापेक्षाण्येव । 'सद्दु०' शब्दस्यादौ भणनं परनयद्वयादानार्थं । तत ऋजुसूत्रादीनां संयमश्चारित्रसामायिकमेव निर्वाणमार्गत्वान्निर्वाणं अनुमतं, नेतरे द्वे सामायिके॥ ७८९ ॥ द्वा० १२ । 'उद्देसे निद्देसे' इत्यादिद्वारगाथा व्याख्याता । अथ 'किं कइविहं' इति द्वितीयगाथाद्यद्वारं किं जीवः सामायिकं उताजीवः उभयं वाऽनुभयं वा,

द्रव्यं वा गुणो वेति प्रश्ने ' आया '

**आया खलु सामइयं, पच्चक्खायंतओ हवइ आया। तं खलु पच्चक्खाणं, आवाए सव्वदव्वाणं॥ ७९१ ॥**

आत्मा सामायिकं, खलुशब्दादजीवादिव्युदासः, प्रत्याख्यान् प्रत्याख्यानं कुर्वंश्चात्मा स्यात्, श्रद्धानज्ञानचारित्रस्वभावस्थितत्वात् अन्यस्त्वात्मैव न स्यात्स्वरूपहानेः। 'तं खलु' तत् प्रत्याख्यानं श्रद्धेयज्ञेयक्रियोपयोगरूपं विषयमाश्रित्य सर्वद्रव्याणां आपाते विषये सति स्यात् एतच्चाग्रे वक्ष्यते ॥ ७९१ ॥ अत्र मूलभाष्यं ' साव '

**सावज्जजोगविरओ, तिगुत्तो छसु संजओ। उवउत्तो जयमाणो, आया सामाइयं होइ ॥ १४९ ॥**

षट्सु कायेषु संयतः हिंसातो निवृत्तः, अवश्यं कर्त्तव्येषूपयुक्तस्तेषु च यतमानः। अत्र सङ्ग्रहनय आत्मा सामायिकं स्यादिति वदन् व्यवहारेणोचे न सर्वोऽप्यात्मा सामायिकं किन्तु यतमानस्तत ऋजुसूत्रेण सोऽप्युपयुक्त एव नान्यः। एवं एवम्भूतनयं यावद्वाच्यं यथाशक्ति सावद्ययोगविरताद्यशेषविशेषणवानात्मा सामायिकं, किन्तु यतमानः। नैगमेन तु समस्तैतद्गुणविशिष्ट एकादिगुणविशिष्टो वात्मा सामायिकमिति ॥ १४९ ॥ द्रव्यापातत्वं स्पष्टयति ' पढ '

**पढमम्मि सव्वजीवा, बिइए चरिमे य सव्वदव्वाइं। सेसा महव्वया खलु, तदेक्कदेसेण दव्वाणं ॥ ७९२ ॥**

आद्यव्रते सर्वजीवा विषयत्वेन स्युस्तद्रक्षकत्वात्तस्य, द्वितीये चरमे च सर्वद्रव्याणि विषयत्वेन ' दव्वओ मुसावाए सव्वदव्वेसु, परिग्गहे तु सचित्ताचित्तमीसेसु दव्वेसु' इत्युक्ते 'सेसा' तेषां द्रव्याणां एकदेशेन, यतस्तृतीयं 'गहणधारणिज्जेसु दव्वेसु'

किंसामायिकमिति-द्वारम् ॥

तुर्यं 'रूवेसु वा रूवसहगएसु वा दव्वेसु' रूपाण्यजीवानि पुत्तलिकादीनि १, रूपसहगतानि तु सजीवानि रूपादीनि । षष्ठं व्रतं निशि चतुराहारविषयमिति एवं चारित्रं सर्वद्रव्यविषयं ॥ ७९२ ॥ ' जीवो '

**जीवो गुणपडिवन्नो, णयस्स दव्वट्ठियस्स सामइयं । सो चेव पज्जवट्ठियणयस्स, जीवस्स एस गुणो ॥**

गुणैः सम्यक्त्वादिभिराश्रितो जीवो द्रव्यरूप एवार्थः प्रमाणं यस्य स द्रव्यार्थिको नयस्तस्य जात्यैकवचनं, तत्त्वतस्तु द्रव्यनयानां आत्मैव सामायिकं गुणास्तु न सन्त्येव तद्द्रव्यतिरेकेणानवगम्यत्वात् । तत्प्रतिपत्तिरपि भ्रान्ता चित्रे निम्नोन्नतप्रतिपत्तिवत् । स एव सामायिकादिगुणः पर्यायार्थिकनयस्य प्रमाणं न तु जीवद्रव्यं । यस्माज्जीवस्यैष गुणो जीवगुण इति, तत्पुरुषोऽयं स चोत्तरपदप्रधानो यथा तैलस्य धारा तैलधारेति । न चात्र धारायाः परं तैलमस्त्येवं ज्ञानगुणातिरिक्तो जीवो नास्ति अनुपलम्भात्, रूपात्पृथग्भूतघटवत् । ततः समतागुणः सामायिकं नाऽऽत्मा ॥ ७९३ ॥ ' उप्प '

**उप्पज्जंति वयंति य, परिणमंति य गुणा ण दव्वाइं । दव्वप्पभवा य गुणा ण गुणप्पभवाइं दव्वाइं ॥७९४॥**

द्रव्यनयो वक्त्यहो ! गुणा न सन्त्येव यतस्ते उत्पद्यन्ते व्ययन्ते चेत्येवं परिणमन्ति न तु द्रव्याणि ततस्तान्येव सन्ति नित्यं स्थितत्वादपराजन्यत्वाच्च । द्रव्यप्रभवा गुणाः परं गुणप्रभवानि द्रव्याणि न, तत आत्मैव सामायिकं । अथैनामेव गाथां पर्यायनयो व्याख्याति । उत्पद्यन्ते व्ययन्ते च गुणा एवातस्त एव सन्ति उत्पादव्ययपरिणामत्वात् पत्रनीलरक्ततादिवत् न तु द्रव्याण्यतस्तानि न सन्त्येव उत्पादव्ययपरिणामहीनत्वात् शशशृङ्गवत् । किं च ' द्रव्यप्रभवा गुणा न च गुणप्रभवानि

द्रव्याणि, नकारस्योभयत्रापि सम्बन्धः ततो न कारणत्वं कार्यत्वं वा द्रव्याणां अतस्तेषामभावः । यद्वा 'द्रव्यप्रभवा न गुणाः किन्तु गुणप्रभवानि द्रव्याणि' पूर्वापरीभावेनोत्पन्नगुणेषु द्रव्यत्वारोपादतो गुण एव सामायिकं ॥ ७९४ ॥ पुनर्द्रव्यनयः 'जं जं'

**जं जं जे जे भावे, परिणमइ पओगवीससा दव्वं । तं तह जाणेइ जिणो, अपज्जवे जाणणा णत्थि ॥७९५॥**

यद् यद् द्रव्यं यान् यान् भावान् प्रयोगात् व्यापाराद् घटादीन् विश्रसातः स्वभावतो वाऽभ्रादीन् परिणमति प्रतिपद्यते तद्द्रव्यमेवोत्प्रेक्षितपर्यायमुत्फणविफणादिपर्याययुक् सर्प्पद्रव्यवत् । तथाप्रकारं जिनो जानाति । अपर्याये निराकारे तु ज्ञानं नास्त्यत आत्मैव सामायिकं । नन्वेवं, उभयमते सति किं तत्त्वमित्येषैव गाथा तत्त्वतो व्याख्यायते ॥ ७९५ ॥ 'जं जं जे जे'

**जं जं जे जे भावे, परिणमइ पओगवीससा दव्वं । तं तह जाणाइ जिणो, अपज्जवे जाणणा नत्थि ॥७९६॥**

यद् यद् द्रव्यं यान् यान् भवान् प्रयोगविस्रसाभ्यां परिणमति तत्तथापरिणाममेवार्हन्वेत्त्यऽपर्याये परिज्ञा नास्तीति पर्यायविशिष्टं द्रव्यं प्रमाणमतः साम्ययुक्त आत्मा सामायिकमिति तत्त्वं ॥ ७९६ ॥ गतं किं सामायिकं इति द्वा० १३ । अथ कतिविधं सामायिकं द्वा० १४ 'सामा'

**सामाइयं च तिविहं, सम्मत्त सुयं तहा चरित्तं च । दुविहं चेव चरित्तं, अगारमणगारियं चेव ॥७९७॥**

कतिविध-द्वारम् ॥

सम्यक्त्वसामायिकं श्रुतसामायिकं चारित्रसामायिकं च। सम्यक्त्वसामायिकं द्विधा निसर्गजं अधिगमजं च, यद्वा दशधा पञ्चधौपशमिक १ सास्वादन २ क्षायोपशमिक ३ वेदक ४ क्षायिक ५ भेदात्, तत्रौपशमिकमुपशमश्रेणौ प्रथमसम्यक्त्वलाभे चान्तरकरणस्थस्य १ सास्वादनमौपशमिकाच्च्यवतो मिथ्यात्वं अप्राप्तस्य २। क्षायोपशमिकं सम्यक्त्वं पुद्गलान्वेदयमानस्य ३। वेदकं तु दर्शनत्रिकं क्षपयतश्चरमपुञ्जसम्यकत्वाणुवेदने ४। क्षायिकं दर्शनसप्तकक्षयजं शुद्धात्मस्वभावरुचिरूपं ५। त्रिधा वा कारकरोचकदीपकभेदात्। तत्र कारकं यतीनां, रोचकं श्रेणिकादीनां, दीपकं अङ्गारमर्दकाद्यभव्यानां स्वयमश्रद्धानेऽपि परस्य दीपकत्वात्। श्रुतसामायिकं सूत्रार्थतदुभयरूपत्वात्त्रिधा। प्रागुक्ताऽक्षरादिभेदाद्वाऽनेकधा। चारित्रसामायिकं पञ्चधा सामायिकाद्युक्तभेदात्, द्विधा वाऽगारिकाऽनागरिकभेदात्। चारित्रभेदसाक्षादाख्यानमस्मिन् सत्यनयोर्नियममावनार्थं ॥ ७९७ ॥ मूलभाष्यकृत् श्रुतसामायिकं व्याख्यांस्तस्याध्ययनरूपत्वादाह ' अज्झ '

अज्झयणंपि य तिविहं, सुत्ते अत्थे य तदुभए चेव। सेसेसु वि अज्झयणेसु, होइ एसेव निज्जुत्ती ॥१५०॥

अध्ययनं अपिशब्दात् त्रीण्यपि सामायिकान्यौपशमिकक्षायोपशमिकक्षायिकभेदात्त्रिधा, प्रस्तुतसामायिकाध्ययनाच्छेषेष्वपि चतुर्विंशतिस्तवाद्यध्ययनेष्वेवैवोद्देशनिर्देशाद्या निरुक्तिप्रान्ता निर्युक्तिर्ज्ञेया, सर्वद्वाराऽसमासावप्यतिदेशो ' मध्यादाने आद्यन्तादानार्थं ' ॥ १५० ॥ उक्तं कतिविधद्वा० १४। अथ कस्येतिद्वा० १५ ' जस्स '

जस्स सामाणिओ अप्पा, संजमे नियमे तवे। तस्स सामाइयं होइ, इइ केवलिभासियं ॥ ७९८ ॥

सामानिकः समीपस्थः संयमे मूलगुणे नियमे उत्तरगुणे ॥ ७९८ ॥ 'जोस'

**जो समो सव्वभूएसु तसेसु थावरेसु य । तस्स समाइवं होइ इइ केवलिभासियं ॥ ७९९ ॥**

समो मध्यस्थः, इति केवलिभाषितं ॥ ७९९ ॥ 'साव–सवं'

**सावज्जजोगप्परिवज्जणट्ठा, सामाइयं केवलियं पसत्थं ।**
**गिहत्थधम्मा परमंति णच्चा, कुज्जा बुहो आयहियं परत्थं ॥ ८०० ॥**

**सवंति भाणिऊणं, विरई खलु जस्स सविया णत्थि। सो सव्वविरइवाई, चुक्कइ देसं च सवं च ॥८०१॥**

सावद्ययोगपरिवर्जनार्थं सामायिकं केवलिकं सम्पूर्णं यावज्जीवमित्यर्थः प्रशस्तं गृहस्थधर्म्मात्परमं प्रधानमिति ज्ञात्वा कुर्याद् बुध आत्महितं परो मोक्षस्तदर्थं ॥ ८०० ॥ प्रतिपूर्णसामायिककरणशक्त्यभावे गृहस्थोऽपि देशसामायिकं करोति 'करेमि भं० सावज्जं जो० जावनियमं० दुविहं ति० मणेण० न करेमि० तस्स भंते०' यतो भाष्ये 'गिहिणो वि सव्वकज्जं दुविहं तिविहेण छिन्नकालं तं कायव्वम्, आह सव्वे को दोसो?' भण्णएऽणुमई, छिन्नकालमिति द्विघटिकादिकालमानं, आह गृहिणः सर्वशब्दोच्चारे को दोषः? भण्यतेऽनुमतिरूपो दोषः स्यात्, गृही अनुमतिनिषेधं न कुर्यादिति। आह 'जइ केवलियं सामाइयं पि एवंभूतं तो वरं एयं चेव कीरओ किं देससामाइयस्स बहुसो करणेण ? भण्णइ को वा किमाह एवं ताव लट्ठं चेव, किंतु जया एयं काउमसत्तो तदा देससामाइयं पि ताव बहुसो कुज्जा'। आह तदपि किं न सर्वसावद्यनिर्वृत्तिरूपं त्रिविधं

त्रिविधेन क्रियते ? उच्यते 'सव्वं चुक्कइ' अस्यते देशविरतेः सर्वविरतेश्च ॥ ८०१ ॥ सामा'

सामाइयंमि उ कए, समणो इव सावओ हवइ जम्हा। एएण कारणेणं, बहुसो सामाइयं कुज्जा ॥८०२॥

तुरेनार्थः यस्माच्छ्रावकः श्रमण इव प्रायोऽशुभयोगनिषेधात्, बहुशोऽनेकधा अनेकवारं वा ॥ ८०२ ॥ यतः 'जीवो'

जीवो पमायबहुलो, बहुसोऽवि अ बहुविहेसु अत्थेसु। एएण कारणेणं, बहुसो सामाइयं कुज्जा ॥८०३॥

बहुशः सदैव जीवः बहुविधेषु अर्थेषु शब्दादिषु प्रमादबहुलः तत्त्यागाय बहुशः सामायिकं कुर्यान्मध्यस्थो भूयात् ॥ ८०३ ॥ मध्यस्थस्य लक्षणमाह 'जो ण'

जो णवि वट्टइ रागे, णवि दोसे दोण्ह मज्झयारंमि। सो होइ उ मज्झत्थो, सेसा सव्वे अमज्झत्था ॥८०४॥

किन्तु द्वयोर्मध्यकारे माध्यस्थ्ये रागद्वेषाभावरूपे वर्त्तते ॥ ८०४ ॥ गतं कस्य द्वा० १५, क किं सामायिकमिति निरूपयन् द्वारगाथा ३ आह 'खित्त' 'णाणे' 'णिव्वे'

खित्तदिसाकालगइभवियसण्णिऊसासदिट्ठिमाहारे। पज्जत्तसुत्तजम्मठितिवेयसण्णाकसायाऊ ॥८०५॥

णाणे जोगुवओगे, सरीरसंठाणसंघयणमाणे। लेसा परिणामे वेयणा, समुग्घायकम्मे य ॥ ८०६ ॥

णिव्विट्ठणमुवट्टे, आसवकरणे तहा अलंकारे। सयणासणठाणत्थे, चंकम्मंते य किं कहियं? ॥८०७॥

क किं सामायिकमिति द्वारम् ॥

क्षेत्र १ दिग् २ काल ३ गति ४ भव्य ५ संज्ञि ६ उच्छ्वास ७ दृष्टि ८ आहारकान् ९ पर्याप्ति १० सुप्त ११ जन्म १२ स्थिति १३ वेद १४ संज्ञा १५ कषायान् १६ आयुः १७ ज्ञानं १८ योगो १९ पयोगौ २० शरीर २१ संस्थान २२ संहनन २३ मानानि २४ लेश्या २५ परिणामः २६ वेदना २७ समुद्घातकर्म्म २८ निर्वेष्टनं २९ उद्वर्त्तनं ३० आश्रवकरणं ३१ अलङ्कारं ३२ शयनं शय्यां खट्वाद्यां ३३ आसनं ३४ पीठं विष्टरादिस्थानस्थान् ३५ चङ्क्रमत ३६ श्राश्रित्य विचार्यं क्व किं सामायिकमिति ॥ ८०५–७ ॥ अथोर्ध्वलोकादिक्षेत्रमाश्रित्याह–'सम्म'

**सम्मसुआणं लंभो, उड्ढं च अहे अ तिरिअलोए अ। विरई मणुस्सलोए, विरयाविरई य तिरिएसुं॥८०८॥**

सम्यक्त्वश्रुतसामायिकयोर्लाभः ऊर्ध्वलोके मेरुस्वर्गेषु, अधोलोके विदेहाधोग्रामव्यन्तरभवनपतिनारकेषु। विरतिः सर्वविरतिः नृलोके एव। तत्राधोग्राम[माः)योजनसहस्रावगाढाः, तत्राप्याद्यं योजनशतं अधोलोकान्तर्ज्ञेयं। सर्वतिर्यग्लोके तिर्यक्षु विरताविरतिर्देशविरतिः ॥ ८०८ ॥ 'पुव्व'

**पुव्वपडिवन्नगा पुण, तीसुवि लोएसु निअमओ तिण्हं। चरणस्स दोसु निअमा, भयणिज्जा उड्ढलोगंमि।**

त्रयाणां सम्यक्त्वश्रुतदेशविरतिसामायिकानां पूर्वप्रपन्न(ना)स्त्रिष्वपि लोकेषु स्यात्(स्युः)पाण्डकवनादिष्वपि देशविरतितिरश्चां भावात्, चारित्रस्य पूर्वप्रपत्तारो द्वयोरधस्तिर्यग्लोकयोर्नियमात् स्युः। ऊर्ध्वलोके मेरुशीर्षे चेत् चैत्यनत्याद्यर्थं गतास्तदा स्युः नान्यथेति भाज्याः ॥ ८०९ ॥ क्वेति द्वारस्यान्तर्क्षेत्रद्वा० १। अथ दिग्द्वा० २ 'नामं'

कि सामायिकमिति-द्वारे क्षेत्र-द्वारम् ॥

**नामं ठवणा दाविए, खेत्तदिसा तावखेत्त पन्नवए। सत्तमिया भावदिसा, परूवणा तस्य कायव्वा ॥८१०॥**

नामदिक्, स्थापनादिक्, द्रव्यदिक्, क्षेत्रदिक्, तापक्षेत्रदिक्, प्रज्ञापकदिक्, सप्तमा भावदिक्। तस्य दिक्सप्तकस्य प्ररूपणा। नामदिक्, स्थापनादिक्, द्रव्यदिक्, क्षेत्रदिक्, तापक्षेत्रदिक्, प्रज्ञापकदिक्, सप्तमा भावदिक् अष्टादशधा स्यात्। नाम स्थापने सुगमे ॥८१०॥ द्रव्यदिक्— यत्र तु 'सा होअठारसविहाओ' इति पाठः तत्र सा भावदिक् अष्टादशधा स्यात्। 'जं दव्वं ओगाढं, जहण्णगं तं दसदिसागं ॥ १ ॥' व्याख्यार्थं भाष्यं—'तेरसपदेसियं खलु, तावतिएसुं भवे पदेसेसुं। जं दव्वं ओगाढं, जहण्णगं तं दसदिसागं ॥ १ ॥' द्रव्यमेव दशदिगुत्थानहेतुत्वात् दिक् द्रव्यदिक् तद् द्विधा। जघन्यं उत्कृष्टं च। तत् त्रयोदशप्रदेशकं त्रयोदशप्रदेशयुक् तावत्सु त्रयोदशप्रदेशेषु यद्द्रव्यं अवगाढं स्यात्तज्जघन्यकं दशदिक्प्रभवं। तत्र चतुर्दिक्षु द्वौ द्वौ विदिक्षु चैकैकः मध्ये चैकः एवं त्रयोदश प्रदेशाः। उत्कृष्टं त्वनन्तप्रदेशात्मकं। तदपि त्रयोदशप्रदेशावगाढं एकैकाकाशप्रदेशेऽनन्ताणुस्थितेः तत् स्थापना— यद्वृत्तौ इदृश आकारो लिखितः तत्सर्वप्रदेशानां समक्षेत्रतायाः सम्बद्धतायाश्च ज्ञप्त्यै परं तस्य वृत्तत्वात्मतया स्थापना प्राग् लिखितैव ॥ १ ॥ क्षेत्रदिक् बहुभेदा, तत्प्ररूपणार्थं क्षेपकगाथाः। 'अट्ठपएसो रुयगो, तिरियं लोगस्स मज्झयारंमि। एस पभवो दिसाणं, एसेव भवेऽणुदिसाणं ॥ १ ॥' तिर्यग्लोकस्य मध्ये चत्वारोऽधश्चत्वारो ऊर्ध्वं, एवं अष्टनभःप्रदेशो मेरुगर्भस्थो रुचको गोस्तनाकारः, तथाहि ऊर्ध्वा ४ स्तिर्यग्लोकस्य मध्यभागे आयामविष्कम्भाभ्यां रज्जुमानौ सर्वप्रतराणां क्षुल्लकौ द्वौ नभःप्रदेशप्रतरौ। तयोश्च मेरुमध्यप्रदेशे मध्यं। तत्र च मध्ये उपरितनप्रतरस्य ये चत्वारः प्रदेशाः ये चाधस्तनस्य चत्वारस्तेषामष्टानां रुचक इति संज्ञा, एष दिशां प्रभव उत्पत्तिस्थानं

किं सामायिकमितिद्वारे दिग्द्वारम् ॥

अनुदिशां विदिशां । १ । 'दुपदेसादि दुरुत्तर, एगपदेसा अणुत्तरा चेव । चउरो चउरो य दिसा, चउरादि अणुत्तरा दोण्णि ॥ २ ॥' तस्माद्रुचकाद् बहिर्द्विप्रदेशादिका मूले द्विप्रदेशास्ततो द्विप्रदेशोत्तराभ्यां २ प्रदेशाभ्यां अधिकाश्चतस्रो दिशो वर्द्धन्ते चतस्रस्तु एकप्रदेशा विदिशस्ताश्चानुत्तरा न वर्द्धन्ते इत्यर्थः चत्वारो नभःप्रदेशा आदौ ययोस्ते चतुरादी अनुत्तरे वृद्धिरहिते द्वे ऊर्ध्वाधो दिशौ स्तः । २ । 'सगडुद्धिसंठिताओ, महदिसाओ भवंति चत्तारि। मुत्तावलि य चउरो, दो चेय य होन्ति रुयगतिभा ॥ ३ ॥' शकटोर्द्धिर्मूले लघ्वी ततः पृथ्वी तत्संस्थिताः तत्संस्थानाः चतस्रो महादिशः स्युः । चतस्रो विदिशो मुक्तावलीनिभाः एकप्रादेशिकत्वात् । द्वे ऊर्ध्वाधोदिशौ रुचकनिभे चतुःचतुःप्रदेशचतुरस्रदण्डसंस्थाने इत्यर्थः । ३ । स्थापनादिशां नामानि—

'इंदग्गेई जम्मा य णेरती वारुणी य वायव्वा । सोमा ईसाणाऽवि य, विमला य तमा य बोद्धव्वा ॥ ४ ॥' ऐन्द्री १ आग्नेयी २ याम्या ३ नैऋती ४ वारुणी ५ वायव्या ६ सौम्या ७ ऐशानी ८ विमला ९ तमा १० । ४ । 'इंदा य विजयद्दाराणुसारतो सेसया पदक्खिणतो । अट्ठ य तिरियदिसाओ उड्ढं विमला तमा चाधो ॥ ५ ॥' जम्बूद्वीपजगत्यां विजयद्वारं तदनुसारत ऐन्द्री, शेषा आग्नेयाद्याः प्रदक्षिणतः एवं अष्टैव तिर्यग्दिशः, ऊर्ध्वं विमलाख्या अधस्तमाख्या । ५ । अथ तापक्षेत्रदिक्, 'जेसिं जत्तो सूरो, उदेति तेसिं तई हवइ पुव्वा । तावक्खेत्तदिसाओ, पदाहिणं सेसिया तेसिं ॥ ६ ॥' येषां भरतादिक्षेत्रस्थानां यस्यां दिशि सूर्य उदेति सा तेषां पूर्वा स्यात् । तापः सूर्यस्तदुपलक्षिताः क्षेत्रदिशस्तापक्षेत्रदिशः शेषाः 'तेसिं' ततोऽस्याः पूर्वस्याः प्रदक्षिणया स्युः । ६ । अथ प्रज्ञापकदिक् 'पण्णवओ जदभिमुहो, सा पुव्वा सेसिया पदाहिणतो । तस्सेवणुगंतव्वा, अग्गेयादी दिसा

श्रदक्षिणतो ... स्यात्सा पूर्वा, शेषा आग्नेय्यादिदिशस्तस्या एव पूर्वस्याः प्रदक्षिणतो
नियमा ॥ ७ ॥' प्रज्ञापको वक्ता यस्या दिशोऽभिमुखः स्यात्सा पूर्वा, शेषा आग्नेय्यादिदिशस्तस्याः एव पूर्वस्याः प्रदक्षिणतो
नियमादनुगन्तव्या । ७ । भवेन पृथ्वीत्वादिपर्यायेण दिश्यतेऽयममुक इति संसारी यया सा भावदिक् अष्टादशधा यथा–
'पुढवीजलजलणवाया मूला खंधग्गपोरबीया य । बितिचउपंचेंदिय, तिरियनारगा देवसंघाया ॥ ८ ॥ संमुच्छिमकम्माकम्म,
भूमिगणरा तहऽन्तरद्दीवा । भावदिसा दिस्सइ, जं संसारी णिययमेताहिं ॥ ९ ॥' मूलबीजा उत्पलकन्दाद्याः, स्कन्धबीजाः
शल्लक्याद्याः, स्कन्धशाखाः, अग्रबीजाः, कोरंटकाद्या अग्रं शाखाग्रं, पर्व्वबीजा इक्ष्वाद्याः बीजरुहः, संमूर्च्छजभेदास्तेष्वे-
वान्तर्भूताः । द्वित्रिचतुरिन्द्रियास्तिर्यञ्चो नारकाः, देवसङ्घाताः, नराश्चतुर्द्धा, संमूर्च्छिमा वान्ताद्युत्थाः, तथा कर्म्मभूमिका
अकर्मभूमिकाः आन्तरद्वीपाश्च एवमष्टादशधा भावदिक्, यदेताभिर्भावदिग्भिः पृथ्व्यादिपर्यायरूपाभिः संसारी दिश्यते कथ्यते
। ८-९ । इह नामस्थापनाद्रव्यदिग्भिर्नाधिकारः । शेषामुपक्रमादाह 'पुवा'

पुव्वाईआसु महादिसासु, पडिवज्जमाणओ होइ । पुव्वपडिवन्नओ पुण, अन्नयरीए दिसाए उ॥८११॥

पूर्वप्रपन्नः पुनरन्यत-
मस्यां दिशि स्यादेव ॥ ८११ ॥ भाष्यं–'छिण्णावलिरुयगागिइदिसासु सामाइयं ण जं तासु । सुद्धासु णावगाहइ, जीवो ताओ
पुण फुसेज्जा ॥ १ ॥' छिन्नावलीकल्पासु विदिक्षु रुचकाकृतिदिशोरूर्ध्वाधोदिशोः सामायिकं न प्रपद्यते यत्तासु शुद्धासु
एकप्रादेशिकत्वेन चतुःप्रादेशिकत्वेन च जघन्यतोऽप्यसङ्ख्यप्रदेशावगाहको जीवो नावगाहते किन्तु सामायिकवान्
कोऽपि ताः स्पृशेत् । १ । 'अट्ठसु चउण्ह नियमा, पुव्वपवण्णो उ दोसु दोण्हेव । दोण्ह तु पुव्वपवण्णो, सिय णण्णो ताव-

गणां सामायिकानां प्रपद्यमानः स्यात्सम्भवति, कोऽर्थः ? यदा प्रपद्यते तदा स्यान्नान्यदेति ।

किं सामायिकमिति द्वारे दिग्द्वारम् ॥

पण्णवए ॥ २ ॥ ' तापक्षेत्रप्रज्ञापकयोरष्टासु दिक्षु चतुर्णां सामायिकानां पूर्वप्रपन्नोऽस्ति प्रपद्यमानश्च सम्भवति । द्वयोरूर्ध्वाधोदिशोस्तु द्वयोः सम्यक्त्वश्रुतसामायिकयोरेव ज्ञेयं । द्वयोर्देशसर्वसामायिकयोस्तु पूर्वप्रपन्नः ' सिया ' स्यादन्यः प्रपद्यमानस्तु नैव, इह यदूर्ध्वाधो देशसर्वसामायिकप्रतिपत्तिर्निषिद्धा तत्र हेतुर्न ज्ञायते । २ । भावदिक्षु पुनः—' उभयभावो पुढवादिएसु, विगलेसु होज्ज उ पवण्णो । पंचदियतिरिएसुं, णियमा तिण्हं सिय पवज्जे ॥ ३ ॥' पृथ्व्याद्येकेन्द्रियेषु चतुर्णां सामायिकानां उभयस्य पूर्वप्रपन्नप्रतिपाद्यमानरूपस्याभावः सिद्धान्तमतेनौपशमिकसम्यक्त्वं वमतस्तत्रानुत्पादात्, विकलेष्वौपशमिकसम्यक्त्वं वमत उत्पादात् सास्वादनभावेन सम्यक्त्वश्रुतयोः पूर्वप्रपन्नः स्यात् । पञ्चेन्द्रियतिर्यक्षु सर्वविरतिवर्जत्रयाणां सामायिकानां नियमात्, ' सिय 'त्ति कदाचित्प्रपत्ता स्यात्, पूर्वप्रपन्नस्त्वस्त्येव । ३ ।' णारगदेवाकम्मगअंतरदीवेसु दोण्ह भयणा उ । कम्मगणरेसु चउसुं, मुच्छेसु य उभयपडिसेहो ॥ ४ ॥' नारकदेवाकर्म्मभूमिजान्तरद्वीपनरेषु द्वयोः सम्यक्त्वश्रुतयोः पूर्वप्रपन्नः स्यात्, अन्यस्तु भाज्यः । कर्म्मभूमिजनरेषु चतुर्णां सामायिकानामप्येवं । संमूर्च्छिमेषु उभयनिषेधो न पूर्वप्रपन्नो न प्रपद्यमानश्च । ४ । गतं दिक्द्वा० २ । कालोऽवसर्पिण्युत्सर्पिण्यवस्थितभेदात् त्रिधा, तत्राद्यौ भरतैरवतयोः तृतीयस्तु चतुर्द्धा सुषमसुषमाप्रतिभागः १ सुषमप्रतिभागः २ सुषमदुःषमप्रति० ३ दुषमसुषमप्रतिभागश्च ४ प्रतिभागः साम्यं । तत्राद्यो देवोत्तरकुरुषु, द्वितीयो हरिवर्षरम्यकयोः, तृतीयो हैमवतैरण्यवतोः, चतुर्थो विदेहेषु । एवं षड्विधः कालः, तत्र ' सम्म '

**सम्मतस्स सुयस्स, य पडिवत्ती छव्विहंमि कालंमि । विरइं विरयाविरइं, पडिवज्जइ दोसु तिसु वावि ॥८१२॥**

परं प्रपत्ता सुषमदुषमादिषु देशोनपूर्वकोट्यायुःशेषे एव । पूर्वप्रपन्नास्तु सन्त्येव । ' विरहं ' उत्सर्पिण्यां दुषमसुषमा—

सुषमदुषमाख्ययोर्द्वयोरवसर्पिण्यां तु सुषमदुषमादुषमसुषमादुषमाख्येषु त्रिषु पूर्वप्रपन्नोऽस्त्येव, अपिशब्दात् संहरणं प्रतीत्य पूर्व-
प्रपन्नः सर्वकालेषु स्यात्, प्रतिभागकालेषु तु त्रिषु सम्यक्त्वश्रुतयोः प्रपत्ता स्यान्न वाऽन्यस्त्वस्त्येव, तुर्ये प्रतिभागे चतुर्णाम-
प्येवं । नागद्वीपादिषु तु प्रतिभागकालहीनेषु त्रयाणां सामायिकानामप्येवं । सर्वविरतेस्तु नन्दीश्वरादिषु यतिगमने पूर्वप्रपन्नः
सम्भाव्यः ॥ ८१२ ॥ गतं कालद्वा० ३ । अथ गतिद्वा० ‘ चउ ’

किं सामायिकमिति- द्वारे गति- भव्यसंज्ञि- द्वाराणि ॥

**चउसुवि गतीसु, णियमा सम्मत्तसुयस्स होइ पडिवत्ती । मणुएसु होइ विरती, विरयाविरई य तिरिएसुं ॥**

'चउसुवि' चतसृष्वपि गतिषु, नियमा सम्यक्त्वश्रुतयोर्नियमशब्दादेतास्वेव न मोक्षगतौ, ‘ विरती ’ सर्वविरतिः प्रतिपत्तिमाश्रित्य मनु-
ष्येषु सम्भवति । पूर्वप्रपन्नाः सन्त्येव, एवं विरताविरतिस्तिर्यक्षु ॥ ८१३ ॥ गतिद्वा० ४ । अथ भव्यः । ‘ भव ’

**भवसिद्धिओ उ जीवो, पडिवज्जइ सो चउण्हमण्णयरं । पडिसेहो पुण असण्णिमीसए सण्णि पडिवज्जे ॥**

भवे संसारे सिद्धिर्यस्य स भव्यश्चतुर्णामन्यतरत् यथासम्भवं, तत्रापि सम्यक्त्वश्रुते सहैव स्तः, द्वा० ५, एवं संज्ञ्यपि ।
पूर्वप्रपन्नो भव्यसंज्ञिष्वस्त्येव । असंज्ञिनि मिश्रे नोसंज्ञिनि नोअसंज्ञिनि सिद्धे इत्यर्थः । चतुर्णां सामायिकानां पूर्वप्रपन्नान-
ङ्गीकृत्य प्रतिषेधः, पुनःशब्दादसंज्ञिनि सम्यक्त्वश्रुते सास्वादनभावे न स्तः ॥ ८१४ ॥ संज्ञिद्वा० ६ । अथोच्छ्वासदृष्टि-
द्वारद्वयं ‘ ऊसा ’

**ऊसासगणीसासग, मीसग पडिसेह दुविह पडिवण्णो । दिट्ठीइ दो णया खलु, ववहारो निच्छओ चेव ॥**

उच्छ्वासकनिःश्वासक आनप्राणपर्याप्तिवानित्यर्थः । स च संज्ञिवत्, एतत् पर्याप्त्याऽपर्याप्त उच्छ्वासनिःश्वासरहितो वा मिश्र उच्यते । तत्र चतुर्णां सामायिकानां प्रतिपत्तिमाश्रित्य प्रतिषेधः, सम्यक्त्वश्रुतरूपद्विविधप्रपन्नोऽस्त्येव । यद्वा मिश्रः सिद्धः प्राग्वत् । शैलेशीस्थः पुनर्दर्शनचारित्रसामायिकयोः पूर्वप्रपन्नः स्यात् । ननु यथाऽस्य तथा सिद्धानां किं न सम्यक्त्व-सामायिकमित्युच्यते, शेषसामायिकत्रयस्य संसारस्थानामेव सम्भवात्सम्यक्त्वसामायिकमपि संसारसम्बन्ध्येवात्र विचार्यते । तादृशस्य सिद्धानामभावात्, उच्छ्वासद्वा० ७ । दृष्टिर्मतं, तत्र द्वौ नयौ निश्चयो व्यवहारश्च तत्राद्यस्य क्रियाकालनिष्ठा-कालयोरभेदात् सामायिकवानेव सामायिकं प्रपद्यते अन्यस्य तु सामायिकरहित एव ॥ ८१५ ॥ गतं दृष्टिद्वा० ८ 'आहा'

**आहारओ उ जीवो, पडिवज्जइ सो चउण्हमण्णयरं । एमेव य पज्जत्तो, सम्मत्तसुए सिया इयरो ॥८१६॥**

आहारयतीत्याहारकः तत्र 'विग्गहगइमावन्ना, केवलिणो समहया सजोगी य । सिद्धाय अणाहारा, सेसा आहारगा जीवा' ॥ १ ॥ स चतुर्णां अन्यतरत् प्रपद्यते पूर्वप्रपन्नस्त्वस्त्येव । गतं आहारद्वा० ९ । अथ पर्याप्तिद्वा० १० एवमेवाहारादिभिः षट्पर्याप्तिभिः पर्याप्तश्चतुर्णामन्यतरत् प्रपद्यते । पूर्वप्रपन्नस्त्वस्त्येव । इतरोऽनाहारकोऽपर्याप्तश्च सम्यक्त्वश्रुते अङ्गीकृत्य पूर्वप्र-पन्नः स्यात्, केवली तु समुद्घाते शैलेश्यवस्थायां च दर्शनचारित्रसामायिकयोः पूर्वप्रपन्नः स्यात् ॥ ८१६ ॥ गतं पर्याप्तिद्वा० १० । अथ सुप्तद्वा० ११ ' णिद्दा '

**णिद्दाए भावओऽवि य, जागरमाणो चउण्हमण्णयरं । अंडयपोयजराउय, तिग तिग चउरो भवे कमसो ॥**

किं सामायिकमिति-द्वारे उच्छ्वासादि-द्वाराणि ॥

द्रव्यसुप्तो निद्रया, भावसुप्तस्त्वज्ञानी। एवं द्रव्यजागर उन्निद्रो भावजागरस्तु सम्यग्दृग्, तत्र निद्रया भावतोऽपि च जाग्रत्संज्ञिवत्। अपरेयं विशेषः। भावजागर आद्यसामायिकयोः पूर्वप्रपन्न एवान्त्ययोस्तु प्रपत्ताऽपि, निद्रासुप्तः सर्वेषां पूर्वप्रपन्न एव। भावसुप्तस्तूभयशून्यः, व्यवहारनयात् प्रपद्यतेऽपि, गतं सुप्तद्वा० ११। अथ जन्म, तद्गर्भजानाश्रित्य त्रेधा अण्डज-पोतज-जरायुजभेदात्तत्र क्रमात्सामायिकानां त्रिकं त्रिकं चतुष्कं च पूर्वप्रपन्नं स्यादेव, प्रपद्यमानस्तु भाज्यः। पोतजा हस्त्याद्याः, जरायुजा नृगवाद्याः॥ ८१७॥ गतं जन्मद्वा० १२। अथ स्थितिद्वा० १३ 'उक्को'

**उक्कोसयद्विईए, पडिवज्जंते य णत्थि पडिवण्णो। अजहण्णमणुक्कोसे, पडिवज्जंते य पडिवण्णे॥८१८॥**

आयुर्वर्जकर्मणामुत्कृष्टस्थितौ चतुर्णां पूर्वप्रपन्नः प्रपद्यमानश्च न भवति। अजघन्यानुत्कृष्टस्थितौ चतुर्णां प्रपद्यमानः सम्भवति, पूर्वप्रपन्नश्च स्यादेव। आयुषस्तूत्कृष्टस्थितौ अनुत्तरसुरः आद्यसामायिकयोः पूर्वप्रपन्नः स्यात्। सप्तमभूनारकस्तु षण्मासशेषायुस्तथाविधविशुद्धियुक्तत्वादाद्यसामायिकयोः प्रथमसमये प्रपद्यमानो द्वितीयादिसमयेषु तु पूर्वप्रपन्नः स्यात्। आयुषो जघन्यस्थितिः क्षुल्लकभवः स च निगोदसूक्ष्मपृथ्वीकायादिसंमूर्च्छिमनृणां स्यात्। तत्र चतुर्णामपि सामायिकानाभावः, तथा आयुर्वर्जजघन्यकर्मस्थितिबन्धकस्तु दर्शनसप्तकातिक्रान्तः क्षपको योऽन्तकृत्केवली स्यात्, स ह्यपूर्वकरणावस्थायामासन्नमोक्षत्वेन विशुद्धतराध्यवसायत्वाच्छेषक्षपकेभ्योऽतिलघुस्थितिबन्धक इति स एव गृह्यते। स च देशविरतिवर्जसामायिकत्रयस्य पूर्वप्रपन्नः स्यात्, देशविरतिपरिणामाभावात्। अत्र च पूर्वोपात्तकर्मस्थित्या न विचारः किन्तु बध्यमानकर्मस्थित्यैव ॥ ८१८॥ गतं स्थितिद्वा० १३। अथ वेदसंज्ञाकषायद्वारत्रयं 'चउ'

किं सामायिकमिति-द्वारे सुप्तादीद्वाराणि॥

**चउरोऽवि तिविहवेदे, चउसुवि सण्णासु होइ पडिवत्ती। हेट्ठा जहा कसाएसु, वण्णियं तह य इहयंपि ॥**

चत्वारि सामायिकानि द्वेधाऽपि स्युस्त्रिविधवेदे, वेदको देशविरतिवर्जसामायिकानां पूर्वप्रपन्नः स्यात्, वेदद्वा० १४। आहारादिषु चतसृषु संज्ञासु चतुर्णां सामायिकानां प्रतिपत्तिः सम्भवति, पूर्वप्रपन्नस्त्वस्त्येव, संज्ञाद्वा० १५। कषायेषु यथा 'हेट्ठा' प्राक् 'पढमिल्लुगाण उदये' इत्यादावुक्तं तथेहापि ओघतः सकषायी संज्ञिवत्, अकषायी अवेदकवत् ॥ ८१९ ॥ कषायद्वा० १६। अथायुः ' संखि '

**संखिज्जाउ चउरो, भयणा सम्मसुयऽसंखवासाणं। ओहेण विभागेण य, नाणी पडिवज्जई चउरो ॥८२०॥**

सङ्ख्येयायुर्नरश्चत्वारि प्रपद्यते, असङ्ख्यवर्षायुषां सम्यक्त्वश्रुतयोः प्रपत्तिमाश्रित्य भजना, पूर्वप्रपन्नाः सन्त्येव, आयुर्द्वा० १७। अथ ज्ञानद्वा० १८, ओघेन सामान्येन ज्ञानी निश्चयनयमतेन चत्वार्यपि प्रपद्यते पूर्वप्रपन्नस्त्वस्त्येव, विभागेन त्वाद्यद्विज्ञानी आद्यसामायिकयोः सममेव प्रपत्ता स्यादिह यत्र प्रपद्यमानः स्यात्तत्र पूर्वप्रपन्नेन भाव्यमेवेति सर्वत्र ज्ञेयं। अन्त्यसामायिकयोरपि प्रपन्नः स्यात्। अवधिज्ञान्याद्ययोः पूर्वप्रपन्नः स्याद् देशविरतेरपि, न तु प्रपद्यमानः गुणपूर्वत्वात्तस्य। सर्वविरतेस्तु द्वेधापि स्यात्। मनोज्ञानी देशविरतिवर्जत्रयाणां पूर्वप्रपन्न एव, मनोज्ञानचारित्रे युगपद्वा प्रपद्यतेऽर्हद्वत्, भवस्थकेवली सम्यक्त्वचारित्रयोः पूर्वप्रपन्न एव ॥ ८२० ॥ गतं ज्ञानद्वा० १८। अथ योगोपयोगशरीरद्वारत्रयं ' चउ '

**चउरोऽवि तिविह जोगे, उवओगदुगंमि चउर पडिवज्जे। ओरालिए चउक्कं, सम्मसुय विउव्विए भयणा ॥**

किं सामायिकमिति-द्वारे वेदादिद्वाराणि॥

सामान्यतो मिलिते त्रिविधे योगे चत्वारि सामायिकानि स्युर्विशेषतस्त्वौदारिककाययोगवति योगत्रये चत्वारि द्वेधापि, वैक्रियकाययोगवति तु सम्यक्त्वश्रुते द्वेधापि। देशसर्वविरती तु पूर्वप्रपन्ने स्यातां, न तु प्रपद्यमाने, एवं आहारककाययोगवति तु देशविरतिवर्जं त्रीणि पूर्वप्रपन्नानि, तैजसकार्म्मणयोगयोस्त्वन्तरगतौ सम्यक्त्वश्रुते पूर्वप्रपन्ने। काययोगवाग्योगयोः प्रत्येकमन्यायोगेन द्वे आद्ये पूर्वप्रपन्ने स्तः, गतं योगद्वा० १९। 'उव०' ननु 'सव्वाओ लद्धीओ सागारोवओगोवउत्तस्स' इत्यागमात्कथमनाकारोपयोगे लब्धिरित्युच्यते-प्रवर्द्धमानपरिणामजीवापेक्षोऽयमागमोऽत्र चावस्थितौपशमिकपरिणामवन्तो, सागमनाकारोपयोगे सामायिकलब्धिकथनमित्यविरोधः। इह किल सम्यक्त्वं लब्ध्वा मिथ्यात्वगतानां पुनः शुभोदयात् प्रवर्द्धमानपरिणामे सति सम्यक्त्वादिलब्धिः साकारोपयोग एव स्यात्। आद्यसम्यक्त्वलाभकालेऽन्तरकरणे कृतेऽवस्थितपरिणामस्यानाकारोपयोगेऽप्यौपशमिकसम्यक्त्वश्रुतयोर्लब्धिःस्यात्कस्यापि विशुद्धतमत्वात्समकालमेव देशसर्वविरत्योरपि। अन्तरकरणेऽवस्थितपरिणामता त्वेवं-'जं मिच्छस्साणुदओ न हायए तेण तस्स परिणामो। जं पुण सयमुवसंतं न वड्ढए ऽवट्ठिओ तेण'। यत्पुनः सत् सत्तागतं मिथ्यात्वमुपशान्तं अतो न परिणामो वर्द्धते। अनिवर्त्तिकरणे हि मिथ्यात्वोपशान्त्यै प्रतिक्षणमासीत्परिणामवृद्धिः। अन्तरकरणे तूपशमनीयाऽभावाद्दाह्याभावे वह्नेरिव न परिणामस्य वृद्धिः तेनावस्थितः, उपयोगद्वा० २०। औदारिके चतुष्कं द्वेधापि। वैक्रिये सम्यक्त्वश्रुतयोर्भजना समर्थना। यथैते सामायिके द्वेधापि स्तोऽन्त्ये तु पूर्वप्रपन्न एव, यतः कृतवैक्रियाङ्गो मर्त्यो न प्रपद्यते प्रमत्तत्वात्॥ ८२१॥ शरीरद्वा० २१। अथ संस्थानसंहनमानद्वारत्रयं 'सव्वे'

**सव्वेसुवि संठाणेसु, लहइ एमेव सव्वसंघयणे। उक्कोसजहण्णं, वज्जिऊण माणं लहे मणुओ॥ ८२२॥**

क्व किं सामायिकमिति द्वारे योगोपयोगशरीरद्वाराणि॥

नीयकर्म्मपुद्गलशातं करोति । ततः समुद्घातान्निवृत्त्य स्वरूपस्थो भवति १ । कषायैः क्रोधादिभिर्हेतुभूतैः समुद्घातः कषाय-समुद्घातः । तीव्रकषायोदयाकुलितो हि प्राणी स्वप्रदेशाननन्तानन्तकर्म्मस्कन्धवेष्टितान् बहिः प्रक्षिपति । तैश्च प्रदेशैरुदरास्यकण्ठादिशुषिराणि कर्णस्कन्धाद्यन्तरालानि च पूरयित्वाऽऽयामविस्तराभ्यां देहमात्रं क्षेत्रमभिव्याप्यान्तर्मुहूर्त्तं यावत्तिष्ठति । तत्र चान्तर्मुहूर्त्ते प्रभूतकषायमोहनीयकर्म्मपुद्गलशातं विदधाति । ततः समुद्घातान्निवृत्त्य स्वरूपस्थो जायते इति २ । मरणमेव प्राणिनामन्तकारित्वादन्तो मरणान्तस्तत्र भवो मारणान्तिकः । स चासौ समुद्घातश्च मारणान्तिकसमुद्घातः । मरणसमये ह्यऽन्तर्मुहूर्त्तशेषे स्वायुषि केचिदसुमन्तोऽमुं कुर्वन्तीति मारणान्तिक उच्यते । यथा कश्चिज्जीवोऽन्तर्मुहूर्त्तशेषे स्वायुषि स्वशरीर-विष्कम्भबाहल्यान्वितं आयामतस्तु जघन्यतोऽङ्गुलासङ्ख्येयभागमात्रं, उत्कृष्टतस्त्वसङ्ख्येयानि योजनानि शरीराद् बहिः स्वप्रदेशदण्डं निसृजति निसृज्य च यत्र स्थानेऽग्रेतनभवे समुत्पत्स्यते तत्र स्थाने तं प्रदेशदण्डं प्रक्षिपति । तच्चोत्पत्तिस्थानं ऋजुगत्या एकेनैव समयेन प्रदेशदण्डः प्राप्नोति । विग्रहगत्या तूत्कृष्टतः पूर्ववत् चतुर्थे समये । अयं अन्तर्मुहूर्त्तमेव स्यात्तस्मिंश्चान्तर्मुहूर्त्ते प्रभूतायुष्कर्म्मपुद्गलशातं करोति ३ । वैक्रियशरीरनामकर्म्मविषयः समुद्घातो वैक्रियसमुद्घातः । वैक्रियशरीर-करणकालविषयो वा समुद्घातो यथा—वैक्रियशरीरलब्धिमान् जीवो वैक्रियकरणकाले विष्कम्भबाहल्याभ्यां शरीरप्रमाणं आयामतस्तु जघन्यतोऽङ्गुलसङ्ख्येयभागमात्रं, उत्कृष्टतस्तु सङ्ख्यातयोजनानि देहाद्बहिः स्वप्रदेशदण्डं करोति । अनन्तान् वैक्रियनामकर्म्माणून् प्राग्बद्धान् शातयति । अन्तर्मुहूर्त्ताद्देहान्तः प्रदेशान् क्षिपति ४ । तेजोलेश्यादिलब्धिमतस्तेजोलेश्यामोक्ष-समये तैजससमुद्घातः यथा—तेजोलेश्याकाले लब्धिमान् विष्कम्भबाहल्याभ्यां देहमानं, आयामतो जघन्यं अङ्गुलासङ्ख्य-

भागमानं, उत्कृष्टतः पुनः सङ्ख्येयानि योजनान्यऽनन्ततैजसशरीरस्कन्धवेष्टितानां जीवप्रदेशानां दण्डं शरीराद्बहिः प्रक्षिपति ततः क्रोधविषयीकृतं मनुष्यादि निर्दहति । एषोऽपि समुद्घातोऽन्तर्मुहूर्त्तं, तत्र चान्तर्मुहूर्त्ते प्रभूतांस्तैजसशरीरनामकर्म्मपुद्गलान् शातयति ततोऽन्तर्मुहूर्त्तात् समुद्घातान्निवृत्त्य स्वरूपस्थो भवति ५ । आहारकशरीरनामकर्म्मविषयः समुद्घातः आहारकसमुद्घातः, यदि वाऽऽहारकशरीरकरणकालविषयः समुद्घातः आहारकसमुद्घातः । यथाऽऽहारकशरीरलब्धिमांश्चतुर्दशपूर्वविदाहारकशरीरकरणकाले विष्कम्भबाहल्याभ्यां शरीरमानं आयामतस्तु जघन्यतोऽङ्गुलासङ्ख्येयभागमुत्कृष्टतस्तु सङ्ख्येयानि योजनानि शरीराद्बहिः स्वप्रदेशदण्डं निसृजति निसृज्य च यथा स्थूलान् प्रभूतानाहारकशरीरनामकर्म्मपुद्गलान् प्राग्बद्धान् शातयति । अयमप्यन्तर्मुहूर्त्तं, अन्तर्मुहूर्त्ताच्च समुद्घातान्निवर्त्तते । वेदनादिसमुद्घातेषु चतुष्करग पूर्वप्रपन्नः स्यान्नान्यः ॥ ८२५ ॥ इह नराणां सप्त समुद्घाताः, सुराणामाद्याः पञ्च, नारकाणां त्वाद्याश्चत्वारस्तेजोलेश्याया अभावात् । वैक्रियलब्धिमत्संज्ञितिर्यक्षां पञ्च, शेषतिरश्चामाद्यास्त्रयः, वायोश्चत्वारः । द्वा० २९ । अथ निर्वेष्टनोद्वर्त्तनद्वारद्वयं 'दव्वे'

**दव्वेण य भावेण य, निव्विट्ठंतो चउण्हमण्णयरं । नरएसु अणुवट्टे, दुगं चउक्कं सिया उ उवट्टे ॥ ८२६ ॥**

द्रव्यतो निर्वेष्टनं कर्म्मप्रदेशनिर्जरणं विघटनं, भावतः क्रोधादिहानं । तत्र सर्वकर्म्मनिर्वेष्टयन् चतुर्णां प्रपद्यमानः विशेषतस्तु ज्ञानावरणं निर्वेष्टयन् श्रुतसामायिकमाप्नोति । मोहनीयं तु शेषसामायिकानि । संवेष्टयंस्त्वनन्तानुबन्धादीननुभवंश्च शेषकर्म्माणि त्वेवमपि चत्वारि, निर्वेष्टन द्वा० ३० । नरकेष्वनुद्वृत्तस्तत्रस्थ एवेत्यर्थः आद्यसामायिकद्विकं प्रपद्यते उद्वृत्तस्तु स्यात्कदाचित् सामायिकानां चतुष्कं त्रिकं द्विकं वा लभते ॥ ८२६ ॥ 'तिरि'

क्व किं सामायिकमितिद्वारे निर्वेष्टनोद्वर्त्तनद्वारद्वयम् ॥

सर्वेषु समचतुरस्रादिसंस्थानेषु चत्वारि सामायिकानि, द्वा० २२। 'एमेव' संहननेषु वज्रऋषभादिष्वेवमेव, द्वा० २३। 'उक्को०' उत्कृष्टं जघन्यं च शरीरमानं उच्चत्वं वर्जयित्वा मनुजश्चत्वार्यपि लभते प्रपद्यते। उत्कृष्टे जघन्ये च माने सम्यक्त्वश्रुते एव, तत्र मनुष्याणां उत्कृष्टो देहस्त्रिगव्यूती, जघन्यो हस्तः स्यात्। तिरश्चामप्येवं, किन्तु मध्यममाने सामायिकत्रयं द्वेधापि स्यात्, तिरश्चामुत्कृष्टो देहः षड्गव्यूती, जघन्योऽङ्गुलासङ्ख्यभागः ॥८२२॥ उक्तं मानद्वा० २४, अथ लेश्याद्वा० २५ 'सम्म'

**सम्मत्तसुयं सव्वासु, लहइ सुद्धासु तीसु य चरित्तं। पुव्वपडिवण्णगो, पुण अण्णयरीए उ लेसाए ॥८२३॥**

सम्यक्त्वश्रुते सर्वासु लेश्यासु लभते। शुद्धासु तिसृष्विति तेजोलेश्याद्यासु तिसृष्वेव चारित्रं देशसर्वविरतिरूपं। तथा सर्वसामायिकानां पूर्वप्रपन्नः पुनरन्यतरस्यां लेश्यायां स्यात्। ननु मतिज्ञानसत्पदप्ररूपणायां शुद्धासु तिसृषु सम्यक्त्वश्रुते प्रपद्यमान उक्तोऽत्र सर्वास्विति किं? उच्यते—तत्र कृष्णादिद्रव्यसाचिव्यजनितात्मपरिणामरूपां भावलेश्यां आश्रित्यासावुक्त इह त्ववस्थितकृष्णादिद्रव्यरूपां द्रव्यलेश्यामाश्रित्येत्यदोषः, यतः नृतिरश्चां द्रव्यलेश्या भावलेश्या च प्रत्यन्तर्मुहूर्त्तमन्यान्या स्यादवस्तेषां द्रव्यतो भावतश्च विशुद्धलेश्यास्वेव सम्यक्त्वादिलाभः स्यान्नारकामराणां चानुभावतः शुद्धलेश्यात्रये। द्रव्यतोऽवस्थितलेश्याषट्कान्यतरलेश्यानामपि सम्यक्त्वाद्याप्तिः स्यादेव यतस्तेषां 'काऊ काऊ तह काउनील' इत्याद्यागमे या लेश्या उच्यन्ते ता आजीवितान्तं स्थिता एव न परावर्त्तन्ते। भावलेश्या तु परावृत्त्या कदाचित्कापि स्यात्, तत्र सत्यामपि कृष्णादिलेश्यायां नद्युपलवृत्तत्वन्यायेन कदाचित् शुभोदयेन शुक्लाद्यन्यतरशुद्धलेश्यार्हद्रव्याण्याक्षिप्यन्ते। न च तैः कृष्णादिलेश्या सर्वथा स्वरूपं त्यजति किन्तु तदाकारमात्रं, तत्प्रतिबिम्बमात्रं वाऽऽश्रयति, यथारिष्टरत्नं शङ्खादिप्रतिबिम्बे

|| ८२३ || लेश्याद्वा० २५ | अथ परिणामद्वा० 'वड्ढं'

**वड्ढंते परिणामे, पडिवज्जइ सो चउण्हमण्णयरं। एमेवऽवट्ठियंमिवि, हायंति न किंचि पडिवज्जे ॥८२४॥**

चतुर्णामन्यतरत् शुभशुभतरपरिणामे च वर्द्धमानेऽवस्थिते च प्रपद्यते, 'हायन्ति' हीयमाने न प्रपद्यते। पूर्वप्रपन्नाः सर्वत्र सन्ति। चूर्णौ तु उपयोगद्वारेऽनाकारोपयोगे परिणामद्वारेऽवस्थितपरिणामे च सर्वेषां पूर्वप्रपन्न एवेति ॥ ८२४ ॥ परिणामद्वा० २६ | वेदनासमुद्घातकर्मद्वारद्वयमाह 'दुवि'

**दुविहाए वेयणाए, पडिवज्जइ सो चउण्हमण्णयरं। असमोहओऽवि एमेव, पुवपडिवण्णए भयणा ॥**

द्विविधायां सातासातरूपायां वेदनायां, असमवहतः समुद्घातरहितोऽप्येवमेव वेदनावच्चतुर्णां पूर्वप्रपन्नः प्रपद्यमानश्च स्यात्। तथा पूर्वप्रपन्ने भजना समर्थनाऽस्त्येवेति कार्या। द्वा० २८। समवहतः समुद्घातवान्, तत्र सं इति केवलज्ञानवेदनादिभिः सहैकीभावेनात्मना वेदनीयादिकर्माणूनां कालान्तरानुभवार्हाणां उदीरणाकरणेनाऽऽकृष्योदये प्रक्षिप्य, उत् प्राबल्येन हननं समुद्घातः। स च सप्तधा, तत्र सप्तमः केवलिसमुद्घातोऽग्रे वक्ष्यते। तत्र च सम्यक्त्वचारित्ररूपसामायिकद्वयस्य पूर्वप्रपन्नः स्यान्नान्यः। तथा वेदनया सद्वेदनीयोदयजनितया पीडया हेतुभूतया समुद्घातो वेदनासमुद्घातः। वेदनाकरालितो ह्याकुलीभूतो जीवः स्वप्रदेशाननन्तानन्तकर्मस्कन्धवेष्टितान् शरीराद्बहिरपि प्रक्षिपति। तैश्च प्रदेशैर्जठरमुखबाह्वादिशुषिराणि कर्णस्कन्धान्तरालानि च पूर्याऽऽयामतो विस्तरतश्च शरीरमात्रं क्षेत्रमभिव्याप्यान्तर्मुहूर्त्तं यावत्तिष्ठति, तस्मिंश्चान्तर्मुहूर्त्ते प्रभूतासातवेद-

क्व किं सामायिकमितिद्वारे परिणामादि द्वाराणि ||

नीयकर्म्मपुद्गलशातं करोति । ततः समुद्घातान्निवृत्त्य स्वरूपस्थो भवति १ । कषायैः क्रोधादिभिर्हेतुभूतैः समुद्घातः कषायसमुद्घातः । तीव्रकषायोदयाकुलितो हि प्राणी स्वप्रदेशाननन्तानन्तकर्म्मस्कन्धवेष्टितान् बहिः प्रक्षिपति । तैश्च प्रदेशैरुदरास्यकण्ठादिशुषिराणि कर्णस्कन्धाद्यन्तरालानि च पूरयित्वाऽऽयामविस्तराभ्यां देहमात्रं क्षेत्रमभिव्याप्यान्तर्मुहूर्त्तं यावत्तिष्ठति । तत्र चान्तर्मुहूर्त्ते प्रभूतकषायमोहनीयकर्म्मपुद्गलशातं विदधाति । ततः समुद्घातान्निवृत्त्य स्वरूपस्थो जायते इति २ । मरणमेव प्राणिनामन्तकारित्वादन्तो मरणान्तस्तत्र भवो मारणान्तिकः । स चासौ समुद्घातश्च मारणान्तिकसमुद्घातः । मरणसमये ह्यन्तर्मुहूर्त्तशेषे स्वायुषि केचिदसुमन्तोऽमुं कुर्वन्तीति मारणान्तिक उच्यते । यथा कश्चिज्जीवोऽन्तर्मुहूर्त्तशेषे स्वायुषि स्वशरीरविष्कम्भबाहल्यान्वितं आयामतस्तु जघन्यतोऽङ्गुलासङ्ख्येयभागमात्रं, उत्कृष्टतस्त्वसङ्ख्येयानि योजनानि शरीराद् बहिः स्वप्रदेशदण्डं निसृजति निसृज्य च यत्र स्थानेऽग्रेतनभवे समुत्पत्स्यते तत्र स्थाने तं प्रदेशदण्डं प्रक्षिपति । तच्चोत्पत्तिस्थानं ऋजुगत्या एकेनैव समयेन प्रदेशदण्डः प्राप्नोति । विग्रहगत्या तूत्कृष्टतः पूर्ववत् चतुर्थे समये । अयं अन्तर्मुहूर्त्तमेव स्यात्तस्मिंश्चान्तर्मुहूर्त्ते प्रभूतायुष्कर्म्मपुद्गलशातं करोति ३ । वैक्रियशरीरनामकर्म्मविषयः समुद्घातो वैक्रियसमुद्घातः । वैक्रियशरीरकरणकालविषयो वा समुद्घातो यथा—वैक्रियशरीरलब्धिमान् जीवो वैक्रियकरणकाले विष्कम्भबाहल्याभ्यां शरीरप्रमाणं आयामतस्तु जघन्यतोऽङ्गुलसङ्ख्येयभागमात्रं, उत्कृष्टतस्तु सङ्ख्यातयोजनानि देहाद्बहिः स्वप्रदेशदण्डं करोति । अनन्तान् वैक्रियनामकर्म्माणून् प्राग्बद्धान् शातयति । अन्तर्मुहूर्त्तादेहान्तः प्रदेशान् क्षिपति ४ । तेजोलेश्यादिलब्धिमतस्तेजोलेश्यामोक्षसमये तैजससमुद्घातः यथा—तेजोलेश्याकाले लब्धिमान् विष्कम्भबाहल्याभ्यां देहमानं, आयामतो जघन्यं अङ्गुलासङ्ख्य-

क्व किं सामायिकमितिद्वारे वेदनादिद्वाराणि ॥

जीवप्रदेशानां दण्डं शरीराद्बहिः प्रक्षिपति
भागमानं, उत्कृष्टतः पुनः सङ्ख्येयानि योजनान्यऽनन्ततैजसशरीरस्कन्धवेष्टितानां
ततः क्रोधविषयीकृतं मनुष्यादि निर्दहति । एषोऽपि समुद्घातोऽन्तर्मुहूर्त्तं, तत्र चान्तर्मुहूर्त्ते प्रभूतांस्तैजसशरीरनामकर्म्मपुद्गलान्
शातयति ततोऽन्तर्मुहूर्त्तात् समुद्घातान्निवृत्त्य स्वरूपस्थो भवति ५ । आहारकशरीरनामकर्म्मविषयः समुद्घातः आहारकसमुद्
गातः, यदि वाऽऽहारकशरीरकरणकालविषयः समुद्घातः आहारकसमुद्घातः । यथाऽऽहारकशरीरलब्धिमांश्चतुर्दशपूर्वविदाहार-
कशरीरकरणकाले विष्कम्भबाहल्याभ्यां शरीरमानं आयामतस्तु जघन्यतोऽङ्गुलासङ्ख्येयभागमुत्कृष्टतस्तु सङ्ख्येयानि योजनानि
शरीराद्बहिः स्वप्रदेशदण्डं निसृजति निसृज्य च यथा स्थूलान् प्रभूतानाहारकशरीरनामकर्म्मपुद्गलान् प्राग्बद्धान् शातयति ।
तयमप्यन्तर्मुहूर्त्तं, अन्तर्मुहूर्त्ताच्च समुद्घातान्निवर्त्तते । वेदनादिसमुद्घातेषु चतुष्कस्य पूर्वप्रपन्नः स्यादन्यः ॥ ८२५ ॥ इह
नराणां सप्त समुद्घाताः, सुराणामाद्याः पञ्च, नारकाणां त्वाद्याश्चत्वारस्तेजोलेश्याया अभावात् । वैक्रियलब्धिमत्संज्ञितिर-
श्चां पञ्च, शेषतिरश्चामाद्यास्त्रयः, वायोश्चत्वारः । द्वा० २९ । अथ निर्वेष्टनोद्वर्त्तनद्वारद्वयं 'दव्वे'

दव्वेण य भावेण य, निव्विढंतो चउण्हमण्णयरं । नरएसु अणुवट्टे, दुगं चउक्कं सिया उ उवट्टे ॥ ८२६ ॥

द्रव्यतो निर्वेष्टनं कर्म्मप्रदेशनिर्जरणं विघटनं, भावतः क्रोधादिहानं । तत्र सर्वकर्म्मनिर्वेष्टयन् चतुर्णां प्रपद्यमानः विशे-
षतस्तु ज्ञानावरणं निर्वेष्टयन् श्रुतसामायिकमाप्नोति । मोहनीयं तु शेषसामायिकानि । संवेष्टयंस्त्वनन्तानुबन्धादीननुभवन्न
प्रपद्यते शेषकर्म्मांशिल्य द्वयोरपि नास्ति, निर्वेष्टन द्वा० ३० । नरकेष्वनुद्वृत्तस्तत्रस्थ एवेत्यर्थः आद्यसामायिकद्विकं प्रपद्यते
उद्वृत्तस्तु स्यात्कदाचित् सामायिकानां चतुष्कं त्रिकं द्विकं वा लभते ॥ ८२६ ॥ 'तिरि'

क्व किं सामायिकमितिद्वारे निर्वेष्टनोद्वर्त्तनद्वारद्वयम् ॥

**तिरिएसु अणुवट्टे, तिगं चउक्कं सिया उ उवट्टे । मणुएसु अणुवट्टे, चउरो ति दुगं तु उवट्टे ॥ ८२७ ॥**

तिर्यक्षु गर्भजेष्वनुद्वृत्तः सन्नादिसामायिकानां त्रिकं, उद्वृत्तः स्यात्कदाचित् सामायिकानां चतुष्कं त्रिकं द्विकं वा प्रपद्यते, मनुजेष्वनुद्वृत्तश्चत्वारि सामायिकानि उत्कृष्टतः प्रपद्यते, उद्वृतश्चत्वारि त्रीणि द्वे च प्रपद्यते परं सम्यक्त्वादिगुणवतां परभवे नृत्वस्यासंभवः ॥ ८२७ ॥ 'देवे'

**देवेसु अणुवट्टे, दुगं चउक्कं सिया उ उवट्टे । उवट्टमाणओ पुण, सव्वोऽवि न किंचि पडिवज्जे ॥८२८॥**

देवेष्वनुद्वृतः सन् द्विकं, उद्वृत्तस्तु यावच्चतुष्कं लभते । उद्वर्त्तमानोऽन्तरगतौ वर्तमानः सर्वोऽपि नारकादिर्न किञ्चित् प्रपद्यते पूर्वप्रपन्नस्तु द्वयोः स्यात् ॥ ८२८ ॥ उद्वर्त्तनद्वा० ३१ । अथाश्रवकरणद्वार ३२ 'णीस'

**णीसवमाणो जीवो, पडिवज्जइ सो चउण्हमण्णयरं । पुव्वपडिवण्णओ पुण सिय आसवओ व णीसवओ ॥**

निश्रावयन् सामायिकावरणकर्म्म निर्जरयन् शेषकर्म्म आश्रवयन् बध्नन्नपि चतुर्णामन्यतरत् प्रपद्यते । आश्रवको बन्धको निश्रावको निर्जरको वा चतुर्णां पूर्वप्रपन्नः स्यात् । निर्वेष्टननिश्रावकद्वारयोर्विचटननिर्गमरूपत्वाद्भेदः ॥ ८२९ ॥ आश्रवद्वा० ३२ । अलङ्कारशयनासनस्थानचङ्क्रमणान्याह 'उम्मु'

**उम्मुक्कमणुम्मुक्के, उम्मुंचंते य केसअलंकारे । पडिवज्जेज्जऽन्नयरं, सयणाईसुंपि एमेव ॥ ८३० ॥**

केशोपलक्षिते वस्त्रभूषाद्यलङ्कारे उन्मुक्तेऽनुन्मुक्ते इति तमुन्मुञ्चन्ननुन्मुञ्चंश्चतुर्णामन्यतरत्प्रपद्यते । शयनादिषु शयनास-

नद्वारयोरप्येवमेवोन्मुक्तानुन्मुक्तत्वादि ज्ञेयं । तथा स्थानस्थश्चङ्क्रममाणश्च चतुर्णां पूर्वप्रपन्नः प्रपद्यमानश्च स्यात् ॥ ८०३ ॥
चङ्क्रममाणद्वा० ३६ । गतं क्वेति मूलद्वारं । अथ केषु द्रव्येषु पर्यायेषु वा सामायिकमिति द्वारं 'सव'

**सवगयं सम्मत्तं, सुए चरित्ते ण पज्जवा सवे । देसविरइं पडुच्चा, दोण्हवि पडिसेहणं कुज्जा ॥८३१॥**

सर्वगतं सम्यक्त्वं जिनोक्तसर्वद्रव्यपर्यायरुचिलक्षणत्वात्तस्य, श्रुते चारित्रे च न सर्वे पर्याया विषयाः किन्तु सर्वद्रव्याणि, श्रुतस्याभिलाप्यविषयत्वात् द्रव्यस्य चाभिलाप्यानभिलाप्यपर्यायवत्त्वात्, चारित्रस्य तु 'पढमंमि सवजीवा' इत्यादिना सर्वद्रव्यासर्वपर्यायविषयतायाः प्रोक्तत्वात् । देशविरतिं प्रतीत्य द्वयोः सर्वद्रव्यसर्वपर्याययोः प्रतिषेधनं कुर्यात् न सर्वद्रव्यपर्यायविषयमिति । इह प्राक् किं द्वारे किं सामायिकमिति प्रश्ने सामायिकस्य स्वरूपं ज्ञापयता तदन्तर्गतो विषय उक्तोऽत्र तु स एव मुख्यवृत्त्या सर्वेषु सामायिकेषु दर्शित इति न पौनरुक्त्यं ॥ ८३१ ॥ केषुद्वा० १७ । कथं सामायिकं लभ्यते इति द्वारं, प्रतिपादनाय ... भिलाह-'माणु'

**माणुस्स खेत्त जाई, कुलरूवारोग्गमाउयं बुद्धी । सवणोग्गह सद्धा, संजमो य लोगंमि दुलहाइं ॥८३२॥**

मानुष्यं १ आर्यक्षेत्रं २ उत्तमजातिः ३ उत्तमं कुलं ४ मातृकी जातिः, पैतृकं कुलं, सुरूपता ५ आरोग्यं ६ चिरायुः ७ सद्बुद्धिः ८ सिद्धान्तश्रवणं ९ तदवग्रहस्तद्धारणा १० श्रद्धा रुचिः ११ संयमः सदनुष्ठानं १२ ॥ ८३२ ॥ 'इंदि'

**इंदियलद्धी निवत्तणा य पज्जत्ती निरुवयखेमं । धायारोग्गं सद्धा, गाहगउवओग अट्ठो य ॥ १ ॥**

केषु सामायिक-मिति-द्वारम् ॥

यद्वैतानि दुर्लभानि, इन्द्रियलब्धिः पञ्चेन्द्रियता १ निवर्त्तना सम्पूर्णेन्द्रियता २ इन्द्रियपर्याप्तिः स्वस्वविषयपटुता ३ निरूपहतेन्द्रियता कर्णदृगादिदोषराहित्यं ४ क्षेमं स्वास्थ्यं ५ ध्रातं सुभिक्षं आरोग्यं ६ श्रद्धा धर्म्मे ७ ग्राहयतीति ग्राहको धर्म्मकथयिता ८ उपयोगो धर्म्माभिमुख्यं ९ अर्थः धर्म्मेऽर्थित्वं १०। इयं गाथा अन्यकर्तृकीति न पौनरुक्त्यं ॥ १ ॥ 'चोल्ल'

**चोल्लग पासग धण्णे, जुए रयणे य सुमिण चक्के य। चम्मजुगे परमाणू, दस दिट्ठन्ता मणुयलंभे ॥८३३॥**

मानुष्यलाभे दश दृष्टान्ताः-चुल्लको देश्युक्त्या भोजनं, दृष्टान्तो यथा-ब्रह्मदत्तचक्रिपार्श्वे विप्रेण वरोऽयाचि, भरते सर्वगृहेषु मे भोजनं दीनारं च दापय, चक्रिणा च दत्ते स चक्रिराज्ञीसुतशेषनृपादिगृहेषु भुञ्जानः कदाचिद्रूपकरणशक्त्या सर्वौकस्सु भुक्त्वा पुनर्द्वितीयपरिपाटिं कुर्यान्न तु मानुष्याद्भ्रष्टो मानुष्यभाक् १। चाणाक्यो यन्त्रकृतैर्वरदत्तैर्वा पाशकै रमते। वक्ति च यो मां जयेत् स दीनारभृतं स्थालं लभते अहं जयामि तदा दीनारं लभे, ततः कदाचित्तान् सर्वाजेयान् पाशान् कोऽपि जयेन्न तु मानुष्याद्भ्रष्टो मानुष्यभाक् २। धान्यानि भरतवर्त्तीन्येकीकृत्यान्तः सर्षपप्रस्थं क्षिप्त्वा वृद्धा स्त्री कदापि तानि पृथक् कुर्यान्न तु मानु० ३ एकस्य राज्ञः सभायां अष्टोत्तरशतस्तम्भास्तेषु प्रत्येकं अष्टोत्तरशतधारास्तत्र राज्ञा राज्यगृद्धकुपुत्रस्योक्तं-चेत्त्वमेकेनैव द्विकाद्यायेन निरन्तरं सर्वस्तम्भानामेकैकाश्रिं अष्टोत्तरशतवारान् जयसि अस्माकं तु शेषा आयाः तदा ते राज्यं स्यात्तदपि सुराराधनादिना स्यान्न तु मानु० ४। पुत्रैः पितरि क्वापि गते पितृरत्नराशिर्वैदेशिकजनेष्वल्पस्वेन विक्रीतः, पित्रा मद्रत्नान्यादायायातेति ते निष्कासिताः कदापि सर्वरत्नानि मेलयेयुः न तु मानु० ५। स्वप्ने चन्द्रभक्षितुः कार्पटिकस्य शेषैर्गुडभृतं रोट्टकं लप्स्यसे इत्युक्ते तथैव जाते सोऽन्यस्य सदृक्स्वप्नद्रष्टुर्यथाविधिनैमित्तिकपृच्छातो राज्य-

प्राप्ति श्रुत्वा पुनः स्वप्नार्थं स्वपन् कदापि तं लभते न तु मानु० ६। चक्रदृष्टान्तो राधावेधेन कथायोगमध्ये वक्ष्यते । एवं राधावेधोऽपि कर्तुं शक्यते न तु मानु० ७। चर्मदृष्टान्तः योजनलक्षविस्तीर्णे चर्मणा नद्धे ह्रदे एकं छिद्रं तत्र कच्छपो वर्षशते ग्रीवां प्रसारयन् एकदाऽऽश्वमासे राकानिशीथे चन्द्रगर्भे ज्योतिश्चक्रं वीक्ष्य निजानां दर्शनाय जलान्तर्मग्नः सोऽपि कदापि तन्मकानां दर्शयेन्न तु मानु० ८ ॥ ८३३ ॥ युगदृष्टान्तः 'पुव्वं'

पुव्वंते होज्ज जुगं, अवरंते तस्स होज्ज समिला उ। जुगछिड्डुंमि पवेसो, इय संसइओ मणुयलंभो ॥८३४॥

स्वयम्भूरमणाब्धेः पूर्वान्ते युगं, तुरंचार्थे तस्यैवापरान्ते समिला। यथा तस्या युगछिद्रे प्रवेशः संशयितः संशयास्पदं, एवं मनुष्यत्वलाभः ९ ॥ ८३४ ॥ 'जह'

जह समिला पब्भट्ठा, सागरसलिले अणोरपारंमि। पविसेज्ज जुग्गछिड्डुं कहवि भमंती भमंतांमि ॥८३५॥

'अणोरपारंमि' देश्युक्त्या अपारे, युगात्प्रभ्रष्टा भ्रमन्ती युगे भ्रमति कथमपि युगछिद्रे प्रविशेत् ॥ ८३५ ॥ 'सा चं'

सा चंडवायवीचीपणुल्लिया, अवि लभेज्ज युगछिड्डुं। ण य माणुसाउ भट्ठो, जीवो पडिमाणुसं लहइ ॥

सा चण्डवातवीचीनिप्रेरिता युगच्छिद्रमपि न तु मानु० ॥ ८३६ ॥ परमाणुदृष्टान्तः एको महास्तम्भः सञ्चूर्ण्य सुरेण नालिकायां क्षिप्त्वा फूत्कृतः, सर्वाणवो नेशुः ततः कोऽपि तैरेव तं स्तम्भं कुर्यान्नतु मनुष्याद्भ्रष्टो दुर्लभबोधित्वेन च्युतस्तल्लभते लब्धमप्यनार्याणामलब्धमेव पशुप्रायत्वात्प्रत्युतदुर्गतिहेतुत्वाच्च १०। 'इय'

मानुष्य-द्वारे दश दृष्टांताः ॥

**इय दुल्लहलंभं, माणुसत्तणं पाविऊण जो जीवो। ण कुणइ पारत्तहियं सो सोयइ संकमणकाले ॥८३७॥**

परत्र हितं न कुर्यात् स सङ्क्रमणे मृतिकाले। यथा मानुष्यं दुर्लभं तथार्यक्षेत्रसुजातिकुलादीन्यपि दुर्लभानि ज्ञेयानि। यत्प्रज्ञापनादौ सङ्ख्यातायुषः सप्त, एकोऽसङ्ख्यातवर्षायुरेवं नृणां संलग्नं भवाष्टकमुक्तं, तत्कादाचित्कत्वादाश्चर्यप्रायमेव। यतो नृत्वे मूढजन्तुः पापं तनोत्येव तेन च भवं भ्रमति। ततो यावता कालेन देवताद्याराधनादेषां दशदृष्टान्तानां मध्ये एकोऽपि स्यात्तावता मूढजन्तुः पुनर्नृत्वं नाप्नोतीति घटते ॥ ८३७ ॥ 'जह'

**जह वारिमज्झछूढोव, गयवरो मच्छउव्व गलगहिओ। वग्गुरपडिउव्व मओ, संवट्टइओ जह व पक्खी ॥**

यथेति दृष्टान्तार्थे वारिमध्ये क्षिप्त इव गजः वारिर्गजबन्धनं, गलो मांसपिण्डान्तःस्थो लोहकण्टकस्तेन गृहीतो मत्स्य इव, वागुरापतितो मृगः, संवर्त्तं जालं इतः प्राप्तो यथा पक्षी ॥ ८३८ ॥ 'सो सो'

**सो सोयइ मच्चुजरासमोच्छुओ, तुरियणिद्दपक्खित्तो। तायारमविंदंतो, कम्मभरपणोल्लिओ जीवो ॥**

मृत्युजराभ्यां समास्तृतो व्याप्तः, त्वरितनिद्रा मृतिः तया प्रक्षिप्तोऽभिभूतः त्रातारमविन्दन् अलभमानः कर्म्मभरप्रेरितो जीवः शोचति ॥ ८३९ ॥ 'काऊ'

**काऊणमणेगाइं जम्ममरणपरियट्टणसयाइं। दुक्खेण माणुसत्तं, जइ लहइ जहिच्छिया जीवो ॥८४०॥**

जन्ममरणाभ्यां परिवर्त्तनं भवभ्रमणं, तेषां शतानि कृत्वा यथेप्सितं सामग्रीसहितं मानुष्यं ॥ ८४० ॥ 'तं त' 'आल'

तं तह दुल्लहलंभं, विज्जुलयाचंचलं माणुसत्तं । लद्धूण जो पमायइ, सो कापुरिसो न सप्पुरिसो ॥८४१॥

आलस्स मोहऽवण्णा, थंभा कोहा पमाय किवणत्ता । भयसोगा अण्णाणा, वक्खेव कुतूहला रमणा

मोहो मार्यादिः २ अवज्ञा किं धर्म्मेणेति किं वा भिक्षवो विदन्तीति वा ३ स्तम्भो जात्यादिगर्वः ४ क्रोधः ५ प्रमादो नि-

द्रादिः ६ कृपणत्वं यथा साधूनां किमपि दातव्यं भविष्यतीति ७ भयं यथा नारकादिभयं वर्णयन्ति नियमं ददतीति वा ८,

शोको धनस्वजनादिवियोगजो ९ ऽज्ञानं कुमतं १०, व्याक्षेपो वैयग्र्यं ११, कौतूहलो नटादेः १२ रमणं लावकादिखिड्ड

णियाश्च १३, प्राकृतत्वादाकारः ॥ ८४१-४२ । 'एए'

एतेहिं कारणेहिं, लद्धूण सुदुल्लहंपि माणुसत्तं । ण लहइ सुइं, हियकरिं संसारुत्तारणिं जीवो ॥८४३॥

मानुष्यं सुष्ठु अत्यर्थं दुर्लभमपि लब्ध्वा एभिः पूर्वोक्तैः १३ कारणैः 'सुइं' धर्म्मस्य श्रुतिं हितकर्त्रीं, व्रतादिसामग्रीयुक्

जीवः कर्म्मरिपून् जित्वा चारित्रसामायिकश्रियमाप्नोति, यथा यानाद्युपकरणयुग् योधो जयश्रियं लभत इति ॥ ८४३ ॥

आह च 'जाणा'

जाणावरणपहरणे, जुद्धे कुसलत्तणं च णीती य । दक्खत्तं ववसाओ, सरीरमारोग्गया चेव ॥ ८४४ ॥

यानं हस्त्यादि, आवरणं कवचादि, प्रहरणं खड्गादि, नीतिर्निर्गमप्रवेशरूपा, दक्षत्वमाशुकारित्वं, व्यवसायः शौर्यं

शरीरमविकलं आरोग्यता एतानि सुभटस्य जयहेतवः ॥ ८४४ ॥ तत्र 'जीवो जोहो जाणं, चयाणि आवरणमुत्तमा खंती ।

केषु सामायिक-
मितिद्वारे
मानुष्य-
द्वारम् ॥

ज्ञाणं पहरणमिट्ठं, गीयत्थत्तं च कोसल्लं ॥ १ ॥ ' गीतं सूत्रं अर्थो व्याख्या गीतार्थो । ततो ज्ञानानन्यत्वान्मुनिरपि गीतार्थः तस्य भावो गीतार्थत्वं युद्धकौशल्यं । १ । ' दव्वाइजहोवायाणुरूवपडिवत्तिवत्तिया णीति । दक्खत्तं किरियाणं जं करणमहीण-कालंमि ॥ २ ॥ ' द्रव्यादिषु द्रव्यक्षेत्रकालभावेषु यथोपायं उत्सर्गापवादाभ्यां याऽनुरूपा प्रतिपत्तिर्वर्त्तना सा नीतिः, न हीनेऽधिके वा काले क्रियाणां करणं दक्षत्वं। २ । ' करणं सहणं च तवोवसग्गदुग्गावतीए ववसाओ । एतेहिं सुणिरोगो, कम्मरिउं जिणति सव्वेहिं ॥ ३ ॥ ' दुर्गापदि घोरे कष्टे पतितस्य तपसः करणं उपसर्गाणां सहनमिति व्यवसायः । रोगैर्मनस्यव्यथितः अरोगी वा सुनीरोगः सन्नेतैर्हेतुभिः ॥ ३ ॥ यद्वा ' दिट्ठे '

**दिट्ठे सुएऽणुभूए, कम्माण खए कए उवसमे अ। मणवयणकायजोगे अ, पसत्थे लब्भए बोही ॥८४५॥**

दृष्टेऽर्हत्प्रतिमादौ सामायिकमाप्यते श्रेयांसवत् । यद्वा स्वयम्भूरमणमत्स्यानां अर्हत्प्रतिमासंस्थानान् मत्स्यान् पद्मानि वा दृष्ट्वा बोधिः स्यात्, श्रुते धर्म्मे आनन्दादिवत्। अनुभूते क्रियाकलापे वल्कलचीरिवत्, तस्य वल्कलप्रमार्जने प्राग्भवे चारित्रोपकरणस्मरणात्, कर्म्मणां क्षये कृते मरुदेवावत्, उपशमे क्षमायां अङ्गर्षिवत् । ' मण ' मनआदीनां योगे व्यापारे प्रशस्ते भव्ये सति बोधिः सामायिकं ॥ ८४५ ॥ यद्वा एवमपि सामायिकलाभः ' अणु '

**अणुकंपऽकामणिज्जर, बालतवे दाणवियणाविब्भंगे। संयोगविप्पओगे, वसणूसवइड्ढि सक्कारे ॥८४६॥**

अनुकम्पा १ अकामनिर्जरा २ बालतपः ३ दानं ४ विनयः ५ विभङ्गः ६ संयोगो विप्रयोगश्च श्रियः ८ व्यसनं कष्टं ९

उन्मत्तः १० ऋद्धिः ११ सत्कारः १२ एतैः सामायिकाप्तिः ॥ ८४६ ॥ क्रमाद् दृष्टान्ताः । 'वेज्जे' 'सोवा'

वेज्जे मेंठे तह इंदणाग, कयउण्ण पुप्फसालसुए । सिवदुमहुरवणिभाउय, आहीरदसण्णिलापुत्ते ।८४७।

सो वाणरजूहवती, कंतारे सुविहियाणु कंपाए । भासुरवरबोंदिधरो, देवो वेमाणिओ जाओ ॥ ८४८ ॥

अनुकम्पायां यथा कृष्णस्य वैतरणीवैद्यः साधूनां प्रासुकौषधं ददन्मृत्वा चिकित्साऽऽरम्भात्कपित्वं प्राप्तः । सुष्ठु स्थिताऽनुकम्पा सुनिहितानुकम्पा नगा, तत्र साधुमेकं कण्टकार्दितं वीक्ष्य जातिं स्मृत्वा औषध्या शल्यं कृष्ट्वा व्रणं च संरोध्य वर्णान् लिखित्वा प्राग्भवं ज्ञापयन् साधुबोधितस्त्रिदिनानशनात्सहस्रारं ययौ १ । मिंठो नुपूरपण्डिताकथायां राज्ञी-लुब्धः मगजीको निर्गतो देवकुले, राज्या चौरलुब्धया मिंठ एव चौरत्वेनार्पितः शूलीप्रोतः श्राद्धशिक्षितं नमस्कारं जलार्थं पठन्नकामनिर्जरया व्यन्तरो जातः सम्यक्त्वमाप, नमस्कारदातृश्राद्धं च चौरत्वाद्बद्धं शिलां विकुर्व्याऽमोचयत् । राज्ञीं नद्युत्तारं चौरेण सर्वमादाय त्यक्तां विषण्णां मामिषास्यजम्बुकरूपेणाबोधयत् २ । इन्द्रनागः परिव्राट् बालतपोनिष्ठः पारणमेक-गृहे एव कुर्व्वन् श्रीवीरादेशाद्गौतमेन भो अनेकपिण्डक ! एकपिण्डकस्त्वां द्रष्टुमिच्छतीत्युक्तोऽहो ! इमेऽनेकपिण्डका अहं त्वेकपिण्डक इति विमृशन् जज्ञे मत्पारणे पिण्डशतानि क्रियन्ते एते त्वेकमकृतपिण्डं भुञ्जते । ततो जातजातिस्मृतिः प्रत्येकबुद्धोऽभूत् ३ । साधुदानेन गोपालः गुरो भूत्वा कृतपुण्यो जातः प्राव्राजीत् ४ । विनये पुष्पशालगृहपतिसुतो विनयधर्म्मं श्रुत्वा मातरौ शुश्रूषत्यन्यदा तावपि ग्रामेशं नमन्तौ वीक्ष्यैष आभ्यामधिक इति तं सेवते तमप्यन्यं नमन्तं दृष्ट्वा तं सेवते एवं

यावच्छ्रेणिकं तमपि श्रीवीरमर्चन्तं दृष्ट्वा प्रभुमेत्योचे अहं वः सेवे स्वाम्याह वयं रजोहरणमात्रेणैव सेव्या इति श्रुत्वा बुद्धः ५। विभङ्गे शिवराजर्षिस्तापसः सप्तद्वीपाब्ध्यालोकिविभङ्गज्ञानी श्रीवीरगिराऽसङ्ख्यद्वीपाब्धीन् श्रुत्वा साशङ्को भ्रष्टविभङ्गः श्रीवीरान्तिके प्रव्रज्य केवली जातः ६। संयोगविप्रयोगयोः द्वौ मथुरावणिजौ, तत्र दक्षिणमथुरावणिक् सर्वां स्वर्णमयकुप्यादिश्रियमुत्पत्य यान्तीं वीक्ष्य श्रीवियोगात् प्राव्राजीत्, उत्तरमथुरावणिक् तामेव श्रियमायान्तीं वीक्ष्य कालेन तल्लक्ष्मीपतिसाधुवाक्यात्तां तत्सम्बन्धिनीं ज्ञात्वा श्रीसंयोगात्प्राव्राजीत् ८। व्यसने द्वौ भ्रातरौ गन्त्र्या यान्तौ आस्तां, तयोर्ज्येष्ठेन चक्कलण्डां ( चक्रौलंण्डिकां ) दृष्ट्वोक्तं गन्त्री टाल्येति, लघुना खेटिता चक्कलण्डा ( चक्रौलण्डिका ) मृत्वा गजपुरे स्त्री जाता, तौ द्वावपि यथाक्रमं तस्याः सुतौ जातौ। तत्र ज्येष्ठो राजललिताख्य इष्टोऽन्यस्त्वनिष्टत्वात् गर्भस्थो मार्यमाणोऽपि जीवन्, जातमात्रो मात्रा त्याज्यमानः पित्रा छन्नं वर्द्धितो गङ्गदत्ताह्वः इन्द्रमहे पर्यङ्काधः छादितो भोज्यमानो मात्रा दृष्ट्वा क्षाले क्षिप्तः पित्रा स्नापितो रोदन् साध्वागमे तद्वाण्या गुरुपार्श्वे निर्वेदात्प्राव्राजीत् ९। उत्सवे ग्रामाभीराः साधुभ्यः स्वर्गश्रियं श्रुत्वा कस्मिंश्चित्पर्वाहे द्वारिकापुर्याः श्रियं वीक्ष्य ततोऽपि स्वर्गमधिकं ज्ञात्वा प्राव्रजन् १०। दशार्णभद्रस्येन्द्रर्द्धिदर्शनाद्दीक्षा ११। असत्कारे कश्चिद् द्विजः सभार्यः प्राव्राजीत्, पत्नी तु जातिगर्वं चक्रे। द्वावपि मृत्वा सुरौ भूत्वा विप्र इलापुरे सार्थेशपत्न्या इलादेव्याराधनादिलापुत्रः विप्री तु गर्वाल्लङ्खसुताऽभूत्। इलापुत्रेणोद्वाहायायाचि। पितृभ्यां ऊचेऽस्मच्छिल्पेऽभ्यस्ते दद्म- स्ततोऽभ्यस्योद्वाहार्थं तया सह राज्ञोऽग्रे नाट्यं चक्रे यथा–वंशाग्रे तिर्यक्काष्ठं, काष्ठोभयपार्श्वयोः कीलिके स्थापिते। स्थापना।

१ द्विमुखसर्पम्.

कियच्चिरं कालमिति-द्वारम् ॥

इलापुत्रस्तलच्छिद्रे पादुके परिधायात्तखेटकासिः काष्ठोर्ध्वं स्थित्वोत्प्लुत्य सप्ताग्रतोमुखानि पश्चान्मुखानि च किरणानि दत्त्वा वारंवारं पादुकाच्छिद्रे कीलिकाः प्रावेशयत् । राजा कन्यामिच्छन् दानमयच्छन्निलापुत्रहत्यै पुनः पुनः नृत्यमकारयत्, स च राज्ञोऽमत्कारं दृष्ट्वा भावं च ज्ञात्वा साधून् विहरतः सुरूपस्त्रीष्वरागान्वीक्ष्य बाल्याधीतजीवाजीवादिविचारं स्मृत्वा वैराग्यात्केवलमभूत् १२ । यद्वा सत्कारे देवासुरसत्कृतार्हद्दर्शनान्मरीचेर्दीक्षा ॥ ८४८ ॥ यद्वा 'अब्भु'

**अब्भुट्ठाणे विणए, परक्कमे साहुसेवणाए य । संमद्दंसणलंभो, विरयाविरईइ विरईए ॥ ८४९ ॥**

अभ्युत्थाने कृते विनीतोऽयमिति साधवस्तस्मै धर्मं कथयन्ति । विनयोऽञ्जलिकर्मादि । पराक्रमः कषायजयं प्रति ॥ ८४९ ॥ गतं कथंद्वा० १८ । अथ कियच्चिरं कालमित्याह 'सम्म'

**सम्मत्तस्स सुयस्स य छावट्ठी सागरोवमाइं ठिई । सेसाण पुव्वकोडी, देसूणा होइ उक्कोसा ॥ ८५० ॥**

सम्यक्त्वस्य श्रुतस्य नैकजीनमाश्रित्य लब्ध्यपेक्षया षट्षष्टिसागराः परं साधिकाः, ते च कस्यचिज्जीवस्यैवं भवन्ति, यथा— 'दो वारे विजयाइसु गयस्स तिन्नच्चुए अ छावट्ठी । नरजम्मपुव्वकोडी पुहत्त उक्कोसओ अहियं' । १ । सम्यक्त्वं लब्ध्वा द्वौ वारौ विजयादिषु अनुत्तरेषु गतस्य जन्तोः षट्षष्टिसागराः, अधिकं तु तस्य नरजन्मानां पूर्वकोटीपृथक्त्वं । उत्कर्षत इदं प्रमाणं शेषयोर्देशसर्वविरत्योर्देशोना पूर्वकोटी वर्षाष्टकोना इत्यर्थः । जघन्यस्त्वाद्यसामायिकत्रयस्यान्तर्मुहूर्त्तं स्थितिः, सर्वविरतेस्तु समयः चारित्रपरिणामारम्भसमयानन्तरमेवायुःक्षयभावात् । देशविरतिप्रपत्तिस्त्वान्तर्मुहूर्त्तिक्येव, द्विविधत्रिविधादि-

भङ्गबहुलत्वात्, सर्वात्मापेक्षया तु सर्वाणि सर्वदा ॥ ८५० ॥ 'गतं कियच्चिरंद्वा० १९। अथ कति प्रपद्यन्ते इत्याह 'सम्म'

**सम्मत्तदेसविरया, पलियस्स असंखभागमेत्ता उ। सेढीअसंखभागो, सुए सहस्सग्गसो विरई ॥८५१॥**

सम्यक्त्ववंतो देशविरताश्च क्षेत्रपल्यासङ्ख्यैकभागप्रदेशसमाः, किन्तु देशसामायिकप्रपतृभ्यः सम्यक्त्वप्रपत्तारोऽसङ्ख्यगुणाः। सप्तरज्जुमानैकप्रदेशनिष्पन्नश्रेणेरसङ्ख्यभागे यावन्तः प्रदेशास्तावन्तः सामान्येनाक्षरात्मके सम्यग्मिथ्याश्रुते प्रपत्तारः। सर्वविरतेः प्रपत्तॄणां सहस्राग्रशः सहस्रपृथक्त्वं, एतच्चोत्कृष्टतः जघन्येन सर्वेष्वेको द्वौ वा विवक्षितसमये ॥ ८५१ ॥ 'सम्म'

**सम्मत्तदेसविरया, पडिवन्ना संपई असंखेज्जा। संखेज्जा य चरित्ते, तीसुवि पडिया अणंतगुणा ॥८५२॥**

सम्यक्त्वदेशविरत्योर्जघन्याः पूर्वप्रपन्नाः सम्प्रति असङ्ख्याः, उत्कृष्टास्तु त एव विशेषाधिकाः प्रपद्यमानेभ्योऽसङ्ख्यगुणाः इति। चारित्रे सङ्ख्याताः पूर्वप्रपन्नाः। त्रिभ्योऽपि चारित्रदेशचारित्रसम्यक्त्वेभ्यः प्रतिपतिताः अनन्तगुणाः कोऽर्थः सम्यग्दृष्ट्यादिभ्यः पूर्वप्रपन्नेभ्य प्रपद्यमानेभ्यः चरणपतिता अनन्तगुणास्तेभ्यो देशसामायिकपतिता असङ्ख्यगुणास्तेभ्योऽपि सम्यक्त्वपतिता असङ्ख्यगुणाः ॥ ८५१ ॥ 'सुय'

**सुयपडिवण्णा संपइ, पयरस्स असंखभागमेता उ। सेसा संसारत्था, सुयपरिवडिया हु ते सव्वे ॥८५३॥**

सामान्यतोऽक्षरात्मकश्रुते पूर्वप्रपन्नाः सप्तरज्जुविस्तरायामचतुरस्रप्रतरस्यासङ्ख्येयतमे भागे या श्रेण्योऽसङ्ख्यास्तासु यावन्तो नभःप्रदेशास्तावन्मानाः स्युः। श्रुतप्रपन्नप्रपद्यमानकेभ्यस्तु ये शेषाः संसारस्था भाषालब्धिहीनाः पृथ्व्याद्यास्ते

सर्वेऽपि व्यवहारराशिगता भाषालब्धिप्रतिपतितत्वात्, श्रुतपतिता ज्ञेयास्ते च सम्यक्त्वपतितेभ्योऽनन्तगुणाः ॥ ८५३ ॥ उक्तं कलिका० २० । अथ सान्तरमाह ‘ काल ’

सान्तरा-
विरहित-
द्वारम् ॥

**कालमणंतं च सुए, अद्धापरियट्टओ उ देसूणो । आसायणबहुलाणं, उक्कोसं अंतरं होइ ॥ ८५४ ॥**

सामान्येन श्रुतेऽनन्तपुद्गलपरावर्त्तरूपोऽनन्तकालोऽन्तरं, अनुस्वारोऽलाक्षणिकः, द्वीन्द्रियादीनां वनस्पतिषूषित्वा पुनरियत्कालेन द्वीन्द्रियत्वावाप्तेः । शेषसामायिकत्रयस्य देशोनः ‘ अद्धाः ’ अर्द्धः प्राकृतत्वादाकारः, ‘परियट्टओ’ पुद्गलपरावर्त्तः तन्मध्य एव सम्यक्त्वादि लब्ध्वा मोक्षं यातीति । देशोनत्वं प्रवचनाद्याशातनाबहुलानां, जघन्यं सर्वेष्वन्तर्मुहूर्त्तं ॥ ८५४ ॥ गतमन्तर द्वा० २१ । अथाविरहितमाह ‘ सम्म ’

**सम्मसुयअगारीणं, आवलियअसंखभागमेत्ता उ । अट्ठ समया चरित्ते, सव्वेसु जहन्न दो समया ॥८५५॥**

नानाजीवानाश्रित्य सम्यक्त्वश्रुतागारिणां सम्यक्त्वश्रुतदेशसामायिकानां नैरन्तर्येण प्रपत्तिकाल आवलिकाऽसङ्ख्यभागमात्राः समयाः । एवं ‘ अट्ठ ’ ॥ ८५५ ॥ प्रसङ्गादाह ‘ सुय ’

**सुयसम्म सत्तयं खलु, विरयाविरईय होइ बारसगं । विरईए पन्नरसगं, विरहियकालो अहोरत्ता ॥८५६॥**

श्रुतसम्यक्त्वयोरुत्कृष्टतः प्रपत्तिविरहः सप्ताहोरात्राणि । जघन्यः एकः समयः । ‘ विरया० ’ द्वादश अहोरात्राणि ‘ विरईए० ’ द्वयोर्जघन्यः समयत्रिकं ॥ ८५६ ॥ गतं अविरहितं द्वा० २२ । अथ भवाः ‘ सम्म ’

**सम्मत्तदेस वरई, पलियस्स असंखभागमेत्ताओ। अट्ठ भवा उ चरित्ते, अणंतकालं च सुयसमए ॥८५७॥**

सम्यक्त्ववतां देशविरतानां चैतत्सामायिकद्वयप्रतिपत्तिमाश्रित्य क्षेत्रपल्यासङ्ख्यभागप्रदेशमात्रा भवाः स्युः। एवं 'अट्ठ' अनन्तकालोऽनन्तभवरूपः श्रुतसमये सामान्ये श्रुतसामायिके, सर्वेषां जघन्यतस्त्वेको भवः ॥८५७॥ भवद्वा० २३। अथाकर्षाः—

**तिण्ह सहस्सपुहुत्तं, सयपुहुत्तं च होइ विरईए। एगभवे आगरिसा, एवतिया हौंति नायव्वा ॥८५८॥**

प्रथमतया ग्रहणं मुक्तस्य वा आकर्षणं ग्रहणं आकर्षस्त्रयाणां सम्यक्त्वादीनां एकभवे सहस्रपृथक्त्वं आकर्षाणां भवति। 'विरईए' सर्वविरतेः शतपृथक्त्वं एतावन्त आकर्षा ज्ञातव्या भवन्ति। सर्वेषां जघन्यस्त्वेक आकर्षः ॥८५८॥ अतः 'तिण्ह'

**तिण्ह सहस्समसंखा, सहसपुहुत्तं च होइ विरईए। णाणभवे आगरिसा, एवइया हौंति णायव्वा ॥८५९॥**

नानाभवमीलिताः ॥ ८५९ ॥ आकर्षद्वा० २४। अथ स्पर्शना, 'सम्म'

**सम्मत्तचरणसहिया, सव्वं लोगं फुसे णिरवसेसं। सत्त य चोद्दसभागे, पंच य सुयदेसविरईए ॥८६०॥**

सम्यक्त्वचरणसहिता उत्कर्षतः केवलिसमुद्घातक्षणे सर्वं लोकं स्पृशन्ति निरवशेषमिति प्रतिनभःप्रदेशं स्वात्मप्रदेशैरिति, जघन्येन तु लोकासङ्ख्यं भागं। 'सुय०'त्ति, सम्यक्त्वश्रुतयुक्ताः सप्तचतुर्दशभागान् स्पृशन्त्यऽनुत्तरेष्विलिकागत्या उत्पत्तेः, षष्ठभुव्युत्पत्तौ पञ्च, देशविरत्या युक्ताः पञ्चैव अच्युतस्वर्गोत्पादात्, अधस्तु ते न यान्त्येव ॥ ८६० ॥ क्षेत्रस्पर्शनामुक्त्वा भावस्पर्शनामाह 'सव्व'

सव्वजीवेहिं सुयं, सम्मचरित्ताइं सव्वसिद्धेहिं । भागेहिं असंखेज्जेहिं, फासिया देसविरईओ ॥ ८६१ ॥

सर्वजीवैर्व्यवहारराशिस्थैः सामान्यश्रुतं स्पृष्टं, द्वीन्द्रियादिभावस्य प्रायः सर्वैरपि स्पृष्टत्वात्, अस्पृष्टद्वीन्द्रियादिभावानां स्तोकत्वेनाविवक्षितत्वाच । एषा युक्तिः ' सेसा संसारत्था ' इत्यत्रापि ज्ञेया । सम्यक्त्वचारित्रे श्रुतमपि सर्वसिद्धैः, भागैः सर्वसिद्धानां बुद्ध्याऽसङ्ख्यभागीकृतानां सर्वैरसङ्ख्यभागैर्देशविरतिः स्पृष्टा, एकेन त्वसङ्ख्यभागेन न स्पृष्टा यथा मरुदेव्या ॥ ८६१ ॥ गतं स्पर्शनाद्वा० २५ अथ चतुर्विधस्यापि सामायिकस्य निरुक्तिः क्रियाकारकभेदपर्यायैर्निर्वचनं क्रमात् ' सम्म '

सम्मद्दिट्ठि[1] अमोहो[2] सोही[3] सब्भाव[4] दंसणं[5] बोही[6]। अविवज्जओ सुदिट्ठित्ति, एवमाई निरुत्ताइं ॥ ८६२ ॥

सम्यगर्थानां दर्शनं सम्यग्दृष्टिः १, विचारेऽमूढत्वं अमोहः २, मिथ्यात्वमलापगमः शोधिः ३, सद्भावो यथास्थाऽर्थस्य दर्शनं ४, परमार्थज्ञानं बोधिः ५, अवितथग्रहोऽविपर्ययः ६, शोभना दृष्टिः सुदृष्टिः ७, सम्यक्त्वस्य निरुक्तिः ॥ ८६२ ॥ ' अक्ख '

अक्खरसन्नी संमं, सादियं खलु सपज्जवसियं च। गमियं अंगपविट्ठं, सत्तवि एए सपडिवक्खा ॥८६३॥

प्रागवत् एषा । श्रुतस्य भेदेन निरुक्तिः ॥ ८६३ ॥ ' विर '

विरयाविरई[1] संवुडमसंवुडे[2] बालपंडिए[3] चेव । देसेक्कदेसविरई[4], अणुधम्मो[5] अगारधम्मो[6] य ॥ ८६४ ॥

विरताविरतं संवृतासंवृतं । बालपण्डितं देशतोऽविरतत्वेन बालत्वं विरतत्वेन च पण्डितत्वं । देशः स्थूलप्राणातिपात एकदेश आद्य-

सामायिकस्य निरुक्तिः ॥

महाव्रतस्य प्रौढवनस्पतिकायाद्यतिपातः ताभ्यां विरतो निवृत्तः देशैकदेशविरतः। अणुरल्पो धम्मोऽणुधर्म्मः, अगारं गृहं तत्स्थानां धर्म्मः ॥ ८६४ ॥ 'सामा'

**सामाइयं[1] समइयं[2], सम्मावाओ[3] समास[4] संखेवो[5]। अणवज्जं[6] च परिण्णा[7], पच्चक्खाणे[8] य ते अट्ठ॥८६५॥**

समो मध्यस्थस्तस्य अयो गमनं परिणमनं समायः स एव सामायिकं १ सम्यक् अयो दयापूर्वकं यानं समयिकं २ रागादिराहित्येन वदनं सम्यग्वादः ३ सम्यक् असनं रागादीनां निराकरणं समासः ४ संक्षेपेणाऽल्पाक्षरैर्द्वादशाङ्गपिण्डार्थवत्वात् ५ नास्त्यवद्यमत्रेत्यनवद्यं ६ परिज्ञानं जीवाजीवादीनामत्रेति परिज्ञा ७ गुरुं प्रति सावद्यनिवृत्तेराख्यानं प्रत्याख्यानं ८ अष्टौ चारित्रसामायिकपर्यायाः ॥ ८६५ ॥ एष्वष्टौ क्रमाद् दृष्टान्ताः 'दम'

**दमदंते[1] मेयज्जे[2] कालयपुच्छा[3] चिलाय[4] अत्तेय[5]। धम्मरुई[6] इला[7], तेयलि[8] सामाइए अट्ठुदाहरणा ॥८६६॥**

दमदान्तः १ मेतार्यः २ कालकगुरोः पार्श्वे पृच्छा ३ चिलातीपुत्रः ४ आत्रेयः ५ धर्म्मरुचिः ६ इलापुत्रः ७ तेतलिपुत्रः ८ ॥ ८६६ ॥ भाष्यं 'निक्खं'

**निक्खंतो हत्थिसीसा, दमदंतो कामभोगमवहाय। णवि रज्जइ रत्तेसुं, दुट्ठेसु ण दोसमावज्जे ॥१५१॥**

हस्तिशीर्षपुराद्दमदान्तो राट् जरासंघपार्श्वे गत्वा यातः कृतदेशध्वंसान् पाण्डवकौरवान् ज्ञात्वा गजपुरं गत्वा युद्धार्थं तान् निःसरतस्त्यक्त्वा पुरमागतः कालेन कामभोगानपहाय त्यक्त्वा निःक्रान्तः। गजपुरे कायोत्सर्गस्थः पाण्डवै राजपाठ्यां

र्गमनतो दुर्योधनेन मातुलिङ्गेन हतः सेनया त्वश्मभिः प्रहतस्तथापि रक्तेषु न रज्यते दुष्टेषु द्वेषं नापद्यते, निवृत्तैः पाण्डवैरश्मराशिं दृष्ट्वा कुरवस्ताडिता अश्मनोऽपनीय साधुश्चिकित्सित्वा क्षामितः ॥ १५१ ॥ युक्तं चैतद्यतीनां यतः 'वंदि'

वंदिज्जमाणा न समुक्कसंति, हीलिज्जमाणा न समुज्जलंति।
दंतेण चित्तेण चरंति धीरा, मुणी समुग्घाइयरागदोसा ॥ ८६७ ॥

न समुत्कर्षन्ति न कोपान्समुज्ज्वलन्ति। समुद्घातितौ हतौ रागद्वेषौ यैः हन्त्यर्थाश्चेति चुरादित्वात् स्वार्थे णिच् ॥८६७॥ प्राकृते सुमना अपि समण उच्यते। तत आह 'तो स'

तो समणो जइ सुमणो, भावेण य जइ ण होइ पावमणो। सयणे य जणे य समो, समो य माणावमाणेसुं॥

ततः समणो यदि सुमनाः स्यात्। स च कथमित्याह–भावेनापि न पापमनाः स्वजनेऽन्यजनेऽपि च समः मानापमानयोः समः। ततः समममनस्त्वात् समना अपि ॥ ८६८ ॥ 'णत्थि'

णत्थि य सि कोइ वेसो, पिओ व सव्वेसु चेव जीवेसु। एएण होइ समणो, एसो अण्णोवि पज्जाओ ॥८६९॥

'से' तस्य 'सव्वे०' सर्वेषां जीवानां मध्ये कोऽपि द्वेष्यः प्रियो वा नास्ति च। सं सामस्त्येन अणति सर्वजीवेषु समतया गच्छतीति समणः ॥ ८६९ ॥ गतं सामायिकद्वा० १। अथ समयिके दृष्टान्तः 'जो कों'

जो कोंचगावराहे, पाणिदया कोंचगं तु णाइक्खे । जीवियमणपेहंतं, मेयज्जरिसिं णमंसामि ॥८७०॥

यः क्रौञ्चस्य स्वर्णयवभक्षणरूपेऽपराधे स्वर्णकृतोऽर्दितोऽपि दयया क्रौञ्चं नाख्यत्। तं स्वं जीवितमनपेक्षमाणं ॥८७०॥ 'णिप्फे'

णिप्फेडियाणि दोण्णिवि, सीसावेढेण जस्स अच्छीणि। ण य संजमाउ चलिओ, मेयज्जो मंदरगिरि व्व॥८७१

निस्फेटिते निर्गते आर्द्रचर्मणा शीर्षवेष्टेन यस्याक्ष्णी ॥ ८७१ ॥ गतं समयिकं द्वा० २ । सम्यग्वादे ' दत्ते '

दत्तेण पुच्छिओ जो, जण्णफलं कालओ तुरुमिणीए। समयाए आहिएणं, संमं वुइयं भदंतेणं ॥८७२॥

विप्रेण दत्तेन राज्ञा तुरुमिणीपुर्यां मातुलः कालकाचार्यो यज्ञफलं पृष्टः । तेन भदन्तेन समतया हितेन मध्यस्थतया गृहीतेन यज्ञानां नरकाः फलं इति सम्यगुदितं । राज्ञा क्रोधात् किं चिह्नमित्युक्ते सप्तमेऽह्नि त्वं मर्त्ता, तत्रापि किं चिह्नं ? तद्दिनादौ विड् मुखे गन्ता । सूरे! कथं ते मृत्युः? चिरं दीक्षया स्वर्गतिः । आरक्षकैः सूरी रुद्धः, सेना च द्विजे निर्विण्णा, राड् बद्धो मुक्तो इत्यादि ॥ ९४ ॥ गतः सम्यग्वादः ३ । अथ समासः द्विजो वादी । जैनान्निन्दन् प्रतिज्ञावान् साधुभिर्जित्वा दीक्षितः, सद्वेषः सुरीनुन्नः प्रबुद्धोऽपि साधून् कुत्सते, भार्या श्राद्धिका जाता स्नेहात्कार्मणं चक्रे मृतः, सा विषन्ना प्रव्रज्याऽनालोच्य स्वर्ययौ । स राजगृहे धनगृहिणश्चिलातीदासीपुत्रः, सा तस्य श्रेष्ठिनः पञ्चपुत्रोर्ध्वं सुसुमा पुत्र्यभूत् । तयोः क्रीडायां स स्त्रीचिह्ने विक्रियां कुर्वन्निर्वासितः सिंहगुहां चौरपल्लीं गतः । उग्रप्रहारत्वात्सैनेशे मृते स्वामी जातश्चौरैः सह धनं वः कन्या ममेत्युक्त्वाऽवस्वापिनीं दत्त्वा स्वं प्रज्ञाप्य धनगृहे प्रविश्य धनं कन्यां च लात्वाऽगात् । श्रेष्ठी सपुत्रः प्राग् नंष्ट्वा लोकानूचे धनं वस्ततस्तैः स्तेना भग्नाः ।

लोको भूतो निवृत्तः । श्रेष्ठी चिलातपृष्ठेऽगात् । स च कन्यां लात्वा गन्तुमशक्तः शीर्षमादाय नष्टः, श्रेष्ठी कबन्धं प्राप्य निवृत्त इत्यादि । चिलातो दिग्मूढः साधुं दृष्ट्वोचे–संक्षेपाद् धर्मं वद नो चेच्छिरश्छेत्स्यामि, साधुस्तु 'उवसमविवेगसंवर' इत्याख्यत्, स चैकान्ते गत्वा साधूक्तं ध्यायन्नसिशीर्षे त्यक्त्वा ध्यानेऽस्थात् ॥ ८७२ ॥ तत्र 'जो ति'

जो तिहि पएहि, सम्मं समभिगओ संजमं समारूढो । उवसमविवेयसंवर, चिलायपुत्तं णमंसामि ॥ ८७३

उपशमादिभिस्त्रिभिः पदैः 'सम्मं'ति सम्यक्त्वं समभिगतः ॥ ८७३ ॥ 'अहि'

अहिसरिया पाएहिं, सोणियगंधेण जस्स कीडीओ । खायंति उत्तमंगं, तं दुक्करकारयं वंदे ॥८७४॥

अभिसृताः प्रविष्टाः पादाभ्यां स्त्रीवधे रक्तलिप्तत्वात् शोणितगन्धेन ॥ ८७४ ॥ 'धीरो'

धीरो चिलायपुत्तो, मूयइंगलियाहिं चालिणिव्व कओ । सो तहवि खज्जमाणो, पडिवण्णो उत्तमं अट्ठं ॥८७५

मुद्गलमुखाभिः कीटिकाभिः शुभाशयाऽत्यागादुत्तममर्थं तत्त्वार्थं प्रपन्नः ॥ ८७५ ॥ 'अड्ढा'

अड्ढाइज्जेहिं राइंदिएहिं पत्तं चिलाइपुत्तेणं । देविंदामरभवणं, अच्छरगणसंकुलं रम्मं ॥ ८७६ ॥

सहस्रारे देवेन्द्रतुल्यामरस्य भवनं ॥ ८७६ ॥ उक्तः समासः । अथ संक्षेपः 'सय'

सयसाहस्सा गंथा, सहस्स पंच य दिवड्ढमेगं च । ठविया एगसिलोए, संखेवो एस णायव्वो ॥८७७॥

आत्रेय १, कपिल २, बृहस्पति ३, पञ्चाला ४, ऋषयश्चतुरो ग्रन्थान् पृथक् २ शतसहस्रमानान् कृत्वा नृपं श्रावणा-

समास-संक्षेपद्वारे दृष्टान्तौ ॥

याऽभ्यर्थयन्, राजोचे स्तोकं कुरुत। ततस्तैः सर्वैः सहस्रपञ्चकं द्व्यर्द्धसहस्रं च, एवं संक्षिपद्भिर्यावदेकश्लोके चत्वारः शतसहस्राः ग्रन्थाः स्थापिताः। यथा 'जीर्णे भोजनमात्रेयः कपिलः प्राणिनां दया। बृहस्पतिरविश्वासः पञ्चालः स्त्रीषु मार्दवम्'। १। आत्रेय ऋषिरित्याह जीर्णेऽन्ने सति भोजनं कार्यं। कपिलः प्राणिनां दयेति। बृहस्पतिः कस्यापि विश्वासो न कार्यः इति। पञ्चालः स्त्रीषु मार्दवं कुर्यादित्याह। एवं सामायिकेऽपि समितिगुप्तत्वात् चतुर्दशपूर्वार्थसङ्ग्रहः ॥ ८७७ ॥ गतः संक्षेपः। अथानवद्यं 'सोऊ'

**सोऊण अणाउट्टिं, अणभीओ वज्जिऊण अणगं तु। अणवज्जयं उवगओ, धम्मरुई णाम अणगारो ॥८७८॥**

धर्मरुचिर्वसन्तपुरे जितशत्रुधारिणीसुतो राज्यमनिच्छन् पित्रा सह तपस्वी जातः कल्येऽमावस्येति घोषात् फलादि सङ्गृह्यास्थात्, द्वितीयेऽह्नि साधून् यातो वीक्ष्योचे किं वोऽनाकुट्टिर्नास्ति इति वने भ्रमत? अनाकुट्टिरच्छेदनमहिंसेत्यर्थः, साधुभिरूचे आजन्मास्माकमनाकुट्टिः स च तं श्रुत्वा जातजातिस्मृतिः, अणति भ्राम्यति संसारमनेनेत्यणं पापं तस्माद्भीतोऽणभीतोऽणकं पापं परिवर्ज्य अनवद्यतां दीक्षामुपगतः प्रत्येकबुद्धोऽभूत् ॥ ८७८ ॥ गतमनवद्यं ६, अथ परिज्ञा 'परि'

**परिजाणिऊण जीवे, अज्जीवे जाणणापरिण्णाए। सावज्जजोगकरणं, परिजाणइ सो इलापुत्तो ॥८७९॥**

'जाणणापरिन्नाए' ज्ञपरिज्ञया जीवाजीवान् परिज्ञाय 'सावज्ज०' प्रत्याख्यानपरिज्ञया परिजानाति प्रत्याख्यातीत्यर्थः। तत्कथा च प्रागुक्ता ॥ ८७९ ॥ गता परिज्ञा ७। अथ प्रत्याख्यानं 'पच्च'

**पच्चक्खे इव दट्टूणं, जीवाजीवे य पुण्णपावं च। पच्चक्खाया जोगा, सावज्जा तेतलिसुएणं ॥८८०॥**

जम्बूद्वीपे विदेहे पुष्कलावतीविजये पुण्डरीकिण्यां महापद्मो राजा प्रव्रज्य चतुर्दशपूर्वी मासानशनेन महाशुक्रे गत्वा तेतलिपुरे कनकरथराजमन्त्रितेतलिपुत्रस्तेतलिसुतोऽभूत्। स स्वर्णकृत्श्रेष्ठिपुत्रीं पोट्टिलां सौधस्थां याचित्वा परिणिन्ये। राजा भोगलौल्यात् पुत्रान् व्यंगयति। राज्ञ्या तेतलिसुत! एकं पुत्रं रक्षेत्युक्तो राज्ञीपुत्रं पोट्टिलासुतां सार्द्धं प्रसूतां, मन्त्रिणा व्यत्ययः कृतः। अन्यदा पोट्टिला मन्त्रिणोऽनिष्टा जाता रन्धनाय नियोजिता साध्व्यावायाते मन्त्रिवश्यार्थं पृच्छन्ती धर्म्मं बोधिता। अन्यदा मन्त्री पृष्टो दीक्षायै स्वर्गतयाऽहं बोध्ये इति जगौ। तया प्रपन्नं तस्यानुमत्या प्रव्रज्य स्वर्गता। राज्ञि मृते मन्त्रिणा पालितः कनकध्वजो राजा जातः। सोऽमात्यभक्तोऽभूत् पोट्टिलादेवो मन्त्रिणं बोधियति स न बुध्यते अन्यदा सुरेणामात्योपरि राजा विपरिणामितस्ततोऽमात्ये भिया बहिर्निर्गते सर्वो लोको विपरिणामितः। ततो मन्त्रिणा मृत्यवे विषकंकामिषाशाग्निकूपपाताद्यं सेवितं तद्देवेन विफलीचक्रे। ततो वने व्रजतोऽग्रे गर्ता, पृष्ठे हस्ती तमः शरवृष्टिश्च ततो भीतः पोट्टिलां स्मरन् देवेनोक्तो दुःखौषधं दीक्षां लाहीति ततो जातिस्मृत्या प्रबुद्धोऽवदन् नृपं शमय, मा रुष्टो दीक्षित इत्यस्तु, ततः सर्वो जन उपशान्तोऽन्वेष्टुं प्रवृत्तः राजाऽऽगत्यामात्यं क्षामयित्वा महर्द्ध्या प्रावेशयत् ततो विमानेनारुह्य दीक्षितः। अथ गाथार्थः— प्रमदवनेऽशोकतले प्रागधीतचतुर्दशपूर्वाणि स्मरन् प्रत्यक्षानि च जीवाजीवान् पुण्यपापं च दृष्ट्वा सावद्ययोगाः प्रत्याख्याताः केवली जातः, व्यन्तरैर्महः कृतः, राजा श्राद्धो जातः ऋषिस्तेतलीयाध्ययनं जगौ ॥ ८८० ॥ द्वा० ८। मूलद्वा० २६।

इत्युपोद्घातनिर्युक्तिः समाप्ता।



परिज्ञाद्वारे तेतलिसुतदृष्टान्तः॥

अथ सूत्रसूत्रस्पर्शिनिर्युक्त्योरवसरः, तत्र प्रस्तुतं सामायिकसूत्रं, तच्च नमस्कारपूर्वमेवेत्यादौ तन्निर्युक्तिमाह ' उप्प '

**उप्पत्ती(1) निक्खेवो,(2) पयं(3) पयत्थो(4) परूवणा(5) वत्थुं(6)। अक्खेव(7) पसिद्धि(8) कमो,(9) पओयण फलं नमोक्कारो ॥८८१॥**

उत्पत्तिः १ निक्षेपः २ पदं ३ पदार्थः ४ प्ररूपणा ५ वस्तु ६ आक्षेपश्चालना ७ प्रसिद्धिः स्थापना ८ क्रमः ९ प्रयोजनं १० फलं ११ एभिर्नमस्कारश्चिन्त्यः ॥ ८८१ ॥ क्रमेणाह । ' उप्प '

**उप्पन्नाऽणुप्पन्नो, इत्थ नयाऽऽइनिगमस्सऽणुप्पन्नो। सेसाणं उप्पन्नो, जइ कत्तो! तिविहसामित्ता ॥८८२**

स्याद्वादिनां नमस्कार उत्पन्नानुत्पन्नो नित्यानित्य इत्यर्थः । कथमित्याह—अत्र नयाः प्रवर्त्तन्ते, तत्र नैगमः सर्वसङ्ग्राही देशसङ्ग्राही च, तत्रादिनैगमस्य सामान्यग्राहित्वात् सङ्ग्रहस्य च सामान्यमात्राश्रयत्वात् ऐक्यमेव, सामान्यं चोत्पादव्यय-रहितं । नमस्कारो वस्तुत्वेन सामान्यान्तर्गतोऽतो नैगमस्यानुत्पन्नः । शेषाणां सङ्ग्रहादिनयानां विशेषग्राहित्वात्तस्य चोत्पाद-व्ययवत्वादुत्पन्नः, यद्युत्पन्नः कुत इत्याह त्रिविधस्वामित्वात्त्रिविधकारणादित्यर्थः ॥ ८८२ ॥ तच्चाह ' समु '

**समुट्ठाण(1)वायणा(2)लद्धिओ(3) पढमे नयात्तिए तिविहं। उज्जुसुय पढमवज्जं, सेसनया लद्धिमिच्छन्ति ॥८८३॥**

सम्यगुत्तिष्ठत्यस्मादिति समुत्थानं निमित्तं तच्चात्र देहः १ वाचना गुरुभ्यः श्रवणं २ लब्धिस्तदावरणक्षयोपशमः ३ एतत्त्रिधा कारणं नमस्कारस्य, प्रथमे शुद्धनैगमसङ्ग्रहव्यवहाराख्यनयत्रये स्यात् । ऋजुसूत्रः प्रथमवर्जं समुत्थानवर्जं इच्छति, तद्भावेऽपि वाचनालब्धिशून्यानां नमस्कारस्याभावात् । एवं शेषनया लब्धिमिच्छन्ति, तदभावेऽभव्यादीनां वाचनाया

अपि निरर्थकत्वात् ॥ ८८३ ॥ गतमुत्पत्तिद्वा० १ । नमस्कारे निक्षेपश्चतुर्द्धा तत्र नामस्थाने सुगमे, द्रव्यभावे नमस्कारमाह 'निह्ना'

**निह्नाइ दव्व भावोवउत्त जं कुज्ज सम्मदिट्ठी उ ।(मूलदारं २)नेवाइयं पयं, (मू०३) दव्वभावसंकोअणपयत्थो॥**

निह्नवादेरनुपयुक्तस्य वा द्रव्यनमस्कारः, द्रव्यार्थं वा यः क्रियते, भावनमस्कारो यदुपयुक्तः सम्यग्दृष्टिः कुर्यात् । गतो निक्षेपः द्वा० २ । पदं पञ्चधा–नामिकं १, नैपातिकं २, औपसर्गिकं ३, आख्यातकं ४, मिश्रं ५, क्रमात् अश्व १, खलु २, परि ३, स्यात् ४, संयत ५ रूपं । तत्र 'नम' इति नैपातिकपदं निपातसिद्धत्वात् । गतं पदद्वा० ३ । नमःपदस्यार्थमाह–द्रव्यभावसङ्कोचनमिति । तत्र द्रव्यतः सङ्कोचः करशिरोंह्रीणां सङ्कोचः, भावतः सङ्कोचो मनस ऐकाग्र्यं । अत्र चतुर्भङ्गी–द्रव्यतः सङ्कोचो न तु भावतः पालकवत् १ भावान्न द्रव्यतोऽनुत्तरसुरवत् २, द्रव्यभावाभ्यां शाम्बवत् ३, नोभाभ्यां शून्यः ४, तृतीयभङ्गः सर्वोत्तमः ॥ ८८४ ॥ गतं पदार्थद्वा० ४ । अथ प्ररूपणा 'दुवि'

**दुविहा परूवणा छप्पया य, नवहा य छप्पया इणमो । किं[1] कस्स[2] केण[3] व कहिं[4], किच्चिरं कइविहो व भवे८८५॥**

प्रकृष्टा रूपणा वर्णना प्ररूपणा सा द्विधा यथा षट्पदा षट्प्रकारा नवधा च, चशब्दात् पञ्चधा चतुर्धा च । तत्र षट्पदा इयं, क्रमात् षट् द्वाराणि किं नमस्कारः १, कस्य सम्बन्धि २, केन हेतुना लभ्यते ३, कुत्र ४, कियच्चिरं कियत्कालं ५, कतिविधो वा भवेत् ६ ॥ ८८५ ॥ तत्र 'किं जी'

नमस्कारे निक्षेपादिद्वाराणि ॥

**किं? जीवो तप्परिणओ पुव्वपडिवन्नओ उ जीवाणं। जीवस्स व जीवाण व पडुच्च पडिवज्जमाणं तु ।८८६।**

किं नमस्कार इत्याह तत्परिणतो नमस्कारपरिणतो जीव एव । गतं किमितिप्ररूपणाद्वा० १ । अथ कस्येति सम्बन्धे षष्ठी ' पुव्व ' यदा पूर्वप्रपन्नो नमस्कारश्चिन्त्यते तदा जीवानामसौ इति ज्ञेयः प्राक्प्रपन्नानां बहुत्वाद् बहुजीवस्वामिक इत्यर्थः, प्रपद्यमानं तु नमस्कारं प्रतीत्य, चेदेको जीवस्तं प्रपद्यते तदा जीवस्य एकजीवस्वामिक इत्यर्थः, चेद्बहवस्तदा जीवानामसौ बहुजीवस्वामिक इति ॥ ८८६ ॥ गतं कस्यद्वा० २ । अथ केनेति ' नाणा '

**नाणावरणिज्जस्स य, दंसणमोहस्स तह खओवसमे। जीवमजीवे अट्ठसु, भंगेसु अ होइ सव्वत्थ ।८८७।**

मतिश्रुतज्ञानावारणयोस्तथा दर्शनमोहस्य मिथ्यात्वमोहस्य क्षयोपशमेन नमस्कारो लभ्यते, अत्र केनेतिद्वारवशात् क्षयोपशमेनेति व्याख्येयं । तत्र आवरणस्य सर्वघातिनां स्पर्द्धकानां क्षये देशघातिनां च प्रतिसमयमनन्तानन्तैर्भागैर्मुच्यमानो जीवः क्रमेणाद्याक्षरं लभते, एवमेकैकवर्णाप्त्या पूर्णनमस्कारं, केनद्वा० ३ । अथ कुत्रेति सप्तम्याधारे, आधारश्चतुर्द्धा–व्यापकः तिलेषु तैलः । औपश्लेषिकः कटे आस्ते । सामीप्यको गङ्गायां घोषः । वैषयिको रूपे चक्षुः । तत्राद्य आन्तरः शेषा बाह्याः । नैगमव्यवहारौ बाह्यमिच्छतस्तन्मतं चेदं गाथार्द्धमित्याह–तत्र जीवेऽजीवे इत्यादिषु अष्टसु भङ्गेषु सर्वत्र नमस्कारः स्यात् । यथा जीवे साधौ १, अजीवे बिम्बे २, जीवेषु साधुषु ३, अजीवेषु बिम्बेषु ४, जीवेऽजीवे च युगपत्साधौ बिम्बे च ५, एवं जीवेऽजीवेषु ६, जीवेष्वजीवे ७, जीवेष्वजीवेषु ८ ॥ ८८७ ॥ कुत्रद्वा० ४ । अथ कियच्चिरमित्याह ' उव '

उवओग पडुच्चंतोमुहुत्त लद्धीइ होइ उ जहन्नो। उक्कोसट्ठिई, छावट्ठि सागराऽरिहाइ पंचविहो ॥८८८॥

जघन्यत उत्कृष्टतश्चोपयोगं प्रतीत्यैकस्यानेकेषां च नमस्कारोऽन्तर्मुहूर्त्तम्। लब्धितो भवति जघन्यतोऽन्तर्मुहूर्त्तं उत्कृष्ट-स्थितिः षट्षष्टिसागराः, कियच्चिरंद्वा० ५। कतिविधइत्याह 'अरि' अर्हदादिः पञ्चविधं ॥ ८८८ ॥ द्वा० ६। षड्विधां प्ररूपणां उक्त्वा नवधा प्ररूपणार्थं नवद्वाराण्याह आद्यद्वारं च व्याख्याति 'संत' 'संत' 'सम्म'

संतपयपरूवणया दव्वपमाणं च खित्त फुसणा य, कालो अ अंतरं भागो भावे, अप्पाबहुं चेव ॥८८९॥

संतपयं पडिवन्ने, पडिवज्जंते अ मग्गणं गईसुं। इंदिअ काए वेए, जोए अ कसाय लेसासु ॥ ८९० ॥

सम्मत्त नाण दंसण, संजय उवओगओ अ आहारे। भासग परित्त पज्जत्त, सुहुमे सन्नी अ भव चरमे॥८९१॥

सत्पदं द्वितीया। सत्पदस्य वर्त्तमानार्थस्य नमस्कारस्य प्रपन्नान् प्रपद्यमानांश्चाश्रित्य मार्गणा कार्या, केत्याह गतिषु इन्द्रियेषु द्वारेषु पीठिकायां मतिज्ञानवन्मार्गणा कार्या द्वयोरप्येकस्वामित्वात् ॥ ८८८-८९१ ॥ गतं सत्पदप्ररूपणाद्वा० १। अथ द्रव्यप्रमाणादिद्वाराणि 'पलि'

पलिआसंखिज्जइमे, पडिवन्नो हुज्ज खित्तलोगस्स । सत्तसु चउदसभागसु, हुज्ज फुसणावि एमेव।८९२।

नमस्कारप्रपन्नो जीवराशिरुत्कृष्टः क्षेत्रपल्यासङ्ख्येयतमो भागः सूक्ष्मक्षेत्रपल्यासङ्ख्यभागस्थाकाशप्रदेशसम इत्यर्थः। प्रपद्यमानस्तु प्रपन्नात् किञ्चिन्न्यूनः। द्रव्यप्रमाणद्वा० २। क्षेत्रं सप्तसु लोकस्य चतुर्दशभागेषु यथा मतिज्ञाने क्षेत्रद्वा० ३।

प्ररूपणायां नवद्वारे सत्पदप्ररूपणादिद्वाराणि ॥

स्पर्शनाऽप्येवमेव विशेषाधिका स्पर्शनाद्वा० ४ ॥ ८९२ ॥ अथ कालः ' एगं '

**एगं पडुच्च हिट्ठा, तहेव नाणाजिआण सव्वद्धा । अंतर पडुच्च एगं, जहन्नमंतोमुहुत्तं तु ॥ ८९३ ॥**

एकं जीवं प्रतीत्य कालः यथा काले 'हिट्ठा' प्राक्, नानाजीवान् प्रतीत्य सर्वाद्धा कालद्वा० ५ । अन्तरं एकं जीवं प्रतीत्य जघन्यमन्तर्मुहूर्त्तं, तुरेवार्थः ॥ ८९३ ॥ ' उक्को '

**उक्कोसेणं चेयं, अद्धापरियट्टओ उ देसूणो । णाणाजीवे णत्थि उ, भवे य भवे खओवसमे ॥ ९९४ ॥**

उत्कर्षेण त्विदमन्तरं अर्द्धपुद्गलपरावर्त्तो देशोनः । इह स्थूलः पुद्गलपरावर्त्तो द्रव्यतः सर्वाणूनां कदाचित्कत्वादाहारकवर्जं औदारिकवैक्रियतैजसभाषाआनपानमनःकर्मभिर्यथास्वं परिणमय्य त्यागात्, क्षेत्रतः सर्वलोकाकाशप्रदेशेषु, कालतः कालचक्रसम्बन्धिविंशतिकोटाकोटिसागरसर्वसमयेषु, भावतः प्रवृद्धवृद्धतरादिष्वसङ्ख्येयभेदादसङ्ख्येयेष्व लोकाकाशप्रमाणेष्वनुभागबन्धाध्यवसायेषु च क्रमोत्क्रमेण मरणात् सूक्ष्मस्तु कादाचित्कत्वादाहारकवर्जमौदारिकादिकर्म्मान्तानां सप्तरूपाणामन्यतरेण सर्वाणून् परिणमय्य त्यागात्, पूर्वोक्तेषु नभःप्रदेशेषु २ समयेष्व ३ ऽनुभागाध्यवसायेषु च क्रमादेव ४ मरणात्, नानाजीवानाश्रित्यान्तरं नास्ति । अन्तरद्वा० ६ । भावे भवेत् क्षायोपशमे, चशब्दात् क्षायिके औपशमिकेऽपि ॥ ८९४ ॥ भावद्वा० ७ । ' जीवा '

**जीवाणऽणंतभागो, पडिवण्णो सेसगा अणंतगुणा । वत्थुं तऽरिहंताइ, पञ्च भवे तेसिमो हेऊ ॥ ८९५ ॥**

सर्वजीवानामनन्तो भागो नमस्कारप्रपन्नः, शेषा मिथ्यादृशः। भागभावद्वारयोर्विपर्यासोक्तिः सूत्रस्य वैचित्र्यात्। भागद्वा० ८। अल्पबहुत्वं प्राग्वत् द्वा० ९। उक्ता प्ररूपणा मूलद्वा० ५। अथ वस्त्विति नमस्कारार्हवस्तु, 'तु' पुनः अर्हदाद्याः पञ्च मन्येयुः। तेषां नमस्कारार्हत्वेऽयं 'मग्गे अविप्पणासो' इत्यादि गाथया हेतुर्वक्ष्यते ॥ ८९५ ॥ 'अथ 'नवहा ये'ति च-शब्दात् शिष्टां पञ्चधा चतुर्द्धा प्ररूपणामाह 'आरो'

आरोवणा य भयणा, पुच्छा तह दायणा य निज्जवणा। नमुक्कारऽनमुक्कारे, नोआइजुए व नवहा वा ॥८९६॥

आरोपणा १ भजना २ पृच्छा ३ दर्शना ४ निर्यापणा च ५। तत्र किं जीव एव नमस्कारः, नमस्कार एव वा जीव इत्यन्योन्यावधारणमारोपणा १ नमस्कारो जीव एव जीवस्तु नमस्कारोऽनमस्कारो वेत्येकपदव्यभिचाराद् भजना २ किंरूपो नमस्कार इति पृच्छा ३ अत्र दर्शना पृच्छोत्तरं यथा नमस्कारपरिणतो जीवो नमस्कारः ४ निर्यापनार्थं निगमनं, यथा नमस्कारपरिणत एव जीवो नमस्कारोऽपि जीवपरिणाम एव। उत्तरार्द्धे प्ररूपणा चतुर्द्धा नमस्कारः १ अनमस्कारः २ तथा नोआदिगुणाविति सर्वनिषेधापेक्षनोशब्देनादौ युताविति नोनमस्कारः ३ नोअनमस्कारः ४ तत्राद्यस्तत्परिणतो जीवः द्वितीयोऽनुपयुक्तो लब्धिशून्यो वा। तृतीयो नमस्कारैकदेशः चतुर्थोऽनमस्कारैकदेशः, एवं पञ्चचतुर्योगे नवधा प्ररूपणा ॥ ८९६ ॥ 'नेमिमो हेउ'त्ति व्याख्याति 'मग्गे'

मग्गे अविप्पणासो, आयारे विणयया सहायत्तं। पंचविहनमुक्कारं, करोमि एएहिं हेऊहिं ॥ ८९७ ॥

पञ्चधा चतुर्द्धा प्ररूपणा ॥

अर्हतां 'मग्गे'त्ति मार्गदेशकत्वान्नमः, एवं सिद्धादीनां, क्रमादविप्रणाशत्वात् आचारत्वात् विनयताहेतुत्वात् सहायत्वात् पञ्चविधनमस्कारमेतैर्हेतुभिः ॥ ८९७ ॥ सूत्रं ' नमो अरिहंताणं ' 'नमो' नमस्कारोऽस्तु छद्मस्थसमवसरणसिद्धसम्बन्ध्यवस्थात्रयपूजां भूतभाविभविष्यतां सर्वेषामर्हतां । अर्हद्गुणानाह ' अड '

अडवीइ देसिअत्तं, तहेव निज्जामया समुद्दम्मि। छक्कायरक्खणट्ठा, महगोवा तेण वुच्चंति ॥ ८९८ ॥

अटव्यां देशकत्वं, निर्यामकाः समुद्रे, षट्कायरक्षणार्थं प्रयत्नं चक्रुस्तेन महागोपा उच्यन्ते इति द्वारत्रयः ॥ ८९८ ॥ ' अड ' ' पावं '

अडविं सपच्चवायं, वोलित्ता देसिओवएसेणं। पावंति जहिट्ठपुरं, भवाडविंपी तहा जीवा ॥ ८९९ ॥

पावंति निव्वुइपुरं, जिणोवइट्ठेण चेव मग्गेणं। अडवीइ देसिअत्तं, एवं नेअं जिणिंदाणं ॥ ९०० ॥

अटवीं सप्रत्यपायां सविघ्नां 'वोलित्ता' उल्लङ्घ्य देशकः सार्थवाहः तदुपदेशेन यथा इष्टपुरं प्राप्नुवन्ति तथा जीवा जिनोपदिष्टमार्गेण भवाटवीमप्युल्लङ्घ्य निर्वृत्तिं प्राप्नुवन्ति ॥ ८९९-९०० ॥ ' जह '

जह तमिह सत्थवाहं, नमइ जणो तं पुरं तु गंतुमणो। परमुवगारीत्तणओ, निव्विग्घत्थं च भत्तीए ॥९०१॥

यथेह तं सार्थवाहं तत् इष्टं पुरं गन्तुमनाः परमोपकारित्वतः ॥ ९०१ ॥ ' अरि '

अरिहो उ नमुक्कारस्स, भावओ खीणरागमयमोहो । मुक्खत्थीणंपि जिणो, तहेव जम्हा अओ अरिहा ॥

तथैव मोक्षार्थिनामपि क्षीणरागमदमोहो जिनो यस्मात् भावतो नमस्कारस्यार्हः, तुरेवार्थः, अतोऽर्हन् ॥ १०२ ॥ 'संसा'

संसाराअडवीए, मिच्छत्तऽन्नाणमोहिअपहाए । जेहिं कय देसिअत्तं, ते अरिहंते पणिवयामि ॥१०३॥

संसाराटव्यां मिथ्यात्वाज्ञानाभ्यां मोहितः पन्था यस्यां सा मिथ्यात्वाज्ञानमोहितपथा तस्यां मिथ्यात्वाज्ञानमोहितपथायां येर्देशकत्वं मार्गनायकत्वं कृतं तानर्हतो नमामि ॥ १०३ ॥ 'सम्म'

सम्मद्दंसणदिट्ठो, नाणेण य सुट्ठु तेहिं उवलद्धो । चरणकरणेण पहओ, निव्वाणपहो जिणिंदेहिं ॥ १०४ ॥

सम्यग्दर्शनेन सामान्यतो दृष्टः, ज्ञानेन च सुष्ठूपलब्धो विशेषतो ज्ञातः, चरणकरणाभ्यां प्रहतः क्षुण्णः । तत्र "वय ५ समणधम्म १० संजम १७ वेयावच्चं १० च बंभगुत्तीओ ९। नाणाइतियं ३ तव १२ कोहनिग्गहाई ४ चरणमेयं" । १ । चरणसप्ततिः ७० । "पिंडविसोही ४ समिई ५ भावण १२ पडिमाइ १२ इंदियनिग्गहो ५। पडिलेहण २५ गुत्तीओ ३ अभिग्गहा ४ चेव करणं तु" । २ । करणसप्ततिः ७० । तत्र पिण्डविशोधिः—उद्गमदोषाः १ उत्पादनादोषाः २ एषणादोषाः ग्रासैषणादोषा४श्चेति चतुर्धा । अभिग्रहा द्रव्य १ क्षेत्र २ काल ३ भाव ४ भेदाच्चत्वारः ॥ १०३ ॥ न केवलं प्रहतः किन्त्वनेन पथा सिद्धिं प्राप्ता अत आह 'सिद्धि'

सिद्धिवसहिमुवगया, निव्वाणसुहं च ते अणुप्पत्ता । सासयमव्वाबाहं, पत्ता अयरामरं ठाणं ॥ १०५ ॥

अटवी-देशकत्व-द्वारम् ॥

तत्र सुखदुःखे न स्त इति वैशेषिकनिरासार्थमाह निर्वाणं कर्म्माग्निविध्यानं सुखं च तेऽनुप्राप्ताः । ते च शासनन्यत्कारतोऽत्रायान्तीति बौद्धमतनिरासार्थमाह । 'सासयं' शाश्वतमव्याबाधं प्राप्तः अजरामरं स्थानं, विविधा आबाधा व्याबाधा तद्रहितं ॥ ९०५ ॥ अटवीदेशकत्वद्वा० १ । अथ समुद्रनिर्यामकद्वा० २ 'पाविंति'

**पाविंति जहा पारं, सम्मं निज्जामया समुद्दस्स । भवजलहिस्स जिणिंदा, तहेव जम्हा अओ अरिहा ॥९०६॥**

प्रापयन्ति यथा निर्यामकाः देशकाः समुद्रस्य, अतोऽर्हा नमस्कारस्य ॥ ९०६ ॥ 'मिच्छ'

**मिच्छत्त कालियावायविरहिए, सम्मत्तगज्जभपवाए । एगसमएण पत्ता, सिद्धिवसहिपट्टणं पोया ॥९०७॥**

मिथ्यात्वमेव कालिकावातोऽसाध्यो वातः, सम्यक्त्वमेव गर्जभोऽनुकूलः प्रवातो वायुर्यत्र तादृश भवाब्धौ, सिद्धिस्थानरूपं पत्तनं, पोता जीवबोहित्थाः ॥ ९०७ ॥ 'निज्जा'

**निज्जामगरयणाणं, अमूढनाणमइकण्णधाराणं । वंदामि विणयपणओ, तिविहेण तिदंडविरयाणं ॥९०८॥**

निर्यामकरत्नानामर्हतां षष्ठी द्वितीयार्थे, अमूढं सम्यग्ज्ञानं यतः सा अमूढज्ञानमतिरेव कर्णधारो वेडावाहो येषां तान् ॥ ९०८ ॥ गतं निर्यामकद्वा० २ । अथ महागोपद्वा० ३ पालिं 'जीव' 'तो उ'

**पालंति जहा गावो, गोवा अहिसावयाइदुग्गेहिं । पउरतणपाणिआणि अ, वणाणि पावंति तह चेव ॥**

जीवनिकाया गावो,जं ते पालंति ते महागोवा । मरणाइभया उ जिणा, निव्वाणवणं च पावंति ॥१०९॥
तो उवगारित्तणओ नमोऽरिहा भविअजीवलोगस्स । सव्वस्सेह जिणिंदा, लोगुत्तमभावओ तह य ॥११०॥

गोपाः गाः अहिश्वापदादीनां दुर्गेभ्यः कष्टेभ्यः पालयन्ति रक्षयन्ति प्रचुरतृणपानीयानि च वनानि प्रापयन्ति तथैव ॥ १०९ ॥ जीवनिकाया एव गावः ये तान् ' मरणाइ ' उपलक्षणाद्रोगादिकष्टानि श्वापदादीनि तेषां भयेभ्यः पालयन्ति ॥ ११० ॥ ततो जिनेन्द्राः उपकारित्वतस्तथा लोकोत्तमभावतश्चेह सर्वस्य भव्यजीवलोकस्य नमोऽर्हाः ॥ १११ ॥
उक्तं महागोपद्वा० ३ । नमोऽर्हत्वे हेत्वन्तरमाह ' राग '

रागद्दोसकसाए, इंदिआणि अ पंचावि । परीसहे उवसग्गे, नामयंता नमोऽरिहा ॥ ११२ ॥

स्पष्टा, किन्तु नशब्दान्नोइन्द्रिय मनोऽपि, रागादीन्नामयन्तो जयन्तः, तत्र रागो द्विधा, प्रशस्तः अप्रशस्तश्च आद्यो दृष्टिकामस्नेहभेदात् त्रिधा । तत्र दृष्टिरागः स्वस्वमतग्रहः, कामरागो विषयाभिलाषः, स्नेहरागो मोहः । उक्तं च–' रज्जंति असुभकलिमलकुणिमाणिट्ठेसु पाणिणो जेणं । रागोत्ति तेण भण्णइ, जं रज्जइ तत्थ रागत्थो । १ ।' अशुभः कलिमलः कश्मलो गर्भिमीश्रकुणिमं शवं, तद्रूपानिष्टेष्वर्थेषु रज्यन्ते प्राणिनो येन तेन राग इति, यद्रज्यते तत्र वस्तुनि तद्गुणैरात्मेति रागस्यार्थः । इत्येषा निरुक्तिरप्रशस्तरागस्य द्वितीया तु प्रशस्तस्येति न दोषः १ । ' अरहंतेसु य रागो, रागो साहूसु बंभयारिसु । एस पसत्थो रागो, अज्ज सरागाण साहूणं । २ ।' अर्हत्सु चशब्दात् सिद्धेषु ' अज्ज ' आधुनिके काले सरागाणां

सरागधर्मवतां साधूनां नीरागत्वाभावात् २। द्वेषोऽपि द्विधा–प्रशस्तोऽधर्म्मादौ अप्रशस्तो ज्ञानादौ। आद्येऽयं दृष्टान्तः– 'गंगाए नाविओ नंदो, सहाए घरकोइलो। हंसो मयंगतीराए, सीहो अंजणपव्वए। ३। वाणारसीए बडुओ, राया तत्थेव आगओ। एएसिं घायओ जो उ, सो इत्थेव समागओ। ४।' काश्यां धर्मरुचिसाधुना गङ्गायामिति गङ्गोत्तारे नन्दो नाविको द्रव्यं विनाऽमुञ्चन् क्षुत्तृष्णोष्णवालुकातप्तेन दृष्टिविषलब्ध्या दग्धः, स सभायामिति जनोपदेशशालायां गृहकोकिलो घिरोलको मृतगंगा शुष्कगंगा तत्तीरे हंसोऽञ्जनपर्वते सिंहो वाराणस्यां बटुको जातः। एषु भवेषु धर्म्मरुचिना उपसर्गं कुर्वन् दग्धो मृत्वाऽत्रैवेति पुनर्वाराणस्यां पुरे आगतो राजा जातः साधुदर्शनाज्जातिं स्मृत्वा 'गंगाए नाविओ नन्दो' इत्यादि पदरूपां समस्यां पुरयितुरर्द्धराज्यं ददे इत्याख्यात्। धर्म्मरुचिना तु 'एएसिं एग सेसाणमि'ति पदाभ्यां पूरिता। एतेषां नन्दादीनां 'एग सेसाणं' एकं राजानं मुक्त्वा शेषाणां घातकोऽहमत्रागतोऽस्मि। ततो राजा श्राद्धोऽभूत् साधुश्च प्रतिक्रम्य सिद्धः। कषायाः क्रोधादयोऽत्र भाष्यं 'नामं ठवणा दविए उप्पत्ती पच्चए य आएसे। रसभावकसाएया (साग्राणं) नएहिं छहिं मग्गणा तेसिं। ५।' द्रव्यकषायः कषायकर्म्माणवः। उत्पत्तिकषायः कषायोत्पत्तिहेतुबाह्यद्रव्यं कीलकादि। यथा– 'किं एत्तो कट्ठयरं, जं मूढो खाणुगम्मि अप्फिडिओ। खाणुस्स तस्स रूसइ, ण अप्पणो दुप्पओगस्स। ६।' किं इतोऽस्मात्कष्टतरं विरूपं यन्मूढः स्थाणौ कीलके आस्फालितस्य स्थाणौ रुष्यति नात्मनो दुःप्रयुक्तस्यानुपयुक्तव्यापारस्य, प्रत्ययकषायः आश्रवाऽविरत्यादिकः कषायबन्धहेतुः, आदेशकषायः कृत्रिमभ्रूत्पादादिः कषायं विनापि तथैव दर्शनात्, रसकसायो हरीतक्यादेः, भावकषायः कषायमोहनीयकर्मोदयस्तज्जनितश्च कषायपरिणामः। नयैः सङ्ग्रहादिभिः षड्भि-

मार्गणा कार्या । तत्र नैगमोऽष्टधापि कषायं इच्छतीति तं विना शेषाः षड् नयास्तैर्मार्गणा सा विशेषावश्यकाद् ज्ञेया । अथेन्द्रियाणि तत्र इन्द्रः परमैश्वर्यवत्त्वादात्मा तेन सृष्टं इन्द्रियं । तद् द्विधा द्रव्येन्द्रियं भावेन्द्रियं च, आद्यं द्विधा निर्वृत्युपकरणभेदात् । निर्वृत्तिरपि द्विधा बाह्या कर्णशष्कुल्यादिरूपा तिर्यङ्नरादीनां विचित्रा, आन्तरा तु सर्वजन्तूनां समा, सा च श्रोत्रदृग्घ्राणजिह्वेन्द्रियाणां क्रमात्कदम्बपुष्प १ मसुरकणा २ तिमुक्तकपुष्प ३ क्षुरप्र ४ संस्थाना स्पर्शेन्द्रियस्य तु नानासंस्थाना । उपकरणं तु खड्गतुल्याया बाह्यानिर्वृत्तेर्या धाराकल्पा स्वच्छपुद्गलात्मिका आन्तरनिर्वृत्तिस्तस्यानुच्छेदशक्तिरिति स्वस्वविषयग्रहणशक्तिः । भावेन्द्रियं द्विधा लब्धिरुपयोगश्च । तत्र लब्धिरिन्द्रियावरणकर्मक्षयोपशमः, उपयोगस्तु स्वस्वविषये लब्धीन्द्रियानुसारेणात्मनो व्यापारः । तत्र लब्ध्यैकेन्द्रियोऽपि पञ्चेन्द्रियः, उपयोगेन तु पञ्चेन्द्रियोऽप्येकेन्द्रियः । परीषहाः द्वाविंशतिस्ते प्रतिक्रमणाध्ययने वक्ष्यन्ते । उपसर्गा दिव्या मानुषास्तैरश्चा आत्मवेद्याश्चेति चतुर्द्धा, एकैकोऽपि चतुर्द्धा, तत्र दिव्या हास्यात् १ द्वेषात् २ परीक्षार्थं विमर्शात् ३ विमात्रायाश्च ४, विविधा मात्रा विमात्रा उक्तहास्यादित्रयमिश्रिता. मानुषा अप्येवं, किन्तु विमात्राया हास्याद्यन्तर्भूतत्वात्, तत् स्थाने कुशीलप्रतिसेवनादिति, तैरश्चा भयात् १ द्वेषात् २ आहारात् ३ अपत्यरक्षार्थं च ४ । आत्मन एव जाताः सन्तो वेद्या आत्मवेद्याः घट्टनात् स्तम्भाद्यास्फालनात् १ प्रपतनाद्गर्त्तादौ २ स्तम्भनात् वाताद्दिना पादादीनां स्तम्भात् ३ लेशनात् स्तनसाविलगनेऽङ्गावयवानां तथैवावस्थानात् ४, यद्वा वात १ पित्त २ श्लेष्म ३ संनिपातेभ्यो वा ४ ॥ ९१२ ॥ अथ प्राकृतशैल्याऽनेकधा आर्हच्छब्दनिरुक्तं स्यादित्याह 'इंदि'

१०

नमोऽर्हत्वे हेत्वन्तरम् ॥

**इंदियविसयकसाए, परीसहे वेयणा उवस्सग्गे । एए अरिणो हंता, अरिहंता तेण वुच्चंति ॥ ९१३ ॥**

वेदना त्रिधा शारीरी १ मानसी २ उभयरूपा च ३ । अत्र कपायनोकपायानां पञ्चविंशतिसङ्ख्यानां मीलने पट्सप्तत्यन्तरङ्गारयः एषां अरीणां हन्तारः ॥ ९१३ ॥ 'अट्ठ'

**अट्ठविहंपि य कम्मं, अरिभूअं होइ सव्वजीवाणं । तं कम्ममरिं हंता, अरिहंता तेण वुच्चन्ति ॥९१४॥**

अपि सातावेद्यादीनामपि वैरिताज्ञप्त्यै, तत्कर्म्मारिहन्तारोऽर्हन्तः ॥ ९१४ ॥ 'अरि'

**अरिहंति वंदणनमंसणाइं, अरिहंति पूअसक्कारं । सिद्धिगमणं च अरिहा, अरहंता तेण वुच्चन्ति ॥९१५॥**

'अर्ह' इति धातुः, अर्हन्ति तेपां योग्याः स्युरित्यर्थः । वन्दनं स्तवनं, नमस्यनं प्रणामः । पूजा वस्त्रमाल्यादिना । सत्कारोऽभ्युत्थानादिना, सिद्धिं प्रति अर्हा योग्याः ॥ ९१५ ॥ 'देवा'

**देवासुरमणुएसुं, अरिहा पूआ सुरुत्तमा जम्हा । अरिणो हंता रयं, हंता अरिहंता तेण वुच्चन्ति ॥९१६॥**

देवासुरमनुज्येभ्यः पूजां अर्हन्ति । कुत इत्याह यस्मात्सुरोत्तमाः तीर्थकृत्त्वेन सुरनरोत्तमाः प्राक् सामान्येन पूज्यत्वमुक्तं, इह तु विशेषोक्त्या त्रिजगत्पूज्यत्वं ज्ञापितं । एवमन्यत्राप्यनुक्तमपि समाधानं स्वबुद्ध्या कार्यं । उपसंहरति–अरीणां हन्तारस्तथा रजो बध्यमानं कर्म्म तस्य हन्तारः ॥ ९१६ ॥ 'अर'

**अरहंतनमुक्कारो, जीवं मोएइ भवसहस्साओ । भावेण कीरमाणो, होइ पुणो बोहिलाभाए ॥९१७॥**

सिद्ध-निक्षेपाः ॥

महमशब्दादनन्तेभ्यो मोचयति, बोधिः सम्यक्त्वं ॥ ९१७ ॥ ' अरि '

अरिहंतनमुक्कारो, धन्नाणं भवक्खयं कुणंताणं । हिअयं अणुम्मुअंतो, विसुत्तियावारओ होइ ॥९१८॥

हृदयमनुन्मुञ्चन् अत्यजन्, विश्रोतसिकाऽपध्यानं तस्या वारको निषेद्धा ॥ ९१८ ॥ ' अरि '

अरहंतनमुक्कारो, एवं खलु वण्णिओ महत्थुत्ति । जो मरणम्मि उवग्गे, अभिक्खणं कीरए बहुसो ॥९१९॥

अल्पाक्षरोऽपि द्वादशाङ्गार्थसङ्ग्राहकत्वान्महार्थ इति । मरणे उपाग्रे समीपीभूतेऽभीक्ष्णं निरन्तरं बहुशो बहुवारान् क्रियते ॥ ९१९ ॥ ' अरि '

अरिहंतनमुक्कारो, सव्वपावप्पणासणो । मंगलाणं च सव्वेसिं, पढमं हवइ मंगलं ॥ ९२० ॥

'सव०' प्रणाशनः, मङ्गलानां मङ्गलहेतुभावानां द्रव्यभावभेदानां चशब्दो निश्चये, मध्ये प्रथमं आदावेव । सर्वधीरैः कार्येषु क्रियमाणत्वादाद्यं 'हवइ'त्ति भवति स्वरूपसत्तया मङ्गलरूपत्वादस्ति जायते वा नमस्कारः कृतः सन् मङ्गलं मङ्गलहेतुरिति । तत्र मां गालयति निःकासयति पापान्मङ्ग्यते हितमनेनेति वा मङ्गलं पुण्यं यद्वा मङ्गलं श्रेयस्तद्धेतुः ॥ ९२० ॥ एवं ' नमो अरिहंताणं ' इति व्याख्यातं । अथ 'नमो सिद्धाणं' तत्र सिद्ध्यति स्म सिद्धः, नामादिभेदाच्चतुर्दशधा, तत्र नामस्थापने स्पष्टे, द्रव्येणेन्धनादिना सिद्धो द्रव्यसिद्धः पक्वौदनः, शेषं सिद्धनिक्षेपमाह ' कम्मे '

कम्मे सिप्पे अ विज्जाए, मंते जोगे अ आगमे । अत्थ जत्ता अभिप्पाए, तवे कम्मक्खए इय ॥९२१॥

कर्मणि १ शिल्पे च २ विद्यायां ३ मन्त्रे ४ योगे च ५ आगमे ६ अर्थे द्रव्ये ७ यात्रायां ८ प्राकृतत्वाद्विभक्तिलोपः अभिप्राये बुद्धौ ९ तपसि १० कर्म्मक्षये ११ ऽपि च सिद्धः स्यात्। तत्र कर्म्मणि सिद्धे रेखां प्राप्तः कर्म्मसिद्धः । एवं शिल्पादिष्वपि ॥ ९२१ ॥ कर्म्मादिस्वरूपमाह ' कम्मं '

**कम्मं जमणायरिओवएसयं सिप्पमन्नहाऽभिहिअं। किसिवाणिज्जाईयं, घडलोहाराइभेअं च ॥ ९२२ ॥**

यदनाचार्योपदेशजं आचार्योपदेशं विनोद्भूतं तत् कृषिवाणिज्यभारवाहनादिकं कर्म्मोच्यते, अन्यथेत्याचार्योपदेशजं ग्रन्थाद्वा ज्ञातं घटलोहकारत्वादिभेदं तु शिल्पं ॥ ९२२ ॥ ' जो स '

**जो सव्वकम्मकुसलो, जो वा जत्थ सुपरिनिट्ठिओ होइ। सज्झगिरिसिद्धओविव, कम्मसिद्धित्ति विन्नेओ ॥**

यत्रैकस्मिन्नपि कर्म्मणि सुपरिनिष्ठितः अतिशयेन रेखां प्राप्तः सह्यगिरिसिद्धक इव एको वाहिको मूटकमात्रं भारं वहन् सह्याद्रौ सर्ववाहीकेभ्यः पूर्वं चटति, राजाद्यस्य मार्गं दत्ते, स च सह्यगिरिसिद्ध इति ख्यातः ॥ ९२३ ॥ ' जो स '

**जो सव्वसिप्पकुसलो, जो वा जत्थ सुपरिनिट्ठिओ होइ। कोकासवड्ढईविव, साइसओ सिप्पसिद्धो सो ॥**

कोकाशिवर्द्धकिवत् सातिशयोऽनेकविज्ञानवान् कोकाशिसूत्रभृत्काष्टकपोतैर्नृपकोशाद्गन्धशालीनानयत्, काष्ठगरुडेन च व्योम्न्यचरत् ॥ ९२४ ॥ ' इत्थी '

**इत्थी विज्जाऽभिहिया, पुरिसो मंतुत्ति तव्विसेसोऽयं। विज्जा ससाहणा वा, साहणरहिओ अ मंतुत्ति ॥९२५॥**

यत्राधिष्ठात्री स्त्री सा विद्याऽभिहिता। यत्र पुरुषोऽधिष्ठाता स मन्त्रः। तयोर्विद्यामन्त्रयोरयं विशेषः ॥ ९२५ ॥ 'विज्जा'

विज्जाणचक्कवट्टी, विज्जासिद्धो स जस्स वेगावि। सिज्झिज्ज महाविज्जा, विज्जासिद्धऽज्जखउडुव ॥९२६॥

विद्यानां सर्वासां चक्रवर्ती अधिपः स विद्यासिद्धः, यस्य चैका महाविद्या सिद्ध्येत् स विद्यासिद्धः आर्यखपुटसूरिवत्। यथा स गुडशस्त्रपुरे साधुद्वेषियक्षमूर्तीर्नमयित्वा पाषाणकुण्डयादिसार्थेऽचालयत् बौद्धांडकानि बुद्धदेवांश्चावन्दयत् ॥९२६॥ 'साही'

साहीणसव्वमंतो, बहुमंतो वा पहाणमंतो वा। नेओ स मंतसिद्धो, थंभागारिसुव साइसओ ॥९२७॥

स्वाधीनसर्व० प्रधानैकमन्त्रो वा ज्ञेयः। स मन्त्रसिद्धः स्तम्भाकर्ष इव। क्वापि राज्ञा साध्वी धृता, ततो मन्त्रसिद्धसाधुना राजभवनादिस्तम्भा व्योम्न्युत्पाद्य खडखडायिता राज्ञा भीतेन मुक्ता ॥ ९२७ ॥ 'सव्वे'

सव्वेवि दव्वजोगा, परमच्छेयरफलाऽहवेगोऽवि। जस्सेह हुज्ज सिद्धो, स जोगसिद्धो जहा समिओ ॥९२८॥

द्रव्ययोगाश्चूर्णानि परमाश्चर्यफलाः, अथवैकोऽपि योगः। समितसूरिर्विहन्त्या नद्याः कूलद्वयं चूर्णेन संमील्य तदूर्ध्वं गतः, ब्रह्मद्वीपवासितापसा बोधिताः ॥ ९२८ ॥ 'आग'

आगमसिद्धो सव्वंगपारओ, गोअमुव्व गुणरासी। पउरत्थो अत्थपरो व, मम्मणो अत्थसिद्धत्ति ॥९२९॥

प्रचुरार्थः प्रचुरद्रव्यार्थपरो द्रव्यस्तत्परो वार्थसिद्ध इत्युक्तो यथा मम्मणः। तेन निजोपार्जितस्वेन कोटिमूल्यरत्नानां वृषौ कृतौ ॥ ९२९ ॥ 'जो नि'

सिद्ध-निक्षेपाः ॥

**जो निच्चसिद्धजत्तो, लद्धवरो जो व तुंडियाइव। सो किर जत्तासिद्धोऽभिप्पाओ बुद्धिपज्जाओ ॥९३०॥**

नित्यं सिद्धा जलस्थलयात्रा यस्य, यश्च तुण्डिकादिवल्लब्धवरः। यश्च द्वादशवारानब्धिं तीर्त्वा प्राप्तार्थ एति सोऽपि यात्रासिद्धः। तुण्डिको वणिग् लक्षवारान् पोते भग्नेऽवक् 'जले नष्टं जले एवाप्यते,' अब्धिदेवस्तुष्टो वरमदायस्त्वन्नाम्नाब्धौ चटेत्सो विघ्नं मैतु। अभिप्रायो बुद्धेः पर्यायः ॥ ९३० ॥ ततः 'विउ'

**विउला विमला सुहुमा, जस्स मई जो चउव्विहाए वा। बुद्धीए संपन्नो, स बुद्धिसिद्धो इमा सा य ॥९३१॥**

विपुला पदानुसारिणी विमलाऽसंशयाऽविपर्यया च। सूक्ष्मा दुर्बोधार्थबोधसमर्था यस्य मतिः स्यात् स बुद्धिसिद्धः यद्वा चतुर्विधयौत्पत्तिक्यादिबुद्ध्या सम्पन्नो युक्तः स्याच्चतुर्द्धा, बुद्धिस्त्वियं ॥ ९३१ ॥ 'उप्प'

**उप्पत्तिआ वेणइआ, कम्मिया पारिणामिआ। बुद्धी चउव्विहा वुत्ता, पंचमा नोवलब्भए ॥९३२॥**

शास्त्राद्यपेक्षां विना उत्पत्तिरेव हेतुर्यस्याः सा औत्पातिकी १ गुरुशुश्रूषादिविनयोत्था वैनयिकी २ कर्म्मणोऽभ्यासाज्जाता कर्म्मजा ३ परिणामः सुदीर्घश्रेयोविमर्शस्तत्र भवा पारिणामिकी ४ ॥ ९३२ ॥ 'पुव्व'

**पुव्वमदिट्ठमस्सुअमवेइअ, तक्खणविसुद्धगहिअत्था। अव्वाहयफलजोगिणि, बुद्धी उप्पत्तिआ नाम ॥९३३॥**

अदृष्टाऽश्रुतोऽविदितो मनसाप्यनालोचितस्तस्मिन्नेव क्षणे विशुद्धो गृहीतोऽर्थो यया सा, अव्याहतफलेन योगो यस्याः ॥ ९३३ ॥ अत्र दृष्टान्ताः 'भर'

भरहसिल पणिअ[2], रुक्खे[3] खुड्डुग[4] पड[5] सरड[6] काग[7] उच्चारे[8]। गय[9] घयण[10] गोल[11] खंभे[12], खुड्डग[13] मग्गित्थि[14] पइ[15] पुत्ते[16] ॥

भरतस्य शिला भरतशिला १ पणितं पणः २ वृक्षः ३ क्षुल्लको बालः ४ पटः ५ सरटः कृकलाशः ६ काकः ७ उच्चारो विष्ठा ८ गजः ९ घयणो भंडः १० गोलो लाक्षागोलकः ११ स्तम्भः १२ क्षुल्लकः शिष्यः १३ मार्गस्त्री १४ पतिः १५ पुत्रः १६ इयन्तो दृष्टान्ता अस्यां गाथायां सङ्गृहीताः शेषास्तु 'महुसित्थे'ति गाथायां वक्ष्यन्ते ॥ ९३४ ॥ तत्राद्यदृष्टान्तः 'भर'

भरहसिल मिंढ[2] कुक्कुड[3] तिल[4], वालुअ[5] हत्थि[6] अगड[7] वणसंडे[8]। पायस[9] अइआ[10] पत्ते[11], खाडहिला[12] पंचपिअरो[13] अ॥

भरतशिला १, वालुकेति वालुकारज्जुः ५, अगडः कूपः ७, पायसं क्षीरेयी ९। 'अइअ'त्ति अजालिंडिकाः १०, 'पत्तं' अश्वत्थपत्रं ११, 'खाडहिल'त्ति खाडहिल्ला १२ पञ्चपितरश्च १३। अवन्त्यासन्नतटग्रामे भरतनटपुत्रो रोहकोऽवन्त्या नदीकुले पुरीं सर्वां लिलेख। राजा तां दृष्ट्वा बुद्धिमानायेत्यादिशत् शिलया स्थानादचालितया मत्सौधं कार्यं रोहकश्च शिलायाः अधः खनित्वा स्तम्भान् दत्वाऽभितो भित्तीश्चक्रे १। राज्ञा मिढः प्रैषि यदेष यादृग्भारोऽस्ति तादृग्भार एवार्प्यो रोहकश्च तं वृकागस्तं धृत्वा तृणादि दत्ते। तेन स कृशो न स्याद्वृद्धते च न। तादृग्भार एवार्पि २, एवं एकाक्येवासौ योध्य इति कुर्कुटः प्रैषि आदर्शप्रतिबिम्बेन योधितः ३, तिलान् येन मानेन गृह्णीत तेनैव तैलं देयमिति आदर्शेन तिलान् लात्वा तेनैव तैलं दत्तं ४, वालुकारज्जुः प्रेष्य इत्युक्ते एको वालुकारज्जुर्मानाय प्रेष्यो यथा तादृशं कुर्वे इति प्रत्यूचे ५, मर्त्तुकामं हस्तिनं प्रेषिताऽऽदिष्टं अस्योदन्तः सदा ज्ञाप्यो मृतश्च न वाच्यं। गजे मृते रोहकेणाज्ञापि गजो न वक्ति, न श्वसिति, नोत्तिष्ठति।

राजोचे किं मृतः इति ६, कूपे आनायिते पुरकूपः प्रेष्यो यथा तेन बध्वा ग्राम्यकूपं प्रेषयामि ७, ग्रामाद्वनं प्राच्यां कार्यमित्युक्ते ग्रामः प्रतीच्यां वासितः ८, विनाग्निं पायसं पाच्यमित्युक्ते उत्करकान्तः क्षिप्त्वा तद्बाष्पया पक्वं ९, राज्ञाऽऽहूतो यामिकः स्थापितः, सुप्तो रात्र्याद्ययामान्ते सुप्तस्त्वं यत् शब्दं न दत्से इत्युक्तेऽवक्–अजालिंडिका किं वृत्ता इति ध्यायनाऽऽसम्, त्वं वेत्सीत्युक्ते उचे जठरान्तः संवर्त्तकवातभावात् १० । एवं द्वितीययामे किं प्लक्षपत्रे वृन्तप्रान्तौ किं समौ विषमौ वा स्तः, पृष्टोऽवक् समावेव ११ । तृतीययामे खाडहिल्लाया पृष्ठिपुच्छे समे अन्यथा वा स्वयमूचे समे एव १२ । तुर्ये तीव्रकम्बाघाताद् बुद्धोऽवक् राज्ञः कति पितर इति चिन्ता, तत्र पञ्चपितरः, महाक्रोधवत्त्वाच्चाण्डालः १ यस्योपरि रुष्टस्तस्य सर्वस्य ग्राहित्वाद्रजकः २ महादातृत्वाद्धनदः ३ शिशोर्मे चणचणत्कम्बाघातदत्वाद् वृश्चिकः ४ न्यायवत्वाद्राजा ५, राज्ञाम्बा पृष्टोचे सुरूपत्वाच्चत्वारश्चित्तेऽर्थिताः १३ । अथ पणादीनि–तत्र एकः पणं चक्रे–मच्छकटस्थसर्वचिर्भटाशिनः प्रतोल्यामयायिनं मोदकं ददे, तत्रैकेन सर्वाण्यपि स्तोकं स्तोकं भक्षित्वा मुक्तानि, ग्राहकाः प्रोचुरहो सर्वाणि चिर्भटानि भक्षितानि, ततो यथोक्तं मोदकं याच्यमानः शकटेशो द्यूतकृद्भ्यो बुद्धिं लब्ध्वा लघुं मोदकं प्रतोल्यां मुक्त्वोचे याहि भो मोदक ! मोदको न याति, स चिर्भटाशिनो दत्तः, द्यूतकृद्धीः २ वृक्षे–फलानि कोऽप्यादातुमक्षमश्चटितान् कपीन् लेष्टुनाऽहत्, कपयश्च फलान्यक्षिपन् ३ क्षुल्लकस्येति बालस्याऽभयकुमारस्य कूपतलस्थमुद्राग्रहे धीः ४ पटे–द्वयोः सूत्रोर्णापटार्थे वादेऽमात्यैः शीर्षे ऊर्णारोमाणि वीक्ष्य वादो भग्नः ५ सरटे–एको हदन् सरटपुच्छस्पर्शेन मदुदरे सरटोऽविशदिति शङ्कया मन्दो जातो वैद्येन रेचयित्वा विष्टान्तरन्यसरटे लाक्षाक्ते दर्शिते पटुर्जातः ६ । काकाः–कियन्तोऽत्रेति क्षुल्लः पृष्टोऽवक्–' सट्ठिं कागसहस्सा इर्णिह विन्नाउडे परिवसन्ति । जइ ऊणिया

प्रोषितपतिका अह अदीया पाहुणा आया ॥ १ ॥' प्रेषिता इति ग्रामं गताः, यद्वा काके विष्टां किरति मिथ्यादृशा क्षुल्लः पृष्टः काकः किं वीक्षते? जले विष्णुरित्यादि विष्णुं वीक्षते, यद्वा केनापि वणिजा निधिं लब्ध्वा स्वभार्यागाम्भीर्यज्ञप्त्यै उक्तं-ममापाने श्वेतः काकोऽविशत् तया न स्वेष्टानामुक्तं एवं यावद्राज्ञा श्रुत्वा पृष्टः स सत्ये उक्ते निधिं दत्वा मन्त्रीकृतः ७। उच्चारे- विप्रनी मार्गे 'पुर्नाऽऽगच्छाऽभूद्विवादेऽमात्यैः कल्ये तव भर्त्रा किं भुक्तमिति पृष्टे तिलशष्कुलिकोक्ता, विरेचे दत्ते विप्रस्य तिला दृष्टा न तु धूर्तस्येति स ताडितः ८। एकेन गजस्तोलितो यथेभं क्षिप्त्वा नौ जले मुक्ता यावज्जलमग्ना तत्र रेखां कृत्वेभमु- त्तार्याऽश्ममयी रेखां यावन्नावं भृत्वाऽश्मानस्तोलिताः ९। 'घयणे'ति भंडो राज्ञीदुश्चरितं वदन् तया निर्घाटित उपानद्व्रजं लात्वा गम्यमिति ऊचे बहुदेशेषु त्वत्कीर्त्तिविस्ताराय गम्यमित्युपानद्व्रजात्तस्ततो राज्ञ्याऽस्थापि १०। गोलो लाक्षाया घ्राणेऽविशत्त- प्तायःशलाकयाऽऽकृष्टः ११। स्तम्भं सरोऽन्तस्थं कोऽपि पालिन्यस्ते कीले रज्जुं बध्वा पालौ भ्रान्त्वा भ्रान्त्वा वेष्टित- वान् १२। क्षुल्लकेनैका योगिनी यो यत् कुर्यात् तदहं कुर्वे इति घोषयती राजसभायां कायिकया पद्ममालेख्य तत्कर्तुमशक्ता जिता १३। मार्गगी-कन्यापि सभार्यस्य पथि यातः काचित्सुरी तद्रूपमोहिता भार्यारूपा पृष्ठे लग्ना पतिर्द्वे भार्ये दृष्ट्वा संदिग्धः या दूरस्था पतिं स्प्रक्ष्यति सा मर्त्येत्यमात्यैरुक्ते सुर्या करं प्रसार्य स्पृष्टः ज्ञाता च १४। पतिः-एकस्या द्वौ पती आस्ताम्। द्वयोरुपरि च तुल्यः स्नेह इति श्रुत्वाऽमात्याः परीक्षार्थं तस्या उभावपि पृथग्ग्रामे प्रेष्यौ तया च प्रेषितो जनमुखाद् द्वयोर्मान्द्यं श्रुत्वा तयोचेऽमुको दृढदेहो वैद्यैरपि चिकित्स्योऽन्यस्तु मयैव चिकित्स्य इति तं गता जनैर्ज्ञात इष्टः १५। पुत्रः-वणिग् देशान्तरे गतो मृतस्तस्य भार्ये द्वे सुतश्चैकः, पुत्रमात्रोचे पुत्रः श्रीश्च मेऽन्याऽपीत्याह, अमात्यैर्द्रव्यार्द्धं

औत्पाति-
कीबुद्धौ-
दृष्टान्ताः ॥

सुतार्द्धं च विभज्यमित्युक्तेऽपमाता मेने मात्रा तु नेति सा ज्ञाता १६ ॥ ९३५ ॥ ' महु '

**महुसित्थ[17] मुद्दि[18] अंके[19] अ, नाणए[20] भिक्खु[21] चेडगनिहाणे[22]। सिक्खा[23] य अत्थसत्थे[24], इच्छा[25] य महं सयसहस्से[26] ॥**

मधुसिक्थं मधुजालं १७ मुद्रिका १८ अङ्कः १९ नाणकं २० भिक्षुः २१ चेटकनिधानं २२ शिक्षा २३ 'अत्थसत्थं'ति नीतिशास्त्रं २४ इच्छा च मम २५ शतसहस्रं २६, एते दृष्टान्ताः । मधुसिक्थं–एका स्त्री जालिमध्ये रतस्था मधुजालं दृष्ट्वा कार्ये जाते पत्युर्मधुस्थानमूचे स तु नाद्राक्षीत् तया तथा सुप्त्वा दर्शितं, तेनाऽसती ज्ञाता पत्युर्धीः १७ । मुद्रिकायां–द्रमकेण पुरोहिते न्यासमददति विज्ञप्तो राट् पुरोहितं द्यूते जित्वा तन्मुद्रिकां च लात्वा चिह्ने तत्पत्न्याः पार्श्वे प्रेष्य न्यासमानाय्य बहुन्यासान्तः क्षिप्त्वा द्रमक उक्तः–उपलक्ष्य लाहि तेन चात्तः १८ । अंकः–केनापि कस्यचिद्रम्मसहस्रनवलको न्यासीकृतः, स च शुद्धान् द्रम्मान् लात्वा कूटान् चिक्षेप, ते चासारत्वादल्पदेशं रुन्धन्तीत्यधो नवलकः पाटित्वा सीवितः, धनिकश्चागात् कूटद्रम्माणां वस्त्रपाटनस्य चेक्षणाद्वादेऽमात्यैः शुद्धद्रम्मसहस्रे क्षिप्ते सीवितुं न शक्यते । नूनं कूटान् क्षिप्त्वाऽधिकं वस्त्रं पाटितमिति शुद्धा दापिताः १९ । नाणके–केनापि जीर्णमहार्घ्यनाणकान्यादाय नवलके नवाऽत्यल्पार्घ्यनाणकानि क्षिप्तानि । वादेऽमात्यैः कः कालः स्तादति पृष्ट्वा जीर्णनाणकानि दापितानि २० । भिक्षोः केनापि न्यासोऽर्पितः तस्मिंश्च तमददति धनिकेन द्यूतकाराः सेवितास्ते च भिक्षुमठे गताः स्वीयन्यासान् यावद्ददति तावत्सङ्केतात् पूर्वन्यासधनिकेनागत्य भिक्षुर्याचितो नव्यबहुन्यासलोभात्तन्न्यासं ददौ ततो द्यूतकाराः कल्ये न्यासा मोक्ष्यन्ते इत्युक्त्वाऽयुः २१ । चेटकनिधाने–द्वे मित्रे निधिं दृष्ट्वा शुभेऽह्नि ग्राह्य इत्याच्छाद्य गते तयोरेकेन स्वं लात्वा निधिरङ्गारैर्भृतो, मुहूर्त्ते द्वे अपि गते हा ! अभाग्येनाङ्गारा जाता

इत्युक्त्वा निवृत्ते । अन्यश्च मित्रं श्रीमत् ज्ञात्वाऽहं छलित इति लेप्यमयीं मूर्त्तिं कृत्वा द्वौ कपी तदंकोपवेशादिक्रीडां शिक्षितौ । अन्यदा मित्रपुत्रौ भुक्त्यै आहूय गोपितौ तयोः स्थाने च कपी प्रहितौ, क्रीडां कुरुतः, मित्रेणोक्तं मच्चेटकौ क तेनोक्तं कपी जातौ कथं ? यथा निधिरङ्गारीभूतः ततो निध्यर्द्धं दत्तं २२ । शिक्षायां–कोऽपि धनुर्वेदं शिक्षयित्वा बह्वर्थानुपार्ज्यार्थिलोभा-द्धनान् मां हन्तुमिच्छतो ज्ञात्वा पिण्डान्तर्द्रव्यं क्षिप्त्वा नद्यां पिण्डदानमिषेण नष्टः २३ । अर्थशास्त्रे–द्वयोः स्त्रियोरेक-सुतार्थं द्रव्यार्थं च वादे राज्ञ्योक्तं–मत्पुत्रो जातो यौवने नीतिशास्त्रवान् वादं भक्ष्यतीत्यपुत्रया कालक्षेपार्थं प्रपन्ने साऽधर्मि
२४ । इच्छा न ममेति एका विधवा लभ्यमलभमाना पतिमित्रमूचे–यत्तवेष्टं तदेयं परं स्वमुद्राहय स उद्वाह्य इयती ममेच्छे-त्यलं ददानोऽमात्यैर्द्वौ पुञ्जौ कृत्वोक्तः–कस्तवेष्टस्तेनोक्तं प्रौढस्तैरुक्तं यत्तवेष्टं तदेयमित्युक्तिबलात्प्रौढं देहीति दापितः
२५ । नतमहसे–परिव्राजकः कोऽप्यवक्–योऽपूर्वं श्रावयेत्तस्मै लक्षमूल्यं पात्रं ददे, धूर्त्तेणोक्तं–" तुज्झ पिया मह पिउणो धारेइ अणूणगं सयसहस्सं। जइ सुयपुव्व दिज्जउ, अह न सुयं खोरगं देसु " । १ । 'धारेइ'त्ति ऋणं धत्ते तदा लक्षं दीयतां । नोचेत् पात्रमित्युक्त्वा लक्षं जितः २६ ॥ ९३६ ॥ उक्ता औत्पातिकी १ । अथ वैनयिकी ' भर '

भरनित्थरणसमत्था, तिवग्गसुत्तत्थगहिअपेआला । उभओलोगफलवई, विणयसमुत्था हवइ बुद्धी ॥

भरो दुःसाध्यकार्यं, धर्मार्थकामरूपत्रिवर्गवाचकसूत्रार्थयोर्गृहीतं पेयालं सारो यया, उभयलोकयोरिहपरलोकयोः फल-वती ॥ ९३७ ॥ अत्र दृष्टान्ताः ' निमि ' ' सीआ '

औत्पातिकीबुद्धौ-दृष्टान्ताः ॥

निमित्ते अत्थसत्थे अ लेहे[3] गणिए अ कूवे अस्से अ। गद्दहँ लक्खण गंठी, अगए गणिआ य रहिओ अ ॥
सीआ साडी दीहं च, तणं अवसव्वयं च कुंचस्स[12]। निव्वोदए[13] अ गोणे, घोडग पडणं च रुक्खाओ[14] ॥९३९॥

निमित्तशास्त्रं १ अर्थशास्त्रं २ लेखोऽष्टादशलिपिलेखनं ३ गणितं ४ कूप इति कूपखातकः ५ अश्वः ६ गर्दभः ७ लक्षणं अश्वस्य ८ ग्रन्थिः ९ अगदमौषधं १० गणिका ११ रथिकः १२ सीता साटिका दीर्घं च तृणं अपसव्यता क्रौञ्चस्य पक्षिण इत्येको दृष्टांतः १३ नीव्रोदकं १४ गौर्घोटकः वृक्षात् पतनं चेत्येको दृष्टान्तः १४। तत्र निमित्ते–कस्याश्चिन्नैमित्तिकशिष्यौ पुत्रागमं पृच्छन्त्याः शीर्षात्पतितो घटो भग्नः तत्रैकोऽवक् 'तज्जाएण य तज्जायमि'ति सुतोऽपि मृतः, द्वितीयोऽवक् भुव उत्पन्नो भुवश्च मिलित इति 'तज्जाएण य तज्जायमि'ति त्वत्सुतो गृहे आगात् तच्चाभूत् १। अर्थशास्त्रे–पाटलीपुत्रे कल्पाख्यं मन्त्रिणं हतं श्रुत्वाऽरिसैन्ये समेते नन्दनृपेण कल्पः कूपात्कृष्टो नावारूढः सन्धिकृते संमुखागतस्य रिपुमंत्रिणोऽग्रे इक्षुव्रज ऊर्ध्वाधच्छिन्ने मध्ये किं स्यादित्याद्यसम्बद्धं करसंज्ञयोक्त्वा तं प्रदक्षिणयन्निवृत्तः, रिपुमन्त्री समूलानि वः शिरांसि छेत्स्याम्यावर्त्ते च पातयिष्यामीति कल्पकभावमज्ञात्वा प्रत्यावृत्य लज्जितः स्वनृपानूचे कल्पकबटुको यत्तल्पति किं कथ्यते? ते च कल्पकोऽस्तीति ज्ञात्वा नेशुः २। लेखे–शिष्यः शिक्षमाणः सर्वलिपीर्वेत्ति। 'हंसलिवी १ भूयलिवी २ जक्खी ३ तह रक्खसी य ४ बोधव्वा। उड्डी ५ जवणि ६ तुरुक्की ७ कीरी ८ दविडी ९ य सिंधवीया १० मालविणी ११ ।१। नडि १२ नागरी १३ लाडलिवी १४ पारसी १५ य बोधव्वा। तह अनिमित्तीयलिवी १६ चाणिकी १७ मूलदेवी १८ य ।२।' लिवीओ ३। गणितं एकादिपरार्द्धयान्तं वेत्ति ४।

वैनयिकी-
बुद्धौ
दृष्टान्ताः ॥

[illegible] वेत्ति इयन्यां भुव्यत्राम्भोऽस्ति ५ । अश्वे-द्वारवत्यां लोकैः स्थूला अश्वा आत्ताः कृष्णेन लक्षणवान् वहत्वर्द्धिकृत्क्र-
[illegible]ऽप्यात्तः ६ । गर्दभे-[illegible] मन्येऽटव्यां तृषार्त्ते वृद्धेन यत्र गर्दभा उत्सिचन्त्यत्र सिराम्भोऽस्तीत्युक्ते तथाकृतेऽम्बु लब्धं ७ ।
लक्षणे-कोऽप्यश्वद्वयं मे देयमित्यश्वसारां कुर्वन्नश्वपतिसुतामक्षैत्ताद्योऽश्व उच्चस्थानादश्मभृतचर्मपात्रे क्षिप्ते पटहे वादिते च न
[illegible] इति ज्ञानाऽश्वद्वयं एवं परीक्षाशुद्धं याचन्नश्वेशेनोदयकरौ तावश्वौ अदातुकामेन सुतां दातुं प्रियाऽनिच्छन्त्युक्ता-
श्रीपुरे [illegible] भागिनेयः मल्लक्षणत्वात् पुत्रीं दत्वा गृहे स्थापितोऽन्यत्रमायी पत्न्यानुज्ञोऽरण्ये भ्रामं भ्रामं षण्मासैरात्तकृष्ण-
[illegible] पतिना तेन मितमक्षयं स्यादिति लक्षस्वर्णेन पत्न्या विक्रीय्य स स्वकुलं सधनं चक्रे, एवं अश्वरक्षायै एषोऽपि
[illegible] इति, ततः स पुत्रीं दत्वा गृहेऽस्थापीति गृहेशधीः ८ । ग्रन्थौ-पाटलिपुरे मुरुंडस्य राज्ञः कैश्चिद् मूढसूत्रं
[illegible] नष्टाग्र्यः समुद्गकश्चेति ग्रन्थिका प्रैषि, कोऽपि न वेत्ति । पादलिप्ताचार्येण सूत्रमुष्णाम्भसि क्षिप्त्वा
[illegible] प्रान्तः कृष्टः, यष्टौ जले मुक्तायां मूलं गुरुत्वान्मग्नं इति मूलं ज्ञातं, समुद्गकश्चोष्णाम्भसि घोलितो जतु-
[illegible] सूरिणा तुम्बं रत्नैर्भृत्वा नष्टसीविन्या सीवित्वा तेषां प्रैषि, । एनमुद्घाट्य रत्नानि लान्तु ।
[illegible] ९ । अगदे-परचक्रागमे राजादेशाज्जलविनाशाय विषपुञ्जाः समेताः, वैद्येन तु यवमाने आनीते राजा रुष्टः, वैद्योऽ-
[illegible] । ततः परीक्षायै तत् क्षीणेभपुच्छवालाधो दत्तं । तत् सर्वं देहं व्याप्नोत्तदेवाऽगदलवाद्वालितं च राजा तुष्टः
१० । गणिका-कोशा सर्षपभृतस्थाले सूचीप्रोतपुष्पोर्ध्वे नृत्ता ११ । रथिको गवाक्षस्थः पुंखे पुंखे शरं सन्धायाम्रलुम्बीर्ललौ
१२ ॥ ९३८ ॥ 'सीया साडी 'त्यादि पूर्वार्द्धकथा-कश्चिन्नृपपुत्राध्यापको लब्धबहुस्वः स्नानार्थं वस्त्रं याचन्नृपपुत्रैर्नृपद्रो-

११

ह्याशयं ज्ञापितो यथा–शुष्कायामपि शाटिकायां शीता शाटिका, कोऽर्थः अस्मत्पिता त्वां प्रति शीतो विरक्त इति। तृणं द्वाराभिमुखं कृत्वा दीर्घं च तृणं पलायते दीर्घः पन्थेति, क्रौञ्चो जीवोऽग्रे स्नानान्ते मङ्गलार्थमारात्रिकवत्प्रदाक्षिण्ययोत्तार्यते । तदा त्वपसव्येन संहारेणोत्तारितः तव संहार इति स क्षेमेण नष्टः १३ । नीव्रोदके–काचित्प्रोषितपतिकोपपतिमानाय्य नखकल्पनादि तस्याकारयत्, स रात्रौ नीव्राम्बु पीत्वा मृतस्तया त्यक्तोऽमात्येन तु नवक्षालितपदोऽयमिति सर्वनापितान् पृष्ट्वोदन्तं ज्ञात्वा कथं मृत इति पृष्टा स्त्री जगौ नीव्रोदकात्, मन्त्री नीव्रेऽहिरस्तीत्याचख्यौ दृष्टश्च १४ । 'गोणे घोडगे'त्यादि कथा–कोऽप्यपुण्यो मित्राद् वृषौ याचित्वा सोऽयं दातुमागात्तस्य च दृष्टौ वाटके बध्वाऽगात्। निशि वृषौ चौरैर्हृतौ मित्रे च याचिते सोऽवक् त्वदृष्टौ बद्धौ को मदोषस्तयोर्विवदतोर्यातोरश्वपातितेन केनाप्यपुण्योऽभाणि–अश्वं वालय। तेन मर्माहतोऽश्वो मृतोऽश्वे सोऽपि तस्य विलग्नस्त्रयोपि सह राजधान्यां यान्तो निशि क्वापि वटाधः स्थिताः, अपुण्यो मुमूर्षुर्द्रुशाखातः पाशे त्रुटितेंऽधः सुप्तनटोर्द्ध्वं पपात, मृतो नटस्तच्छिष्यास्तस्य विलग्नाः, प्रातः सर्वैर्मन्त्री स्वरूपं ज्ञापितः, मन्त्र्यपुण्ये कृपां कृत्वोचे अयं वृषौ दाता परं येन तौ बध्यमानौ दृष्टौ सोऽक्ष्णी दत्तां, अश्वेशो जिह्वां, नटस्यैकः शिष्योऽस्मिन् वटाधः सुप्ते उल्लम्ब्य पततु, ततस्तं त्यक्त्वा नष्टाः १४ । अत्र कथा सुगुरूपदेशजत्वाद्वैनयिकीधीः ॥ ९३९ ॥ उक्ता वैनयिकी, अथ कार्मिकी 'उव'

**उवओगदिट्ठसारा, कम्मपसंगपरिघोलणविसाला। साहुक्कारफलवई, कम्मसमुत्था हवइ बुद्धी ॥९४०॥**

उपयोगः कर्म्मणि मनोनिवेशस्तेन दृष्टसारा लब्धतत्त्वा, कर्मणि प्रसङ्गोऽभ्यासः परिघोलनं विचारस्ताभ्यां विशाला, सुष्ठु कृतमिति साधुकारस्तेन फलवती ॥ ९४० ॥ दृष्टान्ताः 'हेर'

**हेरन्निए करिसए, कोलिअ डोवे अ मुत्ति घयं पवए। तुन्नाग वड्डई पूइए अ घडे चित्तकारे अ ॥९४१॥**

हैरण्यिकः परीक्षकः ध्वान्तेऽपि शुद्धं कूटं वा नाणकं करस्पर्शाद् वेत्ति १ एवं सर्वत्र योज्यं। कर्षको धान्यनिष्पत्तिमानं वेत्ति। तथा क्वापि चौरेणाब्जाकारं खात्रं पातितं, लोको विस्मितः, एकः कर्षकोऽवक्-अभ्यासे किं दुष्करं, चौरश्छन्नं स्थितस्तन्मत्वा क्षेत्रे कर्षकं घ्नन्नेनोचे आदौ पश्य, पटं प्रसार्य व्रीहिमुष्टिं भृत्वोचे-किमुखान् संमुखान् पार्श्वस्थान् पातये, यथा न चौरेणोक्तं तथा कृतं ततस्तुष्टः २। कौलिको मुष्ट्यात्तैस्तन्तुभिर्वेत्तीयद्भिः पटः स्यात् ३। 'डोवो' दर्वी, वर्द्धकिर्वेत्त्यस्यां दर्व्यां इयन्माति ४। 'मुत्ति' त्ति मौक्तिकं मणिकृदुच्छाल्य पतत् शुकरवालेन प्रोतयेत् ५। घृतं आभीरः शकटस्थोऽपि संकटमुखे पात्रे नामयेत् ६। प्लवको नटो वंशाग्रेऽपि नर्त्तते ७। तुन्नाकः सूक्ष्मं सीव्यति यन्न ज्ञायते ८। वर्द्धकिरमित्वापि चैत्यादिमानं वेत्ति ९। पौपिको वेत्तीयन्तोऽपूपाः स्युः १०। एवं घटकृत् ११। सर्वं चित्रकृत् यथावस्थितरूपं चित्रयेत् १२ ॥९४१॥ उक्ता कार्मिकी। अथ पारिणामिकी 'अणु'

**अणुमाणहेउदिट्ठंत-साहिया वयविवागपरिणामा। हिअनिस्सेअसफलवई, बुद्धी परिणामिआ नाम ॥**

अनुमानहेतुदृष्टान्तैः साधयतीति साधिका। तत्र लिङ्गाद् ज्ञानमनुमानं स्वार्थानुमानमित्यर्थः। तत्प्रतिपादकं वचो हेतुः परार्थानुमानमित्यर्थः, साध्यस्योपमाभूतो दृष्टान्तः, वयसस्तारुण्यादेर्विपाके परिपाके परिणामः पुष्टता यस्याः, हितं श्रेयस्तत्कारणं वा निःश्रेयसो मोक्षस्तत्कारणं वा ताभ्यां फलवती ॥ ९४२ ॥ दृष्टान्ताः 'अभ'

कार्मिकी-बुद्धौ दृष्टान्ताः ॥

अभए सिट्ठि[2] कुमारे[3], देवी[4] उदिओदए हवइ राया[5]। साहू अ नंदिसेणे[6], धणदत्ते[7] सावग अमच्चे ॥९४३॥

अनागतसैन्यनिवेशस्थाने धनं क्षिप्त्वा चण्डप्रद्योतो नाशितस्तेन च स्वं बद्धं वरचतुष्कं याचनेन मोचितं। स चाहि बध्वा स्वपुरं नीतः इत्याद्याऽभयकुमारे पारिणामिकी १। काष्ठश्रेष्ठी भार्यादुश्चरितात्प्रव्रज्य क्वापि चतुर्मासीं स्थित्वा विहरन्नमर्षाद् द्विजशिक्षितगुर्विणीवेश्यया त्वं मे पतिरिति रुद्धः आख्यत् चेन्मद्गर्भस्तदा योन्यां निर्यातु नो चेदुदरं भित्त्वेत्युदरं भित्त्वा निर्गतः। साधोः शासनस्य च कीर्त्तिर्जाता २। खुड्डगकुमारो दीक्षां त्यक्तुकामः 'सुट्ठु गाइयं' इत्यादि श्रुत्वा प्रबुद्धः स्थिरोऽभूत् ३। देवी पुष्पवती, तया स्वर्गं गतया पुष्पचूलापुत्री नरकस्वर्गदर्शनेन बोधिताऽन्निकापुत्रगुरुणा दीक्षिता ४। पुरिमताले उदितोदितो राजा श्राद्धः श्रीकान्ता राज्यपि जिनधर्मरता राज्या परिव्राजिका जिता काश्यां धर्म्मरुचिराज्ञः स्वलिखितं श्रीकान्तारूपमदर्शयत्। तेन दूतेन सा न लब्धा ततः संनह्य पुरिमतालं रुरोध। उदितोदितराजा जनरक्षायै श्रीदमाराध्यारिसैन्यं काश्यामेव मोचितवान् ५। साधुर्नन्दिषेणः श्रेणिकसुतः स्वशिष्यस्य स्थैर्याय राजगृहे वन्दनागताः स्वपन्तीरदर्शयत्। शिष्यश्च मद्गुरुणेदृग्नार्यस्त्यक्ता इति स्थिरोऽभूत् ६। धनदत्तः सपुत्रोऽरण्यपतितः क्षुधार्त्तो 'मृत्वा मा दुर्गतौ यासं' इति चिलातीपुत्रहतां स्वसुतां सुंसुमामश्नात् ७। श्रावकः स्वभार्यासख्यामासक्तः पत्न्या पत्युः स्वदारसंतोषव्रतं ज्ञात्वा मा आर्त्याऽवगतौ यात्विति स्वयं सखीवेषः कृतः। व्रतभङ्गो मेऽभूदिति पत्युः खेदे सा स्वरूपमाख्यत्, पत्न्या धीः ८। अमात्यो धनुर्ब्रह्मदत्तं जतुगृहान्तः सुप्तं तस्मिन् ज्वलति सुरङ्गया आकृषत् ॥ ९४३ ॥ 'खव'

खवगे अमच्चपुत्ते, चाणक्के[13] चेव थूलभद्दे[13] अ। नासिक्कसुंदरी नंदे[14], वइरे[15] परिणामिआ बुद्धी ॥९४४॥

पारिणामिकीबुद्धौ दृष्टान्ताः ॥

चण्डकौशिकप्राग्भवगदकः क्षपको मृतो विराधितदीक्षेष्वहिकुलेषु दृग्विषो जातो जातिस्मृत्या कृपया प्रासुकाहारोऽभूत्। राजसुतेऽहिना मृतेऽहिशीर्षाऽऽनेतुर्दीनारं ददे इति नृपोक्तया कोप्यौषध्या विलान्निर्गतानां शीर्षाणि छिन्दन् मा जीवहत्याऽस्त्विति पृच्छेन निर्यान्तं जघान तावन्नागाधिष्ठात्रीसुरा राजोक्तः नागा न वध्याः सुतो भावीति। साधुजीवः सर्पो मृतस्तत्सुतोऽभूद् बाल्यान्ते मुनीक्षणाज्जातिं स्मृत्वा प्रव्रज्य बहुक्षुधः क्षमाभिग्रहवान् शीताशनाद्यर्थं हिण्डते। तत्र गच्छे १-२-३-४ मासक्षपका इत्यादिकूरगडूककथा, तस्य ४ क्षपकानां च केवलं-सर्वेषां पारिणामिकी १०। अमात्यपुत्रो वरधनुः कापालिकरूपेण चाण्डालकुलस्थामस्त्रामौषध्या शबरूपां कृत्वा विद्यासाधनमिषेण निर्वासितवान् ११। चाणिक्येन मम विश्रान्तलिंगं राज्यमस्त्वीत्यनेकोपायैश्चन्द्रगुप्तो राजाऽस्थापीत्याद्या धीः १२। स्थूलभद्रो नन्दे व्यापारं लाहीति वदति विमृश्य दीक्षां लली इत्यादि १३। नासिक्यसुन्दरी-नन्द इति नासिक्यपुरे नन्दो वणिक् सुन्दरीभार्यायामत्यासक्त इति सुन्दरीनन्द इति ख्यातः। स भ्राता साधुना बोधाय विद्यया मेरुं नीतः सुरीरूपं प्रदर्श्य तत्प्राप्तिसादरः प्रव्राजितः १४। वज्रस्वामी जातिस्मृत्या रुदनेन स्वां माधवेऽद्रापयत् इत्यादि १५॥ ९४४॥ 'चल'

चलणाहय[15] आमंडे, मणी अ सप्पे अ खग्गि[20]। थूभिं[21] दे[22] परिणामिअबुद्धीए एवमाई उदाहरणा ॥

चरणाघाते-राजा युवसृद्धधीज्ञानायोचे यो नृपं लत्तया हन्ति तस्य किं कार्यं ? युवभिर्घात्यः वृद्धै राज्ञीं विना को हन्ति

इति पूज्य उक्तः वृद्धाः सत्कृताः १६। 'आमंडे'ति आमलकं पक्वं तत्केनाप्यानीतं। धीमता चाकाले इदं न स्यात्ततः कृत्रिममिति ज्ञात्वा त्यक्तं १७। मणौ–सर्पे गृध्रहते मणौ कूपे पतिते कान्त्या कूपस्थमेवाम्बु रक्तं दृश्यते वृद्धस्तु मणिं ज्ञात्वा ललौ १८। सर्पस्य चण्डकौशिकस्य श्रीवीरं दृष्ट्वाऽहो? महात्मेति धीः १९। खड्गाख्यः श्वापद एकशृङ्गः पार्श्वयोर्लम्बमानचर्म्मा च स्यात्। कोऽपि श्राद्धोऽकृतपुण्यः खड्गो जातो जन्तून् घ्नन् साधून् दृष्ट्वा धावितस्तेषु कायोत्सर्गस्थेषु हन्तुमशक्तो जातिं स्मृत्वा अनशनं लात्वा स्वर्गं गतः २०। स्तूपे–वैशाल्यां कूणिकगृहे मागधीवेश्यावशीकृतकूलवालर्षिः श्रीसुव्रतस्तूपाद् दुर्गोऽग्राह्य इति ज्ञात्वा स्तूपे पातिते दुर्गरोहको भंक्ष्यतीति छद्मना जनैस्तमपातयत्। कूणिकेन दुर्गश्चात्तः स्तूपानुभावात्, दुर्गोऽग्राह्य इति पारिणामिकी धीः २१। 'इंदे'त्ति इन्द्रपादुकाश्चाणिक्येन तल्लोकैः पातयित्वा पाटलीपुरमात्तं २२ ॥९४५॥ उक्ता परिणामिकी। एवमभिप्रायसिद्ध उक्तः ९। 'न कि'

**न किलम्मइ जो तवसा, सो तवसिद्धो दृढप्पहारिव्व। सो कम्मक्खयासिद्धो, जो सव्वक्खीणकम्मंसो**

न क्लाम्यति १०, क्षीणाः सर्वे कर्म्मांशाः कर्मप्रदेशा यस्य। अत्र च कर्म्मक्षयसिद्धेनाधिकारः ॥ ९४६ ॥ अस्यैव निरुक्तिमाह 'दीह'

**दीहकालरयं जं तु, कम्मं से सिअमट्ठहा। सिअं धंतंति सिद्धस्स, सिद्धत्तमुवजायइ ॥ ९४७ ॥**

दीर्घः सन्तानाऽनादित्वात्स्थितिकालो यस्य तन्निसर्गनिर्म्मलात्मरञ्जनत्वाद्रजः, ईदृक् यत्कर्म, तुशब्दो भव्यकर्म्मविशेष-

समुद्घात-स्वरूपम् ॥

णार्थः । अथवा ज्ञानावरणादिभेदेन मितं बद्धं, ततः शेषितं ज्ञानादिभिरल्पं कृतं । ततोऽपि ध्यानानलेन ध्मातं लोहमलव-
द्यं इत्येवं सिद्धस्य सिद्धत्वं उपजायते । सिद्धस्येति निश्चयनयमताश्रयात् ॥ ९४७ ॥ यदा च शेषितं कर्मायुषा सह विषम-
स्थितिः स्यात्तदा किं करोतीत्याह ' नाऊ '

**नाऊण वेअणिज्जं, अइबहुअं आउअं च थोवागं। गंतूण समुग्घायं, खवंति कम्मं निरवसेसं ॥९४८॥**

केवलेन ज्ञात्वा वेदनीयं उपलक्षणत्वान्नामगोत्रे अपि, सम्यगपुनर्भावेन उत्प्राबल्येन कर्मणो हननं समुद्घातः तं, गत्वा
प्राप्य, क्षपयति कर्म, निरविशेषमिति बह्वोः क्षयात् शेषस्य चान्तर्मुहूर्त्तमात्रावधित्वात् किञ्चिच्छेषत्वेनाविवक्षितत्वात् ॥ ९४८ ॥
अथ समुद्घातस्वरूपमाह ' दंड '

**दंड कवाडे मंथंतरे अ, साहरणया सरीरत्थे। भासाजोगनिरोहे, सेलेसी सिज्झणा चेव ॥ ९४९ ॥**

सर्वोऽपि केवली समुद्घातं कुर्वन्नकुर्वन् वा प्राक् आन्तर्मौहूर्त्तिकं उदयावलिकायां कर्म्मांशक्षेपव्यापाररूपं उदीरणाविशे-
षात्मकं आयोजिकाकरणं आवश्यककरणान्याह कुर्यात्ततः समुद्घातकर्त्ता आद्यसमये स्वाङ्गविष्कम्भं ऊर्ध्वाऽधोलोकान्तगामिनं
जीवप्रदेशानां दंडं कुर्यात् १ । द्वितीयसमये पूर्वापरं दक्षिणोत्तरं वा जीवप्रदेशानां लोकान्तं यावत् प्रसारणात्कपाटम् २ ।
तृतीये दक्षिणोत्तरं पूर्वापरं वा प्रसारणान्मन्थानं ३ । चतुर्थेऽन्तरपूर्त्तिस्तदा च सर्वलोकव्यापी आत्मा स्यात् ४ । ततः क्रमात्
' साहरणय 'त्ति कोऽर्थः पञ्चमसमये मन्थान्तराणि संहृत्य कपाटं ६ । सप्तमे कपाटं संहृत्य दण्डं ७ । अष्टमे समये दण्डं संहृत्य

शरीरस्थः स्यात् ८ । समुद्घाते च मनोवाग्योगयोर्न व्यापारः किन्तु केवलकाययोगस्य । तत्राद्यान्त्यसमययोरौदारिककाययोगो दण्डादिक्रियायां तत्प्रयत्नविधानात् । द्वितीयषष्ठसप्तमसमयेषु पुनरौदारिककार्म्मणमिश्रः, औदारिके तस्माच्च बहिः कार्म्मणे एवं द्वयोः वीर्यपरिस्पन्दात्, त्रिचतुःपञ्चमेषु तु कार्म्मण एव औदारिकाद्बहिरेव बहुतरप्रदेशव्यापारात्तदा चानाहारकः स्यात् । चूर्णौ तु समुद्घातयुक्तिः—सर्वजीवप्रदेशान् बुद्ध्या असङ्ख्यान् भागान् कृत्वाऽसंङ्ख्येयभागं मुक्त्वा शेषैर्देहनिर्गतैरष्टौ सान्ततिकान्योन्यावियोगिरुचकसंस्थानस्थितजीवमध्यप्रदेशान् वज्रवैडूर्यपटलयोर्द्वयोर्लोकमध्यरुचकाष्टप्रदेशेषु संस्थाप्य वृत्तं ऊर्ध्वाधः समप्रदेशं चतुर्दशरज्ज्वायामं आद्यसमये दण्डं, कृत्वा मुक्ताऽसङ्ख्येयभागान् आद्यसमयप्रदेशासङ्ख्यगुणहीनान् बुद्ध्याऽसङ्ख्यभागीकृतादेकं भागं मुक्त्वा शेषैः प्राक् प्रत्यक् विस्तीर्णमपागुदग् ह्रस्वमूर्ध्वाध उच्छ्रितं द्वितीये कपाटं, तृतीये निचितावयवं वृत्तं स्थालतुल्यं प्रतरं । चतुर्थे निःकुटसंस्थितलोकाकाशप्रदेशपूरणं दंडादिवहुप्रदेशैः कुर्यात् । शेषोऽसङ्ख्यभागस्तु देहाकाशप्रदेशमान इति । इह कर्म्मक्षपणादि चूर्णिमध्यमवृत्त्यादिभ्यो ज्ञेयं, तथा 'छम्मासाऊसेसे उप्पन्नं जेसि केवलं नाणं । ते नियमा समुग्घाया सेस समुग्घाय भयणिज्जा' ।१। इति । अथ 'भासा०' इति कोऽर्थः ? स समुद्घातादनु कारणवशात् भाषाग्रहणेनोपलक्षितं योगत्रयमपि व्यापारयति । तद्यथाऽनुत्तरसुरैर्मनसा सन्देहं पृष्टो मनोद्रव्याण्यादाय मनोयोगं, आमन्त्रणादौ च वाग्योगं, फलकप्रत्यर्पणादौ औदारिककाययोगं, ततोऽन्तर्मुहूर्त्तं स्थित्वा आदावेव याऽसौ शरीरप्रदेशसम्बद्धा मनःपर्याप्तिर्यया पूर्वं मनोद्रव्याण्यादाय मनः प्रयुक्तवान् तन्मनःपर्याप्तिनामकर्म्म, तत्संयोगविघटनायाचिन्त्येन शरीरवीर्येण पर्याप्तिमात्रस्य जघन्ययोगिनः संज्ञिनो यावन्ति मनोद्रव्याणि यावांश्च तद्व्यापारस्तस्मादसङ्ख्यगुणहीनं मनोयोगं प्रतिसमयं रुन्धन्नसङ्ख्येयैः समयैः समस्तं मनोयोगं

समुद्घात-स्वरूपम् ॥

...योगिद्वीन्द्रियवाग्योगादसङ्ख्यगुणहीनं वाग्योगं प्रतिसमयं रुन्धन्नसङ्ख्येयैः समयैः सर्वं वाग्योगं रुणद्धि। ततोऽन्तर्मुहूर्तं स्थित्वा पर्याप्तिमात्रजघन्ययोगिद्वीन्द्रियवाग्योगादसङ्ख्यगुणहीनं काययोगमपि। तदा च समयैः सर्वं काययोगं रुणद्धि। एवं प्रथमसमयोत्पन्नसूक्ष्मपनकजघन्यकाययोगासङ्ख्यगुणहीनं काययोगमपि। तदा च सूक्ष्मक्रियाप्रतिपातिध्यानं च शुक्लध्यानतृतीयो भेदः। इह चूर्णौ 'आदौ वाग्योगनिरोधः ततो मनोयोगस्य ततोऽन्त्यसमयः सूक्ष्मक्रियाप्रतिपातिध्यानं च शुक्लध्यानतृतीयो भेदः। इह चूर्णौ 'आदौ वाग्योगनिरोधः ततो मनआनपानकायरोधास्तत्राप्यादौ बादराणां ततः सूक्ष्मवाग्मनःकायानामिति।' ततोऽन्तर्मुहूर्तं स्थित्वा शैलेशीति आस्योदरादिशुषिरपूर्त्या तृतीयभागवर्तिप्रदेशोनदेहस्थः केवली मध्यमवृत्त्या पञ्चह्रस्वाक्षरोच्चारकालं यावत् शैलेशीं प्रपद्यते। शैलेशो मेरुस्तद्वन्निश्चलावस्था शैलेशी। तदा चायोगिगुणस्थानं व्युपरतक्रियानिवर्त्तिध्यानं च शुक्लध्यानतुर्यो भेदः। 'सिज्झणे'ति ततः ऋजुगत्यैकसमयेनास्पृशद्गत्या सिद्ध्यति। समुद्घातं विनापि सर्वकेवलिनो योगनिरोधशैलेश्यौ कुर्वन्त्येव ॥९४८॥ 'जह'

वच्चंति जिणा समुग्घायं ॥
जह उल्ला साडीआ, आसुं सुक्कइ विरल्लिआ संती। तह कम्मलहुअसमए,

यथा आर्द्रा, आशु, विरोल्लिता विस्तारिता, कर्म्मलघुताकरणसमये ॥ ९५० ॥ 'लाउ'

गइपुव्वपओगेणं, एवं सिद्धाणवि गईओ ॥९५१॥
लाउ अ एरंडफले, अग्गी धूमे उसू धणुविमुक्के।

अलाबु १। एरण्डफलं २। अग्नेर्धूमोऽग्निधूमः ३। इषुर्धनुर्मुक्तः ४। यथैषां गतिर्देशादिनियतैव पूर्वप्रयोगेण तथा-स्वभावेन प्रवर्तते, एवमेव व्यवहिततुशब्दस्यैवकारार्थत्वात् सिद्धानामपि गतिः स्यात्। अत्र प्रयोगाः—कर्म्ममुक्तो जीवः सकृदूर्ध्वमेव लोकान्तं गच्छति असङ्गत्वेन तथाविधपरिणामित्वादष्टमृल्लेपलिप्ताधोमग्नक्रमापगतमृज्जलतलमर्यादोऽर्ध्व-

गामितथाविधाऽलाबुवत् १, छिन्नबन्धत्वेन तादृक्परिणतेस्वद्धिधैरण्डफलवत् २, स्वाभाविकपरिणामित्वादग्निधूमवत् ३, प्राक्प्रयुक्ततत्क्रियातद्विधसामर्थ्याद्धनुर्यत्नेरितेषुवत् ४ । तथा ऊर्ध्वगौरव धर्म्माणो जीवा अधोगौरव धर्म्माणाः पुद्गलाः, सिद्धस्थानादूर्ध्वं च धर्म्मास्तिकायाभावान्न गतिः ॥ ९५१ ॥ 'कहिं'

**कहिं पडिहया सिद्धा, कहिं सिद्धा पइट्ठिया । कहिं बोंदिं चइत्ता णं, कत्थ गंतूण सिज्झई ? ॥९५२॥**

प्रतिहताः प्रतिस्खलिताः प्रतिष्ठिताः व्यवस्थिताः बोन्दि तनुं त्यक्त्वा सिद्ध्यन्ति । 'सिज्झइ' इत्यनुस्वारलोपो ज्ञेयः ॥ ९५२ ॥ 'अलो'

**अलोए पडिहया सिद्धा, लोगग्गे अ पइट्ठिआ । इहं बोंदिं चइत्ता णं, तत्थ गंतूण सिज्झई ॥९५३॥**

केवलाकाशास्तिकाये प्रतिहतास्तदानन्तर्येण स्थिताः सिद्धा लोकाग्रे पञ्चास्तिकायात्मकलोकमूर्ध्नि प्रतिष्ठिताः । इह नृक्षेत्रे बोन्दि त्यक्त्वा तत्र लोकाग्रे गत्वा सिद्ध्यन्ति ॥ ९५३ ॥ 'ईसी'

**ईसीपब्भाराए, सीआए जोअणंमि लोगंतो । बारसहिं जोअणेहिं, सिद्धी सव्वट्ठसिद्धाओ ॥९५४॥**

ईषत्प्राग्भारा सिद्धिभूस्तस्याः शीतेत्यन्याख्याया ऊर्ध्वं उत्सेधाङ्गुलनिष्पन्ने योजनेऽतीते लोकान्तः, द्वादशभिर्योजनैः सर्वार्थसिद्धाद्विमानात् सिद्धिः सिद्धिशिला अन्ये तु सिद्धिं लोकान्तमाहुः । ये सिद्धिं लोकान्तं वदन्ति तेषां सर्वार्थात्सिद्धिर्योजनैः १२ घटते ॥ ९५४ ॥ 'निम्म'

सिद्धशिला-प्रमाणम्॥

निम्मलदगरयवण्णा, तुसारगोखीरहारसरिवन्ना । उत्ताणयछत्तयसंठिआ य, भणिआ जिणवरेहिं ॥

सिद्धशिला दकरजः श्लक्ष्णाम्बुकणाः, तुषारो हिमं, सदृग्वर्णा । उत्तानछत्रसंस्थिता तलेऽतिसंकीर्णा उपर्यतिविस्तीर्णा एवा च ॥ ९५४ ॥ 'एगा'

एगा जोअणकोडी, बायालीसं च सयसहस्साइं । तीसं चेव सहस्सा, दो चेव सया अउणवन्ना ॥ ९५६ ॥

एषा सीताक्षेत्रपरिधिः, इह परिधिवर्त्तनोपायः 'विक्खंभवग्गदहगुणकरणी वट्टस्स परिरओ होइ' आदौ परिधिक्षेत्रस्य विष्कम्भभिन्नेन तनन्तस्य वर्गः क्रियते । तत्राङ्कस्य स्वाङ्केनैव गुणनं वर्गो यथा दश दशभिरेव गुणिताः शतं जातं । ततो वर्गो दशगुणः कार्यः, ततः करणीं कुर्यात्तथा विषमसमेति पदक्रमेणान्त्याङ्कादाद्याङ्कं यावद्गण । यद्यच्च तत्रान्त्यं विषमपदं गतेति तस्मादयं विधिः–'विषमात्पदतस्त्यक्त्वा वर्गं स्थानच्युतेन मूलेन । द्विगुणेन भजेच्छेषं लब्धं विनिवेशयेत्पङ्क्याम् । १ । तद्वर्गं संशोध्य द्विगुणीकुर्वीत पूर्ववल्लब्धं । उत्सार्य ततो विभजेल्लब्धं द्विगुणीकृतं दलयेत्, २ ।, इह यदन्त्यं विषमपदं तस्माद्विषमात्पदतो वर्गं 'त्यक्त्वा' यावान् वर्गो लभ्यते तावन्तं वर्गं निःकास्य 'मूलेन' तेनैव मूलवर्गाङ्केन 'स्थानच्युतेन' शेषाङ्काधःस्थापितेन 'द्विगुणेने'ति द्विगुणीकृतेन तेन शेषं अङ्कं भजेत् । लब्धं अङ्कं अधः प्राग्द्विगुणीकृताङ्कपङ्क्त्यां स्थापयेत् । ततस्तस्यांकस्य वर्गं ऊर्ध्वाङ्कात्, 'संशोध्य' तत उत्सार्य पराङ्काधो न्यस्य, तं द्विगुणीकुर्वीत । पाश्चात्यांकमप्युत्सारयेत् । पुनर्द्विगुणीकृताधःस्थांकाभ्यां ऊर्ध्वाङ्कं भजेल्लब्धं च पङ्क्त्यां न्यस्य तद्वर्गं संशोध्योत्सार्य पूर्ववद् द्विगुणीकुर्यात् । ततः प्राग्द्विगुणिताङ्करूर्ध्वाङ्कान्वि-

भजेदित्यादि प्राग्वत्, लब्धं द्विगुणीकृतं यदस्ति तद् 'दलयेद्' अर्द्धरूपं कुर्यादेवं च परिधियोजनादि सम्पद्यते। क्रोशसङ्ख्येच्छुर्निः-शेषाङ्कांश्चतुर्गुणान् कृत्वा प्राग्लब्धद्विगुणरूपसर्वाङ्केन भजेल्लब्धाङ्काः क्रोशा ज्ञेयाः। ततः शेषाङ्कं द्विसहस्रगुणं कृत्वा प्राग्येनैव सर्वाङ्केन भजेत् लब्धानि धनूंषि। ततः शेषाङ्के षण्णवति गुणेऽङ्गुलानि लभ्यन्ते ततः शेषेऽङ्के द्विगुणीकृतेऽर्द्धाङ्गुलमाप्यते इत्यादि, ततः सिद्धिक्षेत्रविष्कम्भः पञ्चचत्वारिंशल्लक्षयोजनानि तद्वर्गे २०२५०००००००००० दशगुणे २०२५००००००००००००० करण्यां तत्राङ्के विषमः २० इति सम्बन्धी द्विकः अस्मादेकस्यैव वर्गो निस्सरतीत्येको द्विकाधो धार्यः, एक एकेनैको गतः स्थितः १ ततोऽधस्तनः १ स्थानच्युतः कृतशून्योऽधो मुक्तो द्विगुणश्च कृतः। ऊर्ध्वं दशाङ्कं द्विकेन भजेत् यथाग्रस्थाङ्कानां भागा लभ्यन्ते तथैव भागो देयस्ततोऽत्र चतुष्केन भागश्चतुर्भिर्द्विगुणैरष्टौ गता दशभ्यः स्थित ऊर्ध्वं द्विकश्चतुष्कश्चाधस्तन-द्विकादग्रे लेख्यस्तद्वर्गेण चोर्ध्वं द्वाविंशतिः शोध्याः। यथा चतुर्भिश्चतुष्कैः षोडश, गता द्वाविंशतिभ्यः स्थिताः षट्, ततश्चतुष्का-ग्रस्थाङ्कोऽधो धार्यो द्विगुणश्च कृतो जाता अष्टौ। पाश्चात्यो द्विकोऽग्रे चाल्यः, ऊर्ध्वं च पञ्चषष्टिः, ततोऽधः, स्थद्विकोऽधो भागाय द्विकोऽधो धार्यः। द्वौ द्विगुणौ चत्वारः गताः षडङ्कात् स्थिताः २, द्विकोऽधस्थः ८ अधो धृतोऽष्टौ द्विगुणाः षोडश, गता ऊर्ध्वं पञ्चविंशतिअङ्कात् स्थिता नव, अष्टाधोद्विकोऽष्टपङ्क्त्यां स्थाप्यः। तद्वर्गेण चोर्ध्वाङ्कः शोध्यो यथा द्विर्द्विगुणाश्चतुष्कः ऊर्ध्वं नवतिअङ्कात् त्यक्तो जाता षडशीतिः, द्विकोऽग्रेतनाङ्काधः स्थाप्यो द्विगुणश्चतुष्कः कृतः। २ अङ्कावपि चाल्यौ, ऊर्ध्वं ८६० ततोऽधस्थः द्विकाधोभागाय त्रिको धृतः, त्रयो द्विगुणाः षट् अष्टाङ्कात् कृष्टा इत्यादि प्राग्वत् कार्यं लब्धः २८४६०४९८ अङ्कोऽर्द्धरूपः कार्यः एतत्परिधियोजनमानं इह शेषोऽङ्कः १३३९७९९ रूपः तस्मिंश्चतुर्गुणे गव्यूतानि तेषां पूर्वलब्धाङ्केन

सिद्ध-शिलायाः स्वरूपम्॥

भागेन गव्यूतमेकं लब्धं, पुनर्द्विसहस्रगुणे शेषाङ्के लब्धाङ्कभक्ते १७६५ साधिकधनूंषीत्यादि ॥ ९५६ ॥ ' बहु '

**बहुमज्झदेसभागे, अट्ठेव य जोअणाणि बाहल्लं । चरमंतेसु अ तणुई, अंगुलऽसंखिज्जई भागं ॥९५७॥**

बहुमध्यदेशभागे वृत्ततयाऽष्टयोजनानि यावद् बाहुल्यं, उच्चत्वं अष्टयोजनानि, तत्विष्कम्भयोजनानि प्रमाणाङ्गुलानां, बाहुल्येऽष्टयोजनानि तूत्सेधाङ्गुलानां, ततोऽष्टयोजनादनु शनैः शनैः कृशतां धत्ते यावच्चरमान्तेषु च अङ्गुलासङ्ख्येयभागमात्रं तनी ॥ ९५७ ॥ ' गंतू '

**गंतूण जोअणं जोअणं, तु परिहाइ अंगुलपुहुत्तं । तीसेऽवि अ पेरंता, मच्छिअपत्ताउ तणुअयरा ॥ ९५८ ॥**

योजनं योजनं गत्वा परिहीयतेऽङ्गुलपृथक्त्वं किञ्चिन्न्यूनाङ्गुलत्रयमित्यर्थः । अत्र च त्रैराशिकं करणं ज्ञेयं यथा आद्यन्तयोस्त्रिराशावभिन्नजाती प्रमाणमिच्छा च । फलमन्यजाति मध्ये तदन्त्यगुणमादिना विभजेत्, त्रिराशौ करणे आद्यन्तयोरादौ अन्ते च प्रमाणसङ्ख्या इच्छा अभिलिखितसङ्ख्या च अभिन्नजाती एकस्यैं वस्तुन आधारभूते भवतः फलं त्वन्यजातिस्तत्राप्यतृतीयोऽङ्कस्तन्मध्ये ज्ञेयं तस्यैव प्रयोजनवत्वात् । ततस्तत्फलं अन्त्याङ्कगुणं कृत्वाऽऽदिमेन भजेत् । अयं भावः सार्द्ध २२ योजनलक्षाणि गत्वा यद्यष्टौ योजनानि हीयन्ते तदैकयोजने किं हीयते ? अनया रीत्या सर्वत्र त्रैराशिके करणं ज्ञेयं, स्थापना २२५००००।८।१। अत्र चान्त्येनैकेन मध्यवर्तिनोऽष्टौ गुणितास्तावन्त एव स्युरिति । तानि चाष्टायोजनान्याद्यराशिना विभाज्यानि न च भागं यच्छन्त्यतोऽङ्गुलानि क्रियन्ते । तत्रोत्सेधाङ्गुलाष्टयोजनैः ६१४४००० अङ्गुलानि अस्य राशेः २२५०००० रूपाद्यराशि-

भागे लब्धं अङ्गुलद्वयं शेषः १६४४००० भागराशिश्च २२५०००० ततः ऊनमङ्गुलत्रयमायातम् । एतदेवाङ्गुलपृथक्त्वशब्देनोक्तं तथा प्रज्ञापनायां द्वितीयपदे मध्यवर्त्यष्टयोजनेषु हानिर्निषिद्धैवातस्तत्र मध्याष्टयोजनवर्जशेषक्षेत्रस्य हानिर्ज्ञेया । तस्याः शीतायाः क्रमेण तले हीयमानायाः अपि पर्यन्ता मक्षिकायाः पत्रात्पक्षादपि तनुतरा घृतपूर्णकरोटिकाकारेऽत्यर्थः स्थापना ॥ ९५८ ॥ ‘ ईसी ’

**इसीपब्भाराए उवरिं खलु, जोअणंमि जो कोसो । कोसस्स य छब्भाए, सिद्धाणोगाहणा भणिआ ९५९**

ईषत्प्राग्भाराया इति सिद्धशिलाया उपरि खलूत्सेधाङ्गुलयोजनस्य य उपरितनः क्रोशो गव्यूतं तस्योपरितने षष्ठे भागे सिद्धानामवगाहना स्थितिर्भणिता, योजनस्य चतुर्विंशतितमे भागे इत्यर्थः ॥ ९५९ ॥ ‘ तिन्नि ’

**तिन्नि सया तित्तीसा, धणुत्तिभागो अ कोसछब्भाओ । जं परमोगाहोऽयं, तो ते कोसस्स छब्भाए ॥९६०॥**

त्रीणि शतानि त्रयस्त्रिंशद्धनूंषि धनुषश्च तृतीयो भागः, एवं प्रमाणः क्रोशस्य षष्ठो भागः, यद्यस्माद्धेतोः सिद्धानां परम उत्कृष्टोऽवगाहो जीवव्याप्तिः इयानेव स्यात्, पञ्चधनुःशतोच्छ्रितानां तृतीयभागहानौ इयन्मात्रत्वात् । ततस्ते क्रोशस्य षष्ठभागे सन्तीत्युक्तं । यद्यपि मरुदेवा ५२५ धनुरवगाहना तथापीभपृष्टे निष्पन्नत्वाद्वृद्धत्वाच्च सङ्कुचिततन्वी तेन तस्या अप्यवगाहनेयत्येव ॥ ९६० ॥ ‘ उत्ता० ’

**उत्ताणउव पासिल्लउव अहवा निसन्नओ चेव । जो जह करेइ कालं, सो तह उववज्जए सिद्धो ॥९६१॥**

उत्तानो वा पार्श्वस्थो वा निषण्ण उपविष्टो वा, किं बहुना ? यो यथा कालं करोति ॥ ९६१ ॥ 'इह'

इहभवभिन्नागारो, कम्मवसाओ भवंतरे होइ । न य तं सिद्धस्स, जओ तम्मिवि तो सो तयागारो ॥ सिद्धावगाहना ॥

भवादधिकृतभवाद्भवान्तरे जीवो भिन्नाकारोऽन्याकारवान् कर्मवशात् स्यात्, न च तत्कर्म सिद्धस्य यतस्ततोऽसौ सिद्धस्तस्मिन् मोक्षेऽपि तदाकारः प्राग्भवाकार एव स्यात् ॥ ९६२ ॥ 'जं सं'

जं संठाणं तु इहं भवं, चयंतस्स चरमसमयंमि । आसीअ पएसघणं, तं संठाणं तहिं तस्स ॥९६३॥

यत्संस्थानं इह भवं त्यजतश्चरमसमयेऽभूत्तदेव संस्थानं प्रदेशैर्घनं निचितं रन्ध्रपूरणात्तत्र मुक्तौ तस्य सिद्धस्य स्यात् ॥ ९६३ ॥ 'दीहं'

दीहं वा हस्सं वा जं, चरमभवे हविज्ज संठाणं । तत्तो तिभागहीणा, सिद्धाणोगाहणा भणिआ ॥९६४॥

दीर्घं ह्रस्वं वा चरमभवे यत्संस्थानं भवेत् ततस्त्रिभागोना सिद्धानामवगाहना सर्वशुषिरपूर्त्या सर्वाङ्गोपाङ्गानां त्रिभागहीनत्वात् ॥ ९६४ ॥ 'तिन्नि'

तिन्नि सया तित्तीसा, धणुत्तिभागो अ होइ बोद्धव्वो । एसा खलु सिद्धाणं, उक्कोसोगाहणा भणिआ ॥

३३३ धनूंषि धनुस्तृतीयभागश्च, एषा सिद्धानां उत्कृष्टावगाहना प्राग्भवे पञ्चधनुःशतमानानां ज्ञेया ॥ ९६५ ॥ 'चत्ता'

चत्तारि अ रयणीओ, रयणितिभागूणिआ य बोद्धव्वा । एसा खलु सिद्धाणं, मज्झिमओगाहणा भणिआ ॥

रत्नयः करा रत्निश्चैका त्रिभागेनाष्टाङ्गुलरूपेणोनिता, १६ अङ्गुलाधिकचतुर्हस्तमानेत्यर्थः। एषाऽवगाहना प्राग्भवे सप्तहस्तमानानां, तत्र यद्यपि रत्निशब्देन नाममालायां बद्धमुष्टिकरः कथ्यते, तथाऽप्यत्र रत्निशब्दः पूर्णहस्तार्थ एव ॥ ९६६ ॥ 'एगा'

**एगा य होइ रयणी, अट्ठेव य अंगुलाइ साहीआ। एसा खलु सिद्धाणं, जहन्नओगाहणा भणिआ ॥९६७॥**

एका रत्निः, च एवार्थः, अष्ट अङ्गुलान्येवेति साधिका एषा प्राग्भवे करद्वयमानानां ॥ ९६७ ॥ यत्प्रज्ञापनादौ सिद्धियियासूनां जघन्यतः सप्तहस्तावगाहनोक्ता तत्तीर्थकरानाश्रित्य नान्येषां, अन्ये तु उत्कृष्टा ५०० धनूंषि, जघन्या सप्तहस्ता, एषा प्रायोवृत्तिरेव, कदापीतोऽधिका हीनाऽपि स्यात्। तत्र द्विहस्तसिद्धाः कुर्म्मापुत्राद्याः। 'ओगा'

**ओगाहणाइ सिद्धा, भवत्तिभागेण हुंति परिहीणा। संठाणमणित्थंत्थं, जरामरणविप्पमुक्काणं ॥९६८॥**

अवगाहनायां सिद्धा भवाद्भवगतदेहात्तृतीयभागेन परिहीना भवन्तीति संस्थानं अनित्थस्थं न इत्थं तिष्ठन्तीति वक्तुं शक्यं, अनियताकारमित्यर्थः, केषां जरादिविप्रमुक्तानां ॥ ९६८ ॥ 'जत्थ'

**जत्थ य एगो सिद्धो, तत्थ अणंता भवक्खयविमुक्का। अन्नुन्नसमोगाढा, पुट्ठा सव्वे अ लोगंते ॥९६९॥**

भवक्षयेन कर्म्मभ्यो विमुक्ता अन्योन्यं समवगाढा आश्लिष्टा धर्म्माधर्म्मास्तिकायवत् सन्ति। सर्वे चोर्ध्वं लोकान्ते स्पृष्टा लग्नाः सन्ति ॥ ९६९ ॥ 'फुस'

**फुसइ अणंते सिद्धे, सव्वपएसेहि निअमसो सिद्धो। तेऽवि असंखिज्जगुणा, देसपएसेहिं जे पुट्ठा ॥९७०॥**

स्पृशत्यनन्तान् सिद्धान् सर्वैरात्मप्रदेशैर्नियमतः सिद्धः । तथा सर्वप्रदेशैः स्पृष्टेभ्यो देशप्रदेशैर्ये स्पृष्टास्तेऽसङ्ख्येयगुणाः

म्युः । यथापि सर्वात्मप्रदेशैरनन्ताः स्पृष्टास्तथैकैकप्रदेशेनाप्यनन्ताः स्पृष्टाः । आत्मा चाऽसङ्ख्यप्रदेशस्ततः सर्वप्रदेशस्पृष्टेभ्यो

देशप्रदेशस्पृष्टा असङ्ख्येयगुणा अनन्ता इत्यर्थः । स्थापना ॥ ९७० ॥ ' अस '

**असरीरा जीवघणा, उवउत्ता दंसणे अ नाणे अ । सागारमणागारं, लक्खणमेअं तु सिद्धाणं ॥९७१॥**

अशरीराः, जीवप्रदेशैर्घना निचिता जीवघनाः, उपयुक्ता दर्शने ज्ञाने च, बन्धानुलोम्याद्दर्शनस्य प्रागुपन्यासः । ततश्च साका-

रमनाकारं ज्ञानदर्शनात्मकं सिद्धानां लक्षणं एवं स्यात् । साकारं च तदनाकारं च विशेषसामान्यदर्शनमित्यर्थः । इह नैवं

मान्यं यन्छद्मस्थवत्सिद्धाः सामान्यबोधकाले विशेषं न बुध्यन्ते विशेषकाले तु सामान्यमिति, किन्तु केवलिनां प्रथमसमये

विशेषबोधो द्वितीयसमये सामान्यबोधः । तत्र यदा विशेषो बोधस्तदापि सामान्यज्ञानं सहैवास्ति, परं तदा विशेषाणां

प्राधान्यं विवक्ष्यते सामान्यबोधसमये तु विशेषाणामप्राधान्यं । एवमुपयोगः छद्मस्थैः सकर्मत्वान्नाऽनुभूयते ॥ ९७१ ॥ 'केव'

**केवलनाणुवउत्ता, जाणंती सव्वभावगुणभावे । पासंति सव्वओ खलु, केवलदिट्ठीहिऽणंताहिं ॥९७२॥**

जानन्ति सर्वेषां भावानां पदार्थानां गुणान् तथा भावान् पर्यायान्, तत्र सहवर्त्तिनो गुणाः ज्ञानादयः क्रमवर्त्तिनः पर्याया

नारकत्वादयः पश्यन्ति सामान्योपयोगेन सर्वतः केवलदृष्टिभिः केवलदर्शनैरनन्ताभिः अनन्तकालत्वात् ॥ ९७२ ॥ ' नाणं '

**नाणंमि दंसणंमि अ इत्तो एगयरयंमि उवउत्ता । सव्वस्स केवलिस्सा, जुगवं दो नत्थी उवओगा ॥९७३॥**

सिद्ध-
लक्षणम् ॥

ज्ञाने दर्शने च एतयोर्मध्ये एकस्मिन्नुपयुक्ताः सिद्धाः स्युः, यतः सर्वस्य केवलिनो युगपद् द्वौ उपयोगौ न स्तः ॥ ९७३ ॥ ' नवि '

**नवि अत्थि माणुसाणं, तं सुक्खं नेव सव्वदेवाणं। जं सिद्धाणं सुक्खं, अव्वाबाहं उवगयाणं ॥ ९७४ ॥**

अव्याबाधं विविधा आबाधा व्याबाधा तस्या अभावोऽव्याबाधं तदुपगतानां प्राप्तानां ॥ ९७४ ॥ ' सुर '

**सुरगणसुहं सम्मत्तं, सव्वद्धापिंडिअं अणंतगुणं। न य पावइ मुत्तिसुहंऽणंताहिवि वग्गवग्गूहिं ॥९७५॥**

सुरगणसुखं समस्तं सम्पूर्णं सर्वाद्धयाऽतीतैष्यद्वर्त्तमानरूपेण कालेन पिण्डितं सर्वकालसमयैर्गुणितमित्यर्थः। पुनरप्यनन्तगुणं कृतं। ततस्तस्य स्वाङ्कगुणनरूपो वर्गः क्रियते। तस्यापि वर्गितस्य भूयो वर्ग एवमनन्तैर्वर्गवर्गैर्वर्गितं तथापि मुक्तिसुखं नैवाप्नोति तत्साम्यं नैति, यथात्र शतं शतगुणं वर्गः दशसहस्रा जाता दशसहस्रगुणाः कृता वर्गवर्गः जाता दशकोट्यः। एवं सिद्धसुखमपि ॥ ९७५ ॥ ' सिद्ध '

**सिद्धस्स सुहो रासी, सव्वद्धापिंडिओ जइ हविज्जा। सोऽणंतवग्गभइओ, सव्वागासे न माइज्जा ॥९७६॥**

सिद्धानां(द्धस्य) सुखराशिः सर्वाद्धापिण्डितः सिद्धसम्बन्धिसाद्यनन्तसर्वकालसमयगुणितो यदि भवेत्। सोऽनन्तवर्गभक्तोऽनन्तवर्गापवर्त्तितः सन् समीभूतः, सिद्धत्वाद्यसमयभाविसुखरूपतां प्राप्त इत्यर्थः। एतावानपि सर्वलोकालोकाकाशप्रदेशेषु न माति, कोऽर्थः—यदत्र लोके सुखमस्ति ततस्तारतम्येनानन्तगुणं सिद्धैकसमयसुखं। ततो लोकसुखसिद्धसुखयोरन्तरा ये सुख-

भेदाः सन्ति, तेऽपि सर्वाकाशप्रदेशेषु न मान्ति शेषस्तु सर्वसमयसुखराशिर्दूरापास्त एवेतिज्ञप्त्यै पिण्डयित्वाऽपवर्त्तितः समीकृतः ॥ १७६ ॥ 'जह'

जह नाम कोइ मिच्छो, नगरगुणे बहुविहे विआणंतो। न चएइ परिकहेउं, उवमाइ तहिं असंतीए ॥१७७॥

सिद्धसुखम् ॥

यथा नामेति कोमलामन्त्रणे कोऽपि म्लेच्छो नगरगुणान् बहुविधान् विजानन् अरण्यगतः सन्नन्यम्लेच्छेभ्यो न शक्नोति परिकथयितुं कुत इत्याह उपमायां तत्रासत्यां। अत्र दृष्टान्तः–यथा कोऽपि राजाऽश्वहृतोऽरण्यगतो म्लेच्छं दृष्ट्वा तं स्वपुरं नीत्वा सर्वगुणिनं चक्रे। स च स्वम्लेच्छमिलनायाऽगातैः पृष्टः कीदृक् पुरं ? कीदृंशि सौधभक्ष्यदुकूलानि ? स नगरगुणानां उपमायां वक्तुं न शक्नोति ॥ १७७ ॥ 'इअ'

इअ सिद्धाणं सुक्खं, अणोवमं नत्थि तस्स ओवम्मं। किंचि विसेसेणित्तो, सारिक्खमिणं सुणह वुच्छं ॥

एवं सिद्धानां सौख्यं अनुपममित्युक्ते नञ्शब्दो देशनिषेधवाच्यपि स्यादिति सर्वनिषेधायाह नास्ति तस्यौपम्यं। 'इत्तो' इतिहेतोर्विशेषेण विशेषतः किञ्चिदिदं सादृश्यं वक्ष्ये श्रुणुत यूयं ॥ १७८ ॥ 'जह'

जह सव्वकामगुणिअं, पुरिसो भोत्तूण भोअणं कोइ। तण्हाछुहाविमुक्को, अच्छिज्ज जहा अमिअतत्तो ॥

यथा कोऽपि पुरुषः, सर्वे कामगुणा वाञ्छितगुणा जाता यत्र तत्सर्वकामगुणितं भोजनं भुक्त्वा तृष्णाक्षुधाविमुक्त आसीत्, यथाऽमृततृप्तो बाधारहितः सुखं तिष्ठति। इह यथा जिह्वेन्द्रियमाश्रित्येष्टविषयाप्त्या स्वस्वभावात्सुखं दर्शितं, तथा

शेपेन्द्रियापेक्षमपि ज्ञेयं । तथाहि कोऽपि नरो भव्याशनपानादीनि भुक्त्वा भव्यनादं सरसगानं श्रुत्वा भव्यरूपपात्राणि नृत्यन्ति दृष्ट्वा भव्यगन्धपुष्पाद्याघ्राय भव्यतुल्यां भव्यस्त्रियं भुक्त्वा सर्वबाधानिवृत्तिजं सुखं क्षणमात्रं वेदयति ॥९७९॥ 'इअ'

**इअ सव्वकालतित्ता, अउलं निव्वाणमुवगया सिद्धा। सासयमव्वाबाहं, चिट्ठंति सुही सुहं पत्ता ॥९८०॥**

एवं सर्वकालं तृप्ता अतुलं निर्वाणं कर्म्मक्षयं उपगताः सिद्धाः शाश्वतं अव्याबाधसुखं परमाह्लादरूपं प्राप्ताः सुखिनस्तिष्ठन्ति ॥ ९८० ॥ ' सिद्ध '

**सिद्धत्ति अ बुद्धत्ति अ, पारगयत्ति अ परंपरगयत्ति। उम्मुक्ककम्मकवया, अजरा अमरा असंगा य**

सिद्धाः कृतकृत्यत्वात् नित्यत्वात् अक्षयत्वेन मङ्गलभूतत्वाच्च, बुद्धा विश्वविश्वावगमात्, पारगता भवाऽब्धितीर्णत्वात्, परम्परागताः सम्यक्त्वज्ञानचरणरूपपरम्परया सिद्धत्वात्। तथा उन्मुक्तकर्म्मकवचाः ॥ ९८१ ॥ ' निच्छि '

**निच्छिन्नसव्वदुक्खा, जाइजरामरणबंधणविमुक्का। अव्वाबाहं सुक्खं, अणुहुंती सासयं सिद्धा ॥९८२॥**

नितरां छिन्नं सर्वं दुःखं यैः, जातिर्जन्म, बन्धनं अष्टप्रकारं कर्म्म, तैर्विमुक्ताः ॥ ९८२ ॥ ' सिद्धा ' इत्यादि ४ गाथाः

**सिद्धाण नमुक्कारो जीवं मोएइ भवसहस्साओ। भावेण कीरमाणो होइ पुण बोहिलाभाए ॥ ९८३ ॥**

**सिद्धाण नमुक्कारो धन्नाण भवक्खयं कुणंताणं। हिअयं अणुम्मुअं तो विसुत्तिआवारओ होइ ॥ ९८४ ॥**

सिद्धाण नमुक्कारो एवं खलु वण्णिओ महत्थुत्ति। जो मरणंमि उवग्गे अभिक्खणं कीरए बहुसो॥ ९८५ ॥
सिद्धाण नमुक्कारो सव्वपावप्पणासणो । मंगलाणं च सव्वेसिं बिइअं हवइ मंगलं ॥ ९८६ ॥
गाथाः स्पष्टाः अर्हन्नमस्कारवत्, ॥ ९८३–९८६ ॥ अथ 'नमो आयरियाणं' आचर्यते सेव्यते विद्यार्थिभिरित्याचार्याः,
आचारे साधुर्वा आचार्यः 'नामं' 'पंच'
नामं ठवणा दविए, भावंमि चउव्विहो उ आयरिओ। दव्वंमि एगभविआई, लोइए सिप्पसत्थाई ॥९८७॥
पंचविहं आयारं, आयरमाणा तहा पभासंता । आयारं दंसंता, आयरिया तेण वुच्चंति ॥ ९८८ ॥
द्रव्ये एकभविकादिः एकभवेन भावी आचार्य एकभविक इति । आदिशब्दाद्बद्धायुष्कोऽभिमुखनामगोत्रश्चेति यथोपोद्-
घाते तथा लौकिको द्रव्याचार्यः शिल्पशास्त्रादिभाणकः, भावाचार्यः स्वयं पञ्चविधं ज्ञानदर्शनचारित्रतपोवीर्यभेदात् आचारं
आचरन्तः प्रभाषमाणाः प्ररूपयन्तस्तथाऽपरेभ्यः क्रियाद्वारेणाचारं दर्शयन्तः स्युर्येन तेनाचार्या उच्यन्ते ॥ ९८७–९८८ ॥
आचार्यशब्दनिरुक्तिमाह 'आया'
आयारो नाणाई, तस्सायरणा पभासणाओ वा। जे ते भावायरिया, भावायारोवउत्ता य ॥ ९८९ ॥
आचारस्याचरणात् प्रभाषणाद्वा ये मुनिभिराचर्यन्ते सेव्यन्ते ते भावाचार्याः । आचाराचरणं कदाप्यनुपयोगेऽपि स्यादि-
त्याह–भावाचारो मोक्षार्थक्रिया तत्रोपयुक्ताः ॥ ९८९ ॥ 'आय' इत्यादि चतस्रो गाथाः

आचार्य-नमस्कारः॥

आयरियनमोक्कारो जीवं मोएइ भवसहस्साओ। भावेणं कीरमाणो होई पुण बोहिलाभाए ॥९९०॥
आयरियनमोक्कारो धन्नाणं भवक्खयं कुणंताणं। हिअयं अणुम्मुअंतो विसुत्तिआवारओ होई ॥९९१॥
आयरियनमोक्कारो एवं खलु वन्निओ महत्थोत्ति। जो मरणम्मि उवग्गे अभिक्खणं कीरइ बहुसो॥
आयरियनमोक्कारो सव्वपावप्पणासणो। मंगलाणं च सव्वेसिं तइयं हवइ मंगलं ॥ ९९३ ॥

यथा मृति काले 'नमोऽर्हद्भ्यः' स्मर्यते तथा शेषपरमेष्ठिनोऽपि। तेन 'नम आचार्येभ्य' इत्याद्यपि महार्थं, ये केऽप्यप्रमत्ता आचार्यादयः सन्ति तेषामपि नतिरर्हद्वन्मुक्तिदैव ॥ ९९०–९९३ ॥ 'नमो उवज्झायाणं' उव समीपे अधीयते शास्त्रं यस्यासौ उपाध्यायः 'नामं'

नामं ठवणा दविए, भावंमि चउविहो उवज्झाओ। दव्वे लोइअ सिप्पाइ, निण्हगा वा इमे भावे ॥९९४॥

द्रव्ये उपाध्यायो द्विधा लौकिको लोकोत्तरश्च। तत्र लौकिकः शिल्पादिः कोऽर्थः ? तत्र ज्ञानानन्यत्वाच्छिल्पादिशास्त्राध्यापको लौकिकोपाध्यायः। लोकोत्तरो निह्नवो मिथ्यादृग्त्वेन केषाञ्चित् पदार्थानां सम्यक् प्ररूपणेऽपि बाह्यत उपाध्यायत्वभावात्। भावे त्विमे वक्ष्यमाणाः ॥ ९९४ ॥ 'बार'

बारसंगो जिणक्खाओ, सज्झाओ देसिओ बुहेहिं। तं उवइसंति जम्हा, उवज्झाया तेण वुच्चंति ॥९९५॥

द्वादशाङ्गो जिनैराख्यातोऽर्थेन, स्वाध्यायो देशितः कथितो बुधैर्गणधरैः सूत्रेण, तं स्वाध्यायं वाचनारूपेणोपदिशन्ति यस्मात्तेनोच्यन्ते उपाध्यायाः। आचार्योपाध्याययोरयं विशेषोऽर्थद आचार्यः सूत्रद उपाध्यायः ॥ ९९५ ॥ 'उत्ति'

उत्ति उवओगकरणे, ज्झत्ति अ झाणस्स होइ निद्देसे। एएण हुंति उज्झा, एसो अन्नोऽवि पज्जाओ॥९९६॥

'उ' इत्यक्षर उपयोगकरणे वर्त्तते। 'ज्झा' इति ध्यानस्य निर्देशे। एतेन उज्झा भवति, उपयोगपूर्वकं ध्यानकर्त्तेत्यर्थः। एषोऽन्योऽप्युपाध्यायस्य पर्यायशब्दः ॥ ९९६ ॥ 'उत्ति'

उत्ति उवओगकरणे, पत्ति अ पावपरिवज्जणे होइ। झत्ति अ झाणस्स कए, उत्ति अ ओसक्कणा कम्मे॥

'पा' इति पापस्य परिवर्जने। 'झा', 'इति ध्यानस्य कृते करणे 'उ' इत्यवष्वष्कणा उत्सारणा कर्म्मणीत्यर्थः। अत्र 'उपाज्झाउ' इतिशब्दः, ततः उपयोगपूर्वकं पापवर्जनाद् ध्यानारोहण(णेन) कर्म्मापनयन्तीत्युपाध्यायाः, परं पावर्णः प्राकृतस्य बहुलत्वादन्यथा 'उवज्झाउ' इति ॥ ९९६ ॥ 'उव' इत्यादि चतस्रो गाथाः

उवज्झायनमोक्कारो, जीवं मोएइ भवसहस्साओ। भावेण कीरमाणो, होइ पुण बोहिलाभाए ॥९९८॥

उवज्झायनमोक्कारो, धण्णाण भवक्खयं कुणंताणं। हिअयं अणुम्मुअंतो, विसुत्तिआवारओ होइ ॥९९९॥

उवज्झायनमोक्कारो, एवं खलु वन्निओ महत्थोत्ति। जो मरणम्मि उवग्गे, अभिक्खणं कीरइ बहुसो ॥

उपाध्याय-नमस्कारः॥

**उवज्झायनमोक्कारो, सव्वपावप्पणासणो । मंगलाणं च सव्वेसिं, चउत्थं हवइ मंगलं ॥१००१॥**

गाथाः स्पष्टाः । 'नमो लोए सव्वसाहूणं' इष्टार्थं साधयतीति साधुः । अत्र लोके इति सर्व इति च शब्दौ अन्त्यपरमेष्ठिकथितावपि दीपन्यायेन सिंहावलोकितन्यायेन वा सर्वपरमेष्ठिष्वपि ज्ञेयौ, यथा सर्वक्षेत्रार्हदाद्या वन्द्यन्ते । सर्वशब्दो नामाद्यर्हतां भूतभवद्भविष्यार्हतां च तीर्थातीर्थसिद्धादिसिद्धानां गणधराद्याचार्याणां सर्वसूत्रोपाध्यायानां सर्वगणसाधूनां सर्वकल्पसाधूनां च नम इत्यर्थः । आचार्यादिषु सर्वशब्दो विशेषतो दृष्टिरागगर्वव्योच्छित्त्यै ॥ ९९८–१००१ ॥ 'नामं'

**नामं ठवणासाहू, दव्वसाहू अ भावसाहू अ । दव्वंमि लोइआई, भावंमि अ संजओ साहू ॥ १००२ ॥**

द्रव्ये साधुर्लौकिकादिस्त्रिधा लौकिकः, लोकोत्तरः, कुप्रावचनिकश्च । तत्राद्यो यः शिष्टलोकाचारः घटादिसाधको वा, द्वितीयो निह्नवः, तृतीयस्तापसादिः । भावे संयतः सर्वविरतः साधुः ॥ १००२ ॥ एतदेव स्पष्टयति 'घट'

**घडपडरहमाईणि उ, साहंता हुंति दव्वसाहुत्ति । अहवावि दव्वभूआ, ते हुंती दव्वसाहुत्ति ॥ १००३ ॥**

घटपटरथादीनि साधयन्तो द्रव्यसाधवः स्युः । अथवा द्रव्यभूता जिनाज्ञाबहिर्भावत्वाद् द्रव्यमात्ररूपा एव पार्श्वस्थाद्या न तु भाववन्तः ततो द्रव्यसाधवः स्युः ॥ १००३ ॥ भावसाधूनाह 'निव्वा'

**निव्वाणसाहए जोए, जम्हा साहंति साहुणो । समा य सव्वभूएसु, तम्हा ते भावसाहुणो ॥१००४॥**

निर्वाणसाधकान् योगान् व्यापारान् यस्मात्साधयन्ति तेन साधवः, सर्वभूतेषु समभावाश्च सर्वभूतेषु सर्वात्मसु ।१००४।'किं पि'

किं पिच्छसि साहूणं, तवं व निअमं व संजमगुणं वा। तो वंदसि साहूणं? एअं मे पुच्छिओ साह ॥

किं प्रेक्षसे साधूनां त्वं तपो नियमं० ? ततो वन्दसे साधून् ? षष्ठी द्वितीयार्थे। एतन्मया पृष्टः 'साह'त्ति वद ॥१००५॥ गुरुः 'विस'

विसयसुहनिअत्ताणं, विसुद्धचारित्तनिअमजुत्ताणं। तच्चगुणसाहयाणं, सदाय किच्चुज्जयाण नमो ॥

विषयसुखेभ्यो निवृत्तेभ्यः, तथ्यगुणसाधकेभ्यः, मोक्षयायिनां प्रति साहाय्यकृत्यं तत्रोद्यतेभ्यो नमः। यत्र तु 'साहणकिचे'ति पाठस्तत्र साधनं मोक्षस्य साधनं मोक्षकृत्यं, प्राकृते च चतुर्थीस्थाने षष्ठी ॥ १००६ ॥ 'अस'

असहाइ सहायत्तं, करंति मे संजमं करिंतस्स। एएण कारणेणं, नमामिऽहं सव्वसाहूणं ॥ १००७ ॥

परमार्थं प्रति असहाये सति मम संयमं कुर्वतः सहायत्वं कुर्वन्ति ॥ १००७ ॥ 'साहू' इत्यादि नतस्रो गाथाः।

साहूण नमोक्कारो जीवं मोएइ भवसहस्साओ। भावेणं कीरमाणो होइ पुण बोहिलाभाए ॥१००८॥

साहूण नमोक्कारो धन्नाण भवक्खयं कुणंताणं। हिअयं अणुम्मुअंतो विसुत्तिआवारओ होइ ॥१००९॥

साहूण नमोक्कारो एवं खलु वन्निओ महत्थोत्ति। जो मरणम्मि उवग्गे अभिक्खणं कीरई बहुसो ॥१०१०॥

साहूण नमोक्कारो सव्वपावप्पणासणो। मंगलाणं च सव्वेसिं पंचमं हवइ मंगलं ॥ १०११ ॥

॥

सर्वसाधु-नमस्कारः॥

अथ पञ्चनमस्कारस्तुतिरूपां सूत्रचूलिकां अष्टोच्छ्वासकायोत्सर्गनमस्कारस्मर्यत्वेनावश्यकरूपां निर्युक्तिकृदेवाह 'एसो'

**एसो पंच नमोक्कारो सव्वपावप्पणासणो। मंगलाणं च सव्वेसिं पढमं हवइ मंगलं।** स्पष्टार्था ॥१०१२॥

उक्तं वस्तुद्वारं ६। अथाक्षेपः, शिष्य आह 'नवि'

**नवि संखेवो न वित्थारो, संखेवो दुविहु सिद्धसाहूणं। वित्थारओऽणेगविहो, पंचविहो न जुज्जई तम्हा ॥**

अत्र नमस्कारे न संक्षेपः न च विस्तारः, यदि संक्षेपः तदा सिद्धेभ्यः साधुभ्यश्च नमः इति द्विविधो नमस्कारः स्यात्। विस्तरत ऋषभाद्यर्हत्तीर्थसिद्धादिभेदैरनेकविधः स्यात्तस्मात् पञ्चविधोऽयं न युज्यते, द्वा० ७ ॥ १०१३ ॥ प्रसिद्धि-द्वा० ८ 'अर'

**अरहंताई निअमा, साहू साहू अ तेसु भइअव्वा। तम्हा पंचविहो खलु, हेउनिमित्तं हवइ सिद्धो ॥**

अर्हदादयोऽर्हत्सिद्धाचार्योपाध्याया नियमात्साधवः, साधुगुणानां तेषु भावात्, साधवस्तु तेष्वर्हदादिषु भाज्याः। यथा न सर्वेऽपि साधवोऽर्हन्तः, किन्तु केऽपि केवलिनोऽन्ये सूत्रार्थधरा आचार्याः परे सूत्रविद उपाध्यायाः केचिच्छिक्षका एव, यथा चक्रिनृपसामन्तादयः सर्वेऽपि नरा उच्यन्ते न तु नराश्चक्रिण एवेत्यादि, तस्मात् पञ्चविधो नमस्कारो भणितः। तथा हेतु-निमित्तं पञ्चविधो नमस्कारः सिद्धः स्थापितः। तत्र पञ्चानामपि नमस्कारार्हत्वे हेतुः 'मग्गे अविप्पणासो' इत्यादि प्रागुक्त एव। 'न हु तम्मि देसकाले सक्को बारसविहो सुयक्खंधो। सव्वो अणुचिंतेउं धणियंपि समत्थचित्तेहिं। १। सुत्तं पि बारसंगं

ण एत्थ मरणम्मि कीरइ जम्हा। पंचविहनमोक्कारो तम्हा सो वारसंगत्थो। २।' ॥ १०१४॥ प्रसिद्धिद्वा० ८। अथ क्रमद्वा० ९

शिष्य आह 'पुवा'

**पुव्वाणुपुव्वि न कमो, नेव य पच्छाणुपुव्वि एस भवे। सिद्धाईआ पढमा, बीआए साहुणो आई ॥१०१५॥**

क्रमो द्विधा, पूर्वानुपूर्वीपश्चानुपूर्वीभेदात्, अनानुपूर्वी तु क्रमो न असमंजसत्वात्। तत्रैष नमस्कारक्रमः पूर्वानुपूर्वी न स्यात्। न चैव पश्चानुपूर्वी भवेत्। प्रथमा पूर्वानुपूर्वी सिद्धादिका स्यात्, अर्हद्भिरपि सिद्धानां नतत्वात्। द्वितीयायां पश्चानुपूर्व्यां साधव आदौ स्युः, सर्वपाश्चात्यत्वात्तेषां ॥ १०१५ ॥ अत्रोत्तरं 'अर'

**अरहंतुवएसेणं, सिद्धा नज्जंति तेण अरिहाई। न य कोइवि परिसाए, पणमित्ता पणमई रण्णो ॥१०१६॥**

अर्हतामुपदेशेन सिद्धा ज्ञायन्ते। सिद्धेभ्योऽपि पूर्वं अर्हन्तो नम्याः आज्ञाप्रवर्त्तकत्वात् नृपवत्, तीर्थागमादि वाऽर्हज्ज्ञातं सिद्धागम्याऽर्हन्तोऽप्यर्हत्त्वे ज्ञेयाः, शेषाः सिद्धाः। अर्हतां च यत्सिद्धे नतिः सा वाङ्मात्रेणैव स्यात्, परं सर्वेऽपि सिद्धा अर्हदुपदेशेन सिद्धाः, तेनार्हदादिः पूर्वानुपूर्वीक्रमः। नन्वर्हतामप्याचार्याद्युपदेशेन संवेदनादाचार्यादिक्रमो युज्यते, उच्यतेऽर्हत्सिद्धयोरयं क्रमविचारः श्रेयान् तुल्यपदत्वात्, आचार्यादयस्त्वर्हदाज्ञापरा एवेति पर्षत्कल्पाः। न च कश्चित् पर्षदं नत्वा राजानं नमति। यथार्हद्भिरर्हत्त्वं प्राप्ति तत्र स्वतीर्थमेव हेतुः, समायां गुर्वादिसामग्र्यामपि कस्यैवार्हत्त्वलाभात् ॥१०१६॥ गतं क्रमद्वा० ९ 'इत्थ'

**इत्थ य पओअणमिणं, कम्मखओ मंगलागमो चेव। इहलोअपारलोइअ, दुविह फलं तत्थ दिट्ठंता॥**

आक्षेपस्य परिहारः॥

अत्र नमस्कारे प्रयोजनमिदं कर्म्मक्षयो मङ्गलागमश्च। एतच्च करणकालभावि फलं तु कालान्तरभावि ॥ प्रयोजनद्वा० १०। अथ फलं द्विधा ऐहलौकिकं पारलौकिकं च। तत्र दृष्टान्ता वक्ष्यन्ते ॥ १०१७ ॥ 'इह'

**इहलोइ अत्थकामा, आरुग्गं अभिरई अ निप्फत्ती। सिद्धी अ सग्ग सुकुलप्पच्चायाई अ परलोए ॥**

इहलोके अर्थकामौ तथा आरोग्यं, एभ्योऽर्थादिभ्य आभिमुख्येन रतिः स्वास्थ्यं अभिरतिः, तस्या निष्पत्तिः स्यात्। परलोके सिद्धिर्मुक्तिः, स्वर्गः सुकुले प्रत्यायातिर्जन्म च स्यात् ॥१०१८॥ अर्थ १ काम २ आरोग्य ३ स्वर्गे ४ पु दृष्टान्ताः 'इह'

**इहलोगंमि तिदंडी सादिव्वं माउलिंगवणमेव। परलोइ चंडपिंगल हुंडिअजक्खो अ दिट्ठंता ॥१०१९॥**

इह लोके त्रिदण्डी १ तथा 'सादिवं, दिव्यं २ तथा मातुलिंगवनं ३ परलोके चण्डपिङ्गलो ४ हुंडिकयक्षश्च ५ दृष्टान्ताः स्युः। कथासूचकगाथेयं। तत्र कस्यापि श्राद्धसुतस्य नमस्कारं सरतस्त्रिदण्डी हन्तुमुद्यतः शबखड्गाहतोऽग्नौ पतितः स्वर्णपुरुषोऽभूत्ततो बालस्यार्थाप्तिर्जाता १। तथा बालाया नमस्कारं स्मृत्वा घटे करं क्षिपन्त्या मिथ्यादृग्भर्तृक्षिप्तोऽहिः पुष्पमालाऽभूत्, दिव्यं देवकृताश्चर्यं प्रादुर्भूतं। तस्याश्च गृहस्वामित्वेन कामाप्तिः २। मातुलिङ्गवने मातुलिङ्गग्राहकं जनं घ्नन् यक्षः केनापि श्राद्धेन नमस्कारपूर्वं बीजपूरादाने हिंसातो निवृत्तः। ततो जने आरोग्याभिरतिनिष्पत्तिर्जाता ३। सिद्धेर्मूलं सुकुले प्रत्यायातिरवतारस्तत्र दृष्टान्तः—वसन्तपुरे चण्डपिङ्गलचौरो राज्ञीहारस्तैन्यात् शूलीक्षिप्तो वेश्यादत्तनमस्कारान्मृत्वा नृपसुतोऽभूज्जातिं स्मृत्वा राज्यं भुक्त्वा प्राव्राजीत् ४। अथ स्वर्गदृष्टान्तः—मथुरायां हुण्डिकचौरः शूलीक्षिप्तोऽम्भोर्थं जिनदत्तश्राद्धदत्तं

नमस्कारं स्मरन् यक्षोऽभूज्जलपाविश्राद्धं हन्यमानं पुरोपरि गिरिविकुर्वणेनामोचयत् ॥ १०१९ ॥ इति नमस्कारनिर्युक्तिः

अथ सूत्रस्पर्शनिर्युक्तिः ' नंदि '

**नंदिअणुओगदारं, विहिवदुवग्घाइयं च नाऊणं । काऊण पंचमंगल, आरंभो होइ सुत्तस्स ॥१०२०॥**

नन्दिं पञ्चज्ञानादि, अनुयोगद्वारं उपक्रमादिः । तथा ' उद्देसे ' विधिवत् शास्त्ररीत्या उपोद्घातितं उपोद्घातं शास्त्रो-
त्पत्तिज्ञानम्यां प्रापितं न ग्रन्थं ज्ञात्वा पञ्चमङ्गलं पञ्चनमस्कारं कृत्वा सूत्रस्यारम्भो भवेत् । इह तु सामायिकसूत्रारम्भः
सोऽपि नन्द्यादि ज्ञात्वा भणित्वा वा कार्यो नान्यथाऽतो नन्द्यादि नमस्कारान्तं भणितं ॥ १०२० ॥ ' अहवा ' अथवा इति
प्रकारान्तरार्थे ' कय '

**कयपंचनमुक्कारो, करेइ सामाइयंति सोऽभिहिओ । सामाइअंगमेव य, जं सो सेसं तओ वुच्छं ॥१०२१॥**

कृतपञ्चनमस्कारः शिष्यः सामायिकं करोतीत्यागमः, सोऽभिहितः, यदसौ नमस्कारः सामायिकाङ्गमेव, सामायिककाले
क्रियमाणत्वात्, ततस्तस्मात् शेषं सूत्रं वक्ष्ये ॥१०२१॥ सूत्रं–' करेमि भंते ! सामाइयं सव्वं सावज्जमि 'त्यादि

करेमि भंते ! सामाइयं, सव्वं सावज्जं जोगं पच्चक्खामि जावज्जीवाए तिविहं तिविहेणं, मणेणं वायाए
काएणं न करेमि न कारवेमि करंतंपि अन्नं न समणुजाणामि, तस्स भन्ते ! पडिक्कमामि निंदामि गरि-
हामि अप्पाणं वोसिरामि ।

इदं सूत्रं सूत्रानुगमे एवावसरप्राप्तेऽस्खलितादिगुणोपेतमुच्चार्यं । अस्य व्याख्या, व्याख्याया लक्षणं चेदं "संहिता च १ पदं चैव २ पदार्थः ३ पदविग्रहः ४ । चालना ५ प्रत्यवस्थानं ६ व्याख्या तंत्रस्य षड्विधा ॥ १ ॥" अस्खलितपदोच्चारणं संहिता यथा—करेमि भंते ! सामाइयं इत्यादि वोसिरामि १ । पदं नामिकादि पञ्चधा, यद्वा स्याद्यन्तं त्याद्यन्तमिति द्विधा, यथा—करोमि भयांत ! सामायिकमित्यादि । तत्र करोमि आख्यातिकं १ भयांत नामिकं । सामायिकादीन्यप्येवं नामिकादिपदेषु स्वयं ज्ञेयानि २ । पदार्थः कारक १ समास २ तद्धित ३ निरुक्तिविषयश्चतुर्द्धा, क्रमात् पचतीति पाचकः १, राज्ञो नरो राजनरः, २, दक्षस्यापत्यं दाक्षिः ३, भ्रमति रौति च भ्रमरः ४ इति, एवं अत्र करोमीति पदस्यार्थः कारकविषयः, भयांतः समासविषयः । समस्य रत्नत्रयस्यायः समायः । समाय एव सामायिकं इति समासतद्धितयोर्विषयः । सावद्यं समासविषयः । युज्यते जीवः कर्म्मणाऽनेनेति योगः तं कारकविषयः, प्रत्याख्यामीत्यपि, याति कालाद्यतिक्रमं इति यावत् अव्ययं, कारकविषयः, जीवनं जीवा इत्यपि तया यावज्जीवया, तिस्रो विधाः प्रकाराः अस्येति त्रिविधं त्रिविधेन समासविषयः, मन्यते जानात्यनेन छद्मस्थ इति मनः तेन मनसा, उच्यतेऽनयेति वाक् तया, चीयते आहारेणेति कायस्तेन, न करोमि न कारयामि कुर्वन्तमप्यन्यं नानुजानामि । तस्य भयांत प्रतिक्रमामि निन्दामि गर्हामि । अतति भवान्तरमित्यात्मा तं व्युत्सृजामि । मन आदिषु कारकविषयः पदार्थो ज्ञेयः । अथ संक्षेपेणार्थः हे भदन्त ! हे भगवन् ! हे भयान्त ! संसारभयान्तकर गुरो ! अहं सामायिकं, समभावं करोमि अभ्युपगच्छामि आत्मानं सामायिकपरिणामपरिणतं करोमि । कथं इत्याह—सर्वं निःशेषं, सह अवद्येन वर्त्तते इति सावद्यः, तं सावद्यं योगं व्यापारं प्रत्याख्यामि प्रतिषेधं आदरेण वच्मि । कयेत्याह यावज्जीवनं यावज्जीवा तया यावज्जीवया

प्रत्याख्यामीति सम्बन्धः। सामान्येनोक्त्वा त्रिविधं सावद्यं योगं कृतकारितानुमतिभेदं त्रिविधेन करणेन मनोवाक्कायरूपेण प्रत्याख्यामीति सम्बन्धः। सामान्येनोक्त्वा त्रिविधं सावद्यं योगं कृतकारितानुमतिभेदं त्रिविधेन करणेन मनोवाक्कायरूपेण ...

Actually:

त्रिविधं सावद्यं योगं कृतकारितानुमतिभेदं त्रिविधेन करणेन मनोवाक्कायरूपेण प्रत्याख्यामीति सम्बन्धः। सामान्येनोक्त्वा त्रिविधेनाह—मनसा वाचा कायेन न करोमि, न कारयामि, कुर्वन्तमप्यन्यं न समनुजानामि नानुमन्ये। तथा यथा वर्त्तमानकाले कुर्वन्तं नानुमन्ये तथाऽतीतेऽनागते कालेऽपीत्यर्थः, इह त्रिविधं त्रिविधेनेत्यत्रादौ योगग्रहणं ततः करणग्रहणं कृत्वाग्रे 'मणेणं' इत्यादिनादौ करणानि ततो न करोमीत्यादिनाऽनुयोगा इति विपर्ययोक्तिर्योगस्य करणायत्तताज्ञप्त्यै। तस्याधिकृतसावद्ययोगस्य प्रतिक्रामामि निवर्त्ते, निन्दामि आत्मसाक्षिकं, गर्हामि गुरुसाक्षिकं, किं निन्दामीत्याह—आत्मानं पूर्वकृतसावद्ययोगं व्युत्सृजामि, विशेषेण उत्प्राबल्येन त्यजामीत्यर्थः। सामायिकग्रहणकाले सारम्भसावद्यात्मपूर्वपर्यायत्यागाद्रत्नत्रयप्राप्त्यात्मनः पर्यायेणोत्पादात् पर्यायस्य पर्यायिणः स्यादभिन्नत्वादहमात्मनाऽन्य उत्पन्नः 'आया खलु सामाइयं पच्चक्खायं तओ हवइ आया' इति प्रागुक्तेः, एवं पदार्थः ३ पदविग्रहश्च उक्तौ ४। अत्रान्तरे सूत्रस्पर्शिकनिर्युक्तिरुच्यते। तदाह निर्युक्तिकारः 'अक्ख'

अक्खलिअसंहिआई, वक्खाणचउक्कए दरिसिअंमि। सुत्तप्फासिअनिज्जुत्ति, वित्थरत्थो इमो होइ ॥

अस्खलितादौ सूत्रे उक्ते आदिशब्दादमिलितादीनाक्षरादौ, तथा संहितादौ व्याख्याचतुष्के दर्शिते सूत्रस्पर्शिकनिर्युक्तिविभागर्थोऽयं स्यादिति तमेव दर्शयति ॥ १०२२ ॥ 'कर'

करणे भए अ अंते, सामाईअ सव्वए अवज्जे अ। जोगे पच्चक्खाणे, जावज्जीवाइ तिविहेणं[10] ॥१०२३॥

करणं भयं च, अन्तः, सामायिकं, सर्वं अवद्यं च, योगः, प्रत्याख्यानं, यावज्जीवया, त्रिविधेनेति पदानि। पदार्थं तु

भाष्यगाथाभिर्वक्ष्यति ॥ १०२३ ॥ करणनिक्षेपमाह ' नामं '

**नामं[1] ठवणा[2] दविए[3], खित्ते[4] काले तहेव भावे अ। एसो खलु करणस्स उ, निक्खेवो छव्विहो होइ ॥१५२॥**

नामकरणं, स्थापनाकरणं इत्यादि ॥ १५२ ॥ द्रव्यकरणादि व्याख्याति ' जाय '

**जायगभविअइरित्तं, सन्ना नोसन्नओ भवे करणं। सन्ना कडकरणाई, नोसन्ना वीससपओगे ॥१५३॥**

ज्ञशरीरभव्यशरीरातिरिक्तं द्रव्यकरणं द्विधा, संज्ञातः नोसंज्ञातश्च। तत्र संज्ञाकरणं कटकरणादि, कटकरणं कटनिर्वर्त्तनहेतुलोहमयं उपकरणं, आदितो घटनिर्वर्त्तनहेतुचक्रादि, क्रियतेऽनेनेत्यन्वर्थात् करणसंज्ञया लोकरूढत्वात् संज्ञाकरणं। ननु नामकरणमेवेदमिति चेन्न, तत्र नाम्नैव करणत्वं, अत्र तु गुणादिति भेदः, करणसंज्ञया च लोकेन रूढं। नोसंज्ञाकरणं द्विधा, विश्रसातः प्रयोगतश्च ॥ १५३ ॥ तत्र ' वीस '

**वीससकरणमणाई, धम्माईण परपच्चया जो(यज्जो)गा। साई चक्खुप्फासिअमब्भाइमचक्खुमणुमाई ॥**

विश्रसा स्वभावस्ततः करणं कृतिर्विश्रसाकरणं, तद् द्विधा अनादि सादि च। तत्रानादि धर्म्माधर्माकाशास्तिकायानां, अनादिकालादपि मिथो मिश्रीभावात्, धातूनामनेकार्थत्वादत्र मिथो मिलित्वाऽवस्थानं करणं ज्ञेयं। 'णणु करणमणाइयं च विरुद्धं भण्णए न दोसोयं। अण्णोण्णसमाहाणं जमिहं करणं णिव्वत्ती। १ ।, ननु करणं निष्पत्तिरुच्यते ततः करणं अनादि च इति विरुद्धं, अनादि चेत्करणं कथं ? करणं चेदनादि कथं ? आचार्यः—भण्यते न दोषोऽयं। इह करणशब्देन न निर्वृत्ति-

द्रव्यकरणे द्विधा प्रयोगकरणम् ॥

निष्पादिता ज्ञेया, किन्तु द्रव्याणामन्योन्यसमाधानं मिश्रीभावकरणं ज्ञेयं । तथा तेषामेव विश्रसाकरणं परप्रत्ययात् 'साई' ति सादि स्यात् । कथं इत्याह—योगात् घटादिभिः संयोगात्, कोऽर्थः धर्म्मादीनामेष स्वभावो यत्ते सर्ववस्तुषु संयुज्यंते, तस्मा- तेषां परं अन्यं घटादिकं प्रत्ययं आश्रित्य संयोगादिकरणं सादि ज्ञेयं । एवममूर्त्तद्रव्याण्याश्रित्योक्तं । मूर्त्तान्याश्रित्य पुनस्त- त्करणं सादि स्यात् । 'साई' तिशब्दोऽत्रापि सम्बन्ध्यते । तद् द्विधा चक्षुःस्पर्शं अचक्षुःस्पर्शं च । तत्र चक्षुःस्पर्शं चक्षुर्ग्राह्यं ग्राह्यादि, अचक्षुःस्पर्शं अचाक्षुषं अण्वादि, आदितो द्व्यणुकादि । करणं चेह तत्तद्भावेन परिणमनं ॥१५४॥ एतदेव स्पष्टयति 'संघा'

**संघायभेअतदुभयकरणं इंदाउहाइ पच्चक्खं । दुअअणुमाईयाणं छउमत्थाईणऽपच्चक्खं ॥ १५५ ॥**

संघातः संघटनं, भेदो विघटनं, तदुभयं स्पष्टं, तैः क्रियते इति करणं, इन्द्रायुधादि—इन्द्रचापादि, प्रत्यक्षं चाक्षुष- मित्यर्थः । द्व्यणुकादीनामादितस्तद्विभानंताणुकानां करणं छद्मस्थादीनां छद्मस्थभेदानां अप्रत्यक्षं अचाक्षुषं । आदिशब्दोऽत्र भेदार्थः ॥ १५५ ॥ उक्तं विश्रसाकरणं । अथ प्रयोगकरणं ' जीव '

**जीवमजीवे पाओगिअं च, चरमं कुसुंभरागाई । जीवप्पओगकरणं मूले, तह उत्तरगुणे अ ॥१५६॥**

जीवप्रयोगो जीवव्यापारः, तेन यत् सजीवमजीवं वा तैस्तैः पर्यायैर्निर्माप्यते तत्प्रायोगिककरणं द्विधा, जीवे जीवविषयं, अजीवेऽजीवविषयं, जीवप्रायोगिकं अजीवप्रायोगिकं चेत्यर्थः । तत्र चरममजीवप्रायोगिकं कुसुम्भरागादि, तच्चाल्पवाच्यत्वा- द्वाचा वृत्तं । जीवप्रयोगकरणं द्विधा-'मूले ' इति मूलगुणकरणं मूलप्रयोगकरणापरनाम । मूलं आदिरित्येकार्थौ । उत्तरगुणे

चेति उत्तरगुणकरणं उत्तरप्रयोगकरणापरनाम ॥ १५६ ॥ द्वयमपि स्पष्टयति ' जं जं '

**जं जं निज्जीवाणं, कीरइ जीवप्पओगओ तं तं । वन्नाइ रूवकम्माइ, वावि अज्जीवकरणं तु ॥ १५७ ॥**

यद्यन्निर्जीवानां पदार्थानां जीवप्रयोगतो जीवप्रयोगेण तत्तद्वर्णादि कुसुम्भादेः रूपकर्म्मादि वा कुट्टिमादौ तदजीवविषयत्वादजीवकरणं ॥ १५७ ॥ ' जीव '

**जीवप्पओगकरणं, दुविहं मूलप्पओगकरणं च । उत्तरपओगकरणं, पंच सरीराइं पढमंमि ॥ १५८ ॥**

जीवप्रयोगकरणं द्विविधं, मूलप्रयोगकरणं उत्तरप्रयोगकरणं च । पञ्च शरीराणि प्रथमं मूलप्रयोगकरणं इति ॥ १५८ ॥ यथा–' ओरा '

**ओरालियाइआइं, ओहेणिअरं पओगओ जमिह । निप्फण्णा निप्फज्जइ, आइल्लाणं च तं तिण्हं ॥१५९॥**

औदारिकादीन्यादिशब्दाद् वैक्रियाहारकतैजसकार्म्मणदेहाः, ओघेनेति सामान्येन मूलप्रयोगकरणं । अथ इतरदुत्तरप्रयोगकरणं तदुच्यते, यत्प्रयोगतः प्रयोगेणेह लोके निष्पन्नात् मूलगुणप्रयोगेण जातात् निष्पद्यते, तदाद्यानां च त्रयाणां स्यात् । अयमर्थः–पञ्चानां देहानामाद्यं पुद्गलसंघातकरणं मूलप्रयोगकरणमुच्यते, अङ्गोपाङ्गादिकरणं कर्णादिकरणं तूत्तरकरणं आद्यदेहत्रये एव, तैजसकार्मणयोस्तदभावात् । अत्र क्षेपकगाथा ' मूलप्पओगकरणं, पंचण्हवि तं भवे सरीराणं। तिण्हं पुण आइल्लाण अंगोवंगाणि करणं तु । १ ।' त्रयाणां पुनराद्यानां शरीराणां अङ्गोपाङ्गानि कर्णादीनि उत्तरप्रयोगकरणं स्यात् । यत्र कर-

प्रयोगकरणे द्विधा जीवप्रयोगकरणम् ॥

करणे ज्ञेये ॥ १५९ ॥ औदारिकादीनां अष्टाङ्गानि मूलकरणं, तानि नानि पञ्चत्वाङ्गानि उपात्तानि, अङ्गोपाङ्गानि च नामानि 'सीस'

सीसं सुरो अरं पिट्ठी दो बाहू ऊरुआ य अट्ठंगा । अंगुलिमाइ उवंगा, अंगोवंगाणि सेसाणि ॥१६०॥

शीर्षं, उरः, उदरं, पृष्ठिः, द्वौ बाहू, द्वे उरू, अष्टाङ्गानि । अङ्गुल्यादीनि उपाङ्गानि, शेषाणि कर्णनाशागुह्यदन्तकेशनखकरादीनि अङ्गोपाङ्गान्युच्यन्ते तान्युत्तरकरणं, किं च ॥ १६० ॥ 'केसा'

केसाईउवरयणं, उरालविउवि उत्तरं करणं । ओरालिए विसेसो, कन्नाइविणट्ठसंठवणं ॥ १६१ ॥

केशादीनां आदिशब्दान्नखदन्तानां उपरचनं संस्कारो निर्मापणं च क्रमेणौदारिकवैक्रियगोरुत्तरकरणं स्यात् । तथौदारिके विशेष उत्तरकरणे कर्णादीनां विनष्टानां संस्थापनं योजनं, नेदं वैक्रियादौ विनाशाभावात् । विनाशे च संस्थापनायोगात् ॥ १६१ ॥ इदमुत्तरकरणमाहारके नास्ति, केशाद्यभावेऽपि रम्यत्वात्, कार्याभावाच्च, गमागमादि तु स्यात् । अन्यथा त्रिविधं करणं संघातकरणं शाटकरणं, सङ्घातशाटकरणं च । इहोत्पत्तावाद्यसमये पुद्गलाऽऽदानं सङ्घातः, अन्त्यसमये पुद्गलमोक्षः शाटः, मध्यसमयेषु तु पुद्गलाऽऽदानमोक्षरूपमुभयं स्यात् । तत्राद्ये देहत्रये त्रिविधमप्यस्ति द्वयोस्तु चरमसमये त्वयात 'आइ'

आइल्लाणं तिण्हं, संघाओ साडणं तदुभयं च । तेआकम्मे संघाय–साडणं साडणं वावि ॥ १६२ ॥

आद्यानां त्रयाणां देहानां । तैजसकार्म्मणयोः संघाटशाटः १ शाटनं वा २ न तु संघातोऽनादित्वात् ॥१६२॥ अथौदारिकमाश्रित्य संघातादिकालमानं वक्ति 'संघा'

**संघायमेगसमयं, तहेव परिसाडणं उरालंमि । संघायणपरिसाडण, खुड्डागभवं तिसमऊणं ॥१६३॥**

संघातमिति सर्वसंघातकरणमेकसमयं भवत्येकान्ताऽऽदानस्यैकसामायिकत्वात्, यथाऽपूप आद्यसमये स्नेहस्याऽऽदानमेव कुर्यान्न तु त्यागं । द्वितीयादिषु त्वादानत्यागौ तादृशसामर्थ्यवत्त्वात्, पुद्गलानां च संघातभेदधर्म्मत्वात् । एवं जीवोऽप्युत्पद्यमान आद्यसमये औदारिकादिद्रव्याणामादानमेव कुर्यान्न तु त्यागं । द्वितीयादिषु तु ग्रहणमोक्षौ । अतः संघातमेकसमयमित्युक्तं । तथैव परिशाटनाकरणमेकसमयं स्यात्, औदारिकदेहे संघातपरिशाटनकरणं तु त्रिसमयोनक्षुल्लकभवः स्यात्, यतोऽत्र जघन्यकालः प्ररूपयितुमिष्टस्तेन विग्रहोत्पन्न इह गृह्यते । ततश्च द्वौ विग्रहसमयौ एक संघातसमय इति त्रिसमयोनं क्षुल्लकभवं । उक्तं च 'दो विग्गहंमि समया, तइओ संघायणाए तेहूणं । खुड्डागभवग्गहणं सव्वजहन्नो ठिईकालो । १ ।' 'तेहूणं' त्रेऊनं । इह सर्वजघन्यायुः क्षुल्लकभव एव ॥ १६३ ॥ 'एयं'

**एयं जहन्नमुक्कोसयं, तु पलिअत्तिअं तु समऊणं । विरहो अंतरकालो, ओराले तस्सिमो होइ ॥१६४॥**

इदं जघन्यं उभयकरणकालमानं । उत्कृष्टं तु संघातशाटकरणकालमानं औदारिके पल्यत्रिकं समयोनं, इहोत्कृष्टकालस्य वाच्यत्वादयमविग्रहेणैव, इहभवदेहशाटं कृत्वा परभवायुपस्त्रिपल्यमानकालस्याद्यसमये संघातं कुर्याद्, द्वितीयादिषु संघातशाटं,

तत उत्कृष्टः संघातशाटकालः संघातसमयोनः स्यात्, उक्तं च 'उक्कोसो समऊणो, जो सो संघायणा समयहीणो' यत उत्कृष्ट उभयकरणकालः स संघातनासमयहीनः । शिष्यः 'किह न दुसमयविहीणो साडणसमयेऽवणीयंमि ।१।' संघातनसमयवत् शाटनसमयेऽपनीते प्रागुक्तः कालो द्विसमयहीनः कथं न स्यात्? गुरुः 'भन्नइ भवचरमंमिवि समए संघायसाडणा नेव । परभवपढमे साडणमओ तदूणो न कालोत्ति ।२।' भण्यते त्रिपल्यमानभवस्य चरमेऽपि समये संघातशाटना नैवेति संघातशाटरूपमुभयमेव स्यात्, यत्केवलत्रिपल्यायुर्भवदेहायुःपुद्गलत्यागरूपं शाटनं तत्परभवप्रथमसमये ज्ञेयमतो न तदूनः संघातशाटस्य काल इति । शिष्यः 'जइ परपढमे साडो, निव्विग्गहओ य तम्मि संघाओ । ननु सव्वसाडसंघायणाओ समये विरुद्धाओ ।३।' यदि 'परे'ति त्रिपल्यभवादग्रेतनभवस्य प्रथमे समये शाटः स्वीक्रियते, तर्हि यदा कश्चिज्जीवो निर्विग्रहतो विग्रहमकृत्वा ऋजुश्रेण्यैवोत्पद्यते तदा न तस्मिन्नेव समये नवदेहपुद्गलानां संघातः स्यात्, ततो ननु निश्चितं सर्वे च ते शाटसंघातने च सर्वशाटसंघातने 'समये' इत्येकसमये विरुद्धे सर्वशाटस्य प्रागभवदेहसम्बन्धित्वात्, सर्वसंघातस्य च भवान्तरगतदेहविषयत्वात्तयोर्देहयोश्च युगपत्सत्त्वस्य विरुद्धत्वादिति । गुरुः 'जम्हा वि गच्छमाणं विगयं उप्पज्जमाणमुप्पन्नं । तो परभवादिसमये मोक्खादाणाणमविरोहो ।४।' यस्मात्प्राग्भवशरीरं च गच्छद् विगतमेव, उत्पद्यमानं त्वग्रेतनभवशरीरं उत्पन्नमेव क्रियाकालनिष्ठाकालयोरभेदात्, यदि च प्रारम्भसमयादारभ्य क्रियानिष्पन्नतां नावहेत्तदा कथमन्त्यसमये निष्पन्नेति । ततः परभवादिसमये मोक्षदानयोः सर्वशाटसंघातयोर्न विरोधः, मुच्यमानस्य मुक्तत्वेनैकस्यैवाग्रेतनदेहस्य सद्भावात् । अपि च मरणसमयः परभवाद्यसमयत्वेन स्वीकार्य एवान्यथा दोषसम्भव इत्याह–' चुइसमये नेहभवो इहदेहविमो-

औदारिके संघातादिकालमानम् ॥

रकओ जहातीतें। जइ न परभवोवि तहिं, तो सो को होउ संसारी । ५ ।' च्युतसमये तावदिहभवो न स्यात् इहदेहविमोक्षात्, यथाऽतीते भवे इहभवो नास्ति अत्रत्यदेहाभावात्। एवं च सति तस्मिंश्च्युतिसमये परभवोऽपि त्वया न स्वीक्रियते, ततः संसारी को भवतु ? कस्मिन् भवे भवत्वित्यर्थः। शिष्यः—'नणु जइ विग्गहकाले देहाभावेवि परभवग्गहणं। तह देहाभावंमिवि, हुज्जेहभवोवि को दोसो ?। ६।' ननु यथा विग्रहगतौ देहाभावेऽपि परभवग्रहणं परभवायत्ततोक्तेत्यर्थः, तथेहत्यदेहाभावेऽपि च्युतिसमये इहभवोऽपि भवेत्को दोषः ? गुरुः—एवं वदता त्वया साहाय्यमेवास्माकं कृतं, यतः 'जं चिय विग्गहकाले देहाभावेऽपि तो परभवो सो। चुइसमए वि न देहो न विग्गहो जइ स को होउ ?। ७।' यत एव विग्रहकाले देहाभावेऽपि परभवदेहाप्राप्तावपि ततश्च्युत्यनन्तरं परभवोऽसौ तवापि मतस्तत एव च्युतिसमयेऽपीहभवसम्बन्धी परभवसम्बन्धी वा नास्ति देहोऽतो देहाभावस्य तुल्यत्वाद्विग्रहकालवच्च्युतिसमयेऽपि कुतः परभवत्वं नाद्रियते ? 'न विग्गहो जइ'त्ति यदि चैवं ब्रूयाः—असौ च्युतिसमयो न विग्रहः, परभवता च विग्रहे एव मम मता, तत्रोच्यते 'स को होउ' त्ति च्युतिसमये स आत्मा कः संसारी भवत्विहभवदेहस्य त्यक्तत्वात् परभवस्य च त्वया अनादृतत्वात्, स निर्व्यपदेश्य एव स्यादिति। तेन विग्रहकालवत् सर्वशाटसमयः परभवाद्यसमयो ज्ञेयः। एता भाष्यगाथाः। एवमौदारिके जघन्येतरभेदः संघातशाटकाल उक्तः, सर्वसंघातशाटयोस्त्वेक एव समयः। एवं 'एयं जहन्नमुक्कोसयं तु पलिअत्तियं तु समऊणं' इति गाथार्द्धं व्याख्यातं। अथ संघातादिविरहो निर्युक्तिगाथोत्तरार्द्धेनोच्यते 'विरहो अंतरकालो ओराले तस्सिमो होइ' विरहो अन्तरकाल उच्यते स औदारिके तस्य संघातादेरयं स्यात् ॥ १६४ ॥ यथा 'तिस'

औदारिके संघातादि-काल-मानम् ॥

तिसमयहीणं खुड्डं, होइ भवं सव्वबंधसाडाणं। उक्कोस पुव्वकोडी, समय उअही अ तित्तीसं ॥१६५॥

त्रिसमयहीनं क्षुल्लभवग्रहणं, तथाऽनुक्तमपि पूर्णं क्षुल्लभवग्रहणं यथाक्रमं सर्वबन्धशाटयोरन्तरं स्यात्, कोऽर्थः ? सर्वसंघातात्सर्वसंघातस्य, जघन्यमन्तरं त्रिसमयहीनः क्षुल्लभवः, सर्वशाटात् पुनः सर्वशाटस्य पूर्णक्षुल्लभव इति। उत्कृष्टमन्तरं पूर्वकोटिसमयः त्रयस्त्रिंशदुदधयः सागराश्च सर्वबन्धस्य, शाटस्य त्विदमेव समयोनं, विशेषोऽग्रे वक्ष्यते। भाष्यं- 'संघायंतरसमओ जहन्नओ खुड्डयं तिसमऊणं। दो विग्गहंमि समया तइओ संघायणासमओ। १।' तेहूणं खुड्डभवं धरिउं, परभवमविग्गहेणेव। गंतूण पढमसमए, संघायओ स विन्नेओ। २।' संघातान्तरसमयः एकदा संघातं कृत्वा पुनः शरीरान्तरसंघातं कुर्वतोऽन्तरकालो जघन्यस्त्रिसमयोनः क्षुल्लभवः स्यात्, तत्र द्वौ विग्रहे समयौ तृतीयः संघातनासमयस्तैरूनं क्षुल्लभवं भूत्वा क्षुल्लभवायुः पालयित्वा परभवमविग्रहेणैव गत्वा परभवप्रथमसमये प्राच्यदेहशाटसमय एवेत्यर्थः, संघाततः नादेहसंघातं कुर्वतः स जघन्यः संघातविरहो ज्ञेयः, इह जघन्यकालस्य विवक्षितत्वान्न विग्रहेणोत्पत्तिरुक्ता। त्रसनाडिमध्ये च त्रिसामयिक्येवोत्कृष्टा विग्रहगतिरस्ति ततः सैव दर्शिता। सर्वशाटात्पुनः सर्वशाटे जघन्यान्तरं पूर्णः क्षुल्लभव उक्तः, स प्राच्यदेहशाटं कृत्वाऽऽगामिभवे क्षुल्लभवं सम्पूर्य पुनः शाटं कुर्वतः। 'उक्कोसो तित्तीसं, समयाहियपुव्वकोडिसहियाइं। सो सागरोवमाइं, अविग्गहेणेव संघायं। ३।' काऊण पुव्वकोडिं, धरिउं सुरजिट्ठमाउयं तत्तो। भोत्तूण इहं तइए, समये संघायणंतस्स। ४।' उत्कृष्टः स औदारिकसंघातविरहः ३३ सागराः समयाधिकपूर्वकोटिसहिताः। कथमित्याह—अविग्रहेणैव शाटसमये एवौदारिकसंघातं कृत्वा पूर्वकोटिं आयुर्धृत्वाऽनुत्तरविमाने ज्येष्ठं सुरायुः ३३

औदारिके संघातादि-काल-मानम् ॥

सागरान् भुक्त्वा च्युत्वा समयद्वयं विग्रहे कृत्वा तृतीयसमये औदारिकाङ्गार्थं संघातयतः स्यात् । तत्र विग्रहसमयद्वयादेकः समयः संघातसमयोनपूर्वकोट्यां क्षिप्यते ततो यथोक्तमन्तरं स्यात् । शाटान्तरव्याख्याभाष्यं 'खुड्डागभवग्गहणं, जहन्नमुक्कोसयं तु तेत्तीसं । तं सागरोवमाइं, संपुण्णा पुव्वकोडी य । ५ ।' औदारिकशाटं कृत्वा पुनस्तस्यैव शाटं कुर्वतो जघन्यं अन्तरं क्षुल्लभवः, यथा-प्राच्यदेहशाटं कृत्वाऽऽगामिभवे क्षुल्लकभवग्रहणं सम्पूर्य तद्देहशाटं कुर्यादिति । तथोत्कृष्टं तु तच्छाटान्तरं ३३ सागराः सम्पूर्णा पूर्वकोटिश्च, यथौदारिकशाटं कृत्वाऽनुत्तरेषूत्पद्य ३३ सागराणि भुक्त्वा पुनर्नरेषूत्पद्य पूर्वकोटिं भुक्त्वौदारिकशाटं कुर्यादिति, इत्थं भाष्याशयेन श्री हरिभद्राचार्येण व्याख्यातं । अथ स एव गुर्वाम्नायेन व्याख्याति । 'तिसमयहीणं खुड्डं' गाहा-सर्वबन्धस्य सर्वशाटस्य च यथाक्रमं जघन्यान्तरं क्षुल्लभवः स्यात् । त्रिसमयहीनमिति त्रिभिः समयैरर्थात्समयेन च हीनं स्यात् । तत्र त्रिसमयहीनः क्षुल्लभवः सर्वसंघातस्य जघन्यान्तरं । समयहीनं सर्वशाटस्येत्यर्थः । तथा संघातस्योत्कृष्टान्तरं पूर्वकोटीसमयः उदधयश्च ३३, सर्वशाटस्योत्कृष्टान्तरं पूर्वकोटी तथा 'समयउअही अ'त्ति समयेन हीनाः ३३ उदधयः समयोधदयः मध्यपदलोपी समासः । इह यः सर्वशाटकालः स परभवसम्बन्धी । ततो यस्य यावन्मानमायुस्तत् शाटसमयेन हीयते । अत एकसमयहीनं सर्वशाट्योर्जघन्यमुत्कृष्टं वान्तरं स्यादेवं च व्याख्या युक्ता ॥ १६५ ॥ 'अंत'

**अंतरमेगं समयं, जहन्नमोरालगहणसाडस्स । सतिसमया उक्कोसं, तित्तीसं सागरा हुंति ॥ १६६ ॥**

औदारिकसम्बन्धिः ग्रहणशाटोभयरूपस्य जघन्यं अन्तरं एकसमयः, उत्कर्षे तु सत्रिसमयाः ३३ सागराः । भाष्यं-'उभयंतरं जहन्नं, समओ निव्विग्गहेण संघाए । परमं सतिसमयाइं, तेत्तीसं उदहिनामाइं । १ ।' अणुभविउं देवाइसु

वैक्रिये संघातादि-काल-मानम् ॥

निगोदमिहागयस्स तइयंमि । समए संघायणओ, नेयाइं समयकुसलेहिं । २ ।' उभयस्यैकदा भूत्वा पुनर्भवे जघन्यं अन्तरं एकसमयो निर्विग्रहेण संघाते स्यात्, कोऽर्थः—यदौदारिकदेही चरमसमये संघातशाटं कृत्वा मृत्वा विग्रहं विनैवोत्पद्यौदारिकसंघातं कृत्वा पुनरपि तदुभयमारभते तदेकसमय इति । तथा परम उत्कृष्टं अन्तरं सत्रिसमयानि ३३ सागराणि, तानि च मनुजस्याविग्रहेण देवादिष्वित्यनुत्तरसुरेषु सप्तमभूनारकेषु च ३३ सागराण्यनुभूय विग्रहगत्या इहागतस्य तृतीयसमये संघातयत औदारिकसंघातं कुर्वतः ॥ १६६ ॥ उक्ता औदारिकमाश्रित्य संघातादिवाच्यता । अथ वैक्रियमाश्रित्योच्यते 'वेउ'

वेउव्विअसंघाओ, जहन्नु समओ उ दुसमउक्कोसो । साडो पुण समयं चिअ, विउव्वणाए विणिदिट्ठो ॥

वैक्रियशरीरसंघातो जघन्यः समयः स्यात् । तुरेवार्थः । भाष्यं—'वेउव्वियसंघातो, समओ सो पुण विउव्वणादीए । ओरालियाणमहवा, देवाईणादिगहणंमि । १ ।' वैक्रियसंघातः समय इत्येकसमयमानः स्यात्, स पुनः औदारिकानां औदारिकदेहानां वैक्रियलब्धिमतां विकुर्वणादौ विकुर्वणाया आदिसमये स्यात्, अथवा देवादीनां देवनारकाणां आदिग्रहणे प्रथमे संघातसमये इति । 'उक्कोसो समयदुगं, जो समयविउव्विओ मओ विइए । समये सुरेसु वच्चइ, निव्विग्गहओ य तं तस्स । २ ।' उत्कृष्टो वैक्रियः समुद्घातः समयद्विकं स्यात् ? कथं इह य औदारिकदेही समयविकुर्विक इति लब्ध्या वैक्रियमारभमाणः समयमेकं वैक्रियसंघातं कृत्वा द्वितीयसमये मृतो निर्विग्रहतो विग्रहगतिं विना सुरेषु व्रजति । ततः वैक्रियसंघातसमयद्वयं तस्य स्यात्, यतस्तत्रोत्पद्य पुनर्वैक्रियसंघातं कुर्यात् । अथ निर्युक्तिगाथोत्तरार्द्धे 'साडो पुणे'त्यादि, शाटः पुनर्वैक्रियस्य उत्कृष्टश्च समयं चैव वैक्रियविकुर्वणायां निर्दिष्टोऽर्हदाद्यैः ॥ १६७ ॥ 'संघा'

**संघायणपरिसाडो, जहन्नओ एगसमइओ होइ । उक्कोसं तित्तीसं, सायरणामाइं समऊणा ॥१६८॥**

वैक्रियसंघातनपरिशाटो जघन्यत एकसामयिकः, उत्कृष्टं ३३ सागरनामानि समयोनानि । भाष्यं–'उभयं जहन्नसमओ, सो पुण दुसमयविउव्वियमयस्स । परमयराइं संघायसमयहीणाइं तित्तीसं । १ ।' उभयं संघातशाटौ जघन्यं समयं स्यात् । स पुनर्द्विसमयविकुर्वकस्य मृतस्य, कोऽर्थः–औदारिकदेहिनो लब्ध्या वैक्रियं कृत्वाऽऽद्यसमये वैक्रियदेहसंघातं द्वितीये तु संघातशाटं कृत्वा मृतस्येति, परं उत्कृष्टं उभयं ३३ सागराः संघातसमयहीनाः स्युः ॥ १६८ ॥ 'सव'

**सव्वग्गहोभयाणं, साडस्स य अंतरं विउव्विस्स । समओ अंतमुहुत्तं, उक्कोसं रुक्खकालीअं ॥१६९॥**

वैक्रियस्य सर्वग्रहोभययोः शाटस्य च जघन्यं अन्तरं विरहकालो यथाक्रमं समयोऽन्तर्मुहूर्त्तं वा, कोऽर्थः–संघातस्य उभयस्य च समयः, शाटस्य चान्तर्मुहूर्त्तं । उत्कृष्टमेषां अन्तरं वृक्षकालेनानन्तेन निर्वृत्तं वृक्षकालिकं अनन्तोत्सर्प्पिण्यवसर्प्पिणीमानं । भाष्यं–'संघायंतर समओ दुसमयविउव्वियमयस्स तइयम्मि । सो दिवि संघाययओ, तइए व मयस्स तइयम्मि । १ ।' संघातान्तरं समयः–वैक्रियसर्वसंघातं कृत्वा पुनस्तत्करणेऽन्तरकालः समयः स्यात्, स च समयं विकुर्व्य वैक्रियसंघातं कृत्वा द्वितीयसमये मृतस्य विग्रहगत्या तृतीयसमये दिवि स्वर्गे संघातयतो वैक्रियसंघातं कुर्वतः स्यात्, तृतीये वा मृतस्य तृतीये संघातयतः, कोऽर्थः–औदारिकदेहिनो लब्ध्याऽऽद्यसमये वैक्रियसंघातं द्वितीये संघातशाटं कृत्वा तृतीये मृत्वाऽविग्रहेणैव सुरेषु गत्वा वैक्रियसंघातयतः एकः समयोऽन्तरं । 'उभयस्स चिरविउव्वियमयस्स देवेसऽविग्गहगयस्स । साडस्संतोमुहुत्तं तिण्ह–

ि नरुकालमुक्कोसं । २ ।' उभयस्यान्तरं एकः समयः, कथं ? चिरं विकुर्व्येति नृतिर्यक्षु वैक्रियं कुर्वन्नाद्यसमयद्वयं स्थित्वा तृतीयादिसमयेषु मृतस्य देवेष्वविग्रहे गतस्य विग्रहं विना गतस्याऽऽदिसमये संघातं कृत्वा द्वितीये संघातशाटं कुर्व्वतः । शाटस्य तु जघन्यान्तरमन्तर्मुहूर्त्तं, यदौदारिकदेही वैक्रियं कृत्वाऽन्ते सर्वशाटं विधायान्तर्मुहूर्तं स्थित्वा कार्ये जाते पुनर्वैक्रियं कृत्वाऽन्तर्मुहूर्तं स्थित्वा सर्वशाटं कुर्याच्चदा वैक्रियशाटद्वयस्यान्तरं अन्तर्मुहूर्त्तद्वयं स्यात्तच्च बृहत्तरमेवान्तर्मुहूर्त्तं विवक्ष्यते, यतोऽष्टसमयेभ्योऽनु समयोनमुहूर्तं यावत्सर्वोऽपि कालोऽन्तर्मुहूर्त्तमेवोच्यते । तथा त्रयाणां वैक्रियस्य सर्वसंघातोभयसर्वशाटानां उत्कृष्टं न्तरं तरुकालं भवति अनन्तकालमित्यर्थः, यथा—कोऽपि वैक्रियसंघातादित्रयं कृत्वा वनस्पतिष्वनन्तकालमतिवाह्य देवादिषु वैक्रियसंघातादित्रयं कुर्यात् ॥ १६९ ॥ 'आहा'

आहारे संघाओ, परिसाडो अ समयं समं होइ । उभयं जहन्नमुक्कोसयं, च अंतोमुहुत्तं तु ॥ १७० ॥

आहारकाङ्गे संघातः शाटश्च समकं स्यादिति समं तुल्यं ज्ञेयम् । उभयं जघन्यं उत्कृष्टं चान्तर्मुहूर्त्तं, अन्तर्मुहूर्त्तस्थायित्वात्तस्य, उत्कृष्टान्तर्मुहूर्त्ताज्जघन्यं लघुतरं ज्ञेयम् ॥ १७० ॥ 'बंध'

बंधणसाडुभयाणं, जहन्नमंतोमुहुत्तमंतरणं । उक्कोसेण अवड्ढं, पुग्गलपरिअट्टदेसूणं ॥ १७१ ॥

बन्धनं संघातस्तथा शाटः, उभयं, एषां त्रयाणां जघन्यं अन्तरं विरहोऽन्तर्मुहूर्त्तं सकृत्त्यागादन्तर्मुहूर्त्तेनैव तदारम्भात्, उत्कर्षतोऽर्द्धपुद्गलपरावर्त्तो देशोनोऽन्तरं, एतच्च यः श्रुतकेवल्याहारकदेहं कृत्वा प्रमादाद् वनस्पत्यादिषु यथोक्तं कालं स्थित्वा

आहारके संघातादि-काल-मानम् ॥

पुनरपि श्रुतकेवली भूत्वाऽऽहारकदेहं कुर्यात्तस्य ज्ञेयं ॥ १७१ ॥ 'तेआ'

**तेआकम्माणं पुण, संताणाऽणाइओ न संघाओ। भव्वाण हुज्ज साडो, सेलेसीचरमसमयंमि ॥१७२॥**

तैजसकार्मणयोः पुनर्न सर्वसंघातः, सन्तानाऽनादितः अनादिसन्तानत्वादित्यर्थः। भव्यानां केषाञ्चित् शाटः स्यात् शैलेशीकरणचरमसमये, स एक सामयिक एव ॥ १७२ ॥ 'उभ'

**उभयं अणाइ निहणं, संतं भव्वाण हुज्ज केसिंचि। अंतरमणाइभावा, अच्चंतविओगओ नेसिं ॥१७३॥**

उभयं प्रवाहापेक्षयाऽनादिनिधनं अनाद्यन्तं परं केषाञ्चिद् भव्यानां सान्तं सपर्यन्तं भवेन्न तु सर्वेषां, तथाऽन्तरमनादिभावान्मोक्षगमनकालेऽत्यन्तवियोगतश्च नानयोः ॥ १७३ ॥ अथान्यथा जीवप्रयोगकृतं चतुर्द्धा करणमाह 'अहवा'

**अहवा संघाओ साडणं च, उभयं तहोभयनिसेहो। पडे संखे सगडे थूणा, जीवपओगे जहासंखं ॥१७४॥**

अथवा संघातः, शाटनं, उभयं, तथोभयनिषेधः करणानि। अत्र यथासङ्ख्यं क्रमेण पटः, शङ्खः, शकटं, स्थूणा, जीवप्रयोग इति जीवव्यापाराश्रित्य दृष्टान्ता ज्ञेयाः। तत्र पटे तन्तुसंघातात्मकत्वात् संघातकरणं, शङ्खे वलयादिकृतौ शाटकरणं, शकटे तक्षणकीलिकादियोगादुभयकरणं, स्थूणायां पुनरूर्ध्वतिर्यक्करणयोगे संघातशाटविरहादुभयनिषेधकरणं। इदं च 'जं जं निज्जीवाणं' इत्याद्युक्तत्वादजीवकरणमेव, तथापि जीवप्रयोगात्करणमिति व्युत्पत्त्या जीवप्रयोगकरणमपि ॥ १७४ ॥ उक्तं द्रव्यकरणमथ क्षेत्रकरणादीन्याह 'खित्त'

खित्तस्स नत्थि करणं, आगासं जं अकित्तिमो भावो। वंजणपरिआवन्नं, तहावि पुण उच्छुकरणाई॥

क्षेत्रस्य करणं क्रियमाणता नास्ति, यस्मात् क्षेत्रं आकाशं, तच्चाकृत्रिमो भावः पदार्थः, तथापि पुनर्व्यञ्जनैः पुद्गलैः पर्यायाकारादिविशेषं आपन्नं प्राप्तं तस्य करणं स्याद्यथा मण्डपाद्यपनीय आकाशं कृतमिति । उपचाराद्वा क्षेत्रस्य करणं, यथा-इक्षुक्षेत्रस्य करणं इक्षुकरणं, तदादि तत्प्रभृतिकं ॥ १०२४ ॥ उक्तं क्षेत्रकरणं ' काले '

कालेवि नत्थि करणं, तहावि पुण वंजणप्पमाणेणं। ववबालवाइकरणेहिं, णेगहा होइ ववहारो ॥१०२५॥

कालेऽपि करणं नास्ति कालस्य वर्त्तनादिरूपत्वात्, वर्त्तनादीनां च स्वयमेव भावात्, तथापि पुनर्व्यञ्जनप्रमाणेन वर्त्तनाद्यभिव्यञ्जकद्रव्याणां घटपटादीनां प्रमाणेन बलेन कालकरणं स्यात् । यथा-अयं घटो द्विवर्षसम्बन्धी, यतो वर्त्तनादयो द्रव्येभ्यः कथञ्चिदभिन्नास्ततस्तत्करणे वर्त्तनादीनामपि करणं स्यात् । तत्र वर्त्तना इति एकद्व्यादिसमयातिक्रमणं कथ्यते । आदिशब्दात्कालजन्या बुद्धिहान्यादयः, द्रव्याणि घटादीनि। समयादिकालापेक्षायामपि व्यवहारनयादस्ति कालकरणं, यतः बवबालवादिभिः करणैर्लोकेऽनेकधा व्यवहारः स्यात् । भाष्यं-' बवं च बालवं चेव कोलवं थीविलोयणं । गराइ वणियं चेव विट्ठी हवइ सत्तमा । १ ।' बवं १ बालवं २ कौलवं ३ स्त्रीविलोचनं तैतिलेरयन्याख्यं ४ गरादि ५ वणिक् ६ वृष्टिः ७ एतानि चलानि वर्त्तन्तेऽन्यानि चत्वारि स्थिराणि, यथा-' सउणी चउप्पय नागं किंसुग्घं च करणं थिरं चउहा । बहुलचउद्दसिरत्तिं सउणी सेसं तिय कमसो । २ ।' कृष्णचतुर्दश्या रात्राविति पाश्चात्यार्द्धे शकुनिरमावास्यायाः पूर्वार्द्धे चतुष्पदं,

तत्थेगो दीवायणो हम्मइ । १ ।' एतदाम्नाया भावान्न व्याख्यातं ॥ १०२९ ॥ ' एवं '

**एवं बद्धमबद्धं, आएसाणं हवंति पंचसया। जह एगा मरुदेवी, अच्चंतं थावरा सिद्धा ॥ १०३० ॥**

एवं प्रागुक्तं श्रुतं बद्धं । अबद्धं त्वादेशानां असम्भाव्यवचनानां पञ्चशतानि, यथा एका मरुदेवाऽत्यन्तं स्थावरादिवनस्पतिकायादुद्धृत्य सिद्धा, एवमन्येऽपि, यथा स्वयम्भूरमणमत्स्यानां पद्मपत्राणां च वलयवर्जसर्वाकारभावः २ । विष्णुक्रपेः साधिकयोजनलक्षं वैक्रियं ३ करटोत्कुरुटसम्बन्धः ४ करटोत्कुरुटकृतकुणालाप्लावनात्रयोदशे वर्षे श्रीवीरस्य ज्ञानोत्पत्तिः, कुणालाविनाशात्तृतीये वर्षे करटोत्कुरुटौ साकेतपुरे मृत्वा सप्तमं नरकं गतौ इत्यादि ॥ १०३० ॥ उक्तं भावकरणं श्रुतकरणं । अथ नोश्रुतकरणं ' नोसु '

**नोसुअकरणं दुविहं, गुणकरणं तह य जुंजणाकरणं। गुणकरणं पुण दुविहं, तवकरणे संजमे अ तहा ॥**

नो निषेधे, नोश्रुतकरणं द्विविधं, गुणानां कृतिर्गुणकरणं, तथा योजनाकरणं । गुणकरणं द्विविधं, तपःकरणं संयमकरणं च ॥ १०३१ ॥ ' जुंज '

**जुंजणकरणं तिविहं, मण[1] वय[2] काए[3] अ मणसि सच्चाई। सट्ठाणि तेसि भेओ, चउ[1] चउहा[2] सत्तहा[3] चेव ॥**

युज्यते कर्म्माणुभिरात्माऽनेनेति योजनाकरणं त्रिविधं, मनसि वचसि काये च । तत्र मनसि सत्यादीनि मनोविषयं सत्यादियोजनाकरणं, यथा सत्यमनोयोजनाकरणं, एवं सत्यमृषाऽसत्यामृपा मृषामनोयोजनाकरणान्यपि । एवं वाग्योगे-

सामायिक-करणम् ॥

एवं वैक्रियं
ऽपि चतुर्धा योजनाकरणं । काययोजनाकरणं तु सप्तधा–औदारिकयोजनाकरणं, औदारिकमिश्रयोजनाकरणं, एवं वैक्रियं वैक्रियमिश्रं, आहारकं आहारकमिश्रं, कार्म्मणकाययोगकरणमिति । तत्रौदारिकयोजनाकरणं तत् यदौदारिकदेहव्यापारेण जीवः कर्म्म चिनोति । औदारिकमिश्रं तद् यदौदारिकदेही लब्ध्या प्रयत्नवशाद्वैक्रियादिदेहं कृत्वा पुनस्तं संहरन्नौदारिके तस्मिं प्रदेशव्यापारं करोतीति । एवं वैक्रियमिश्रादीन्यपि । कार्म्मणकाययोजनाकरणं अन्तरगतौ शरीराऽपर्याप्तिं यावत्सर्व-जीवानां स्यात् । स्वस्थाने प्रत्येकं मनोवाक्कायरूपे तेषां योजनाकरणानां भेद उक्तरीत्या क्रमेण चतुर्द्धा चतुर्द्धा सप्तधा

वेत ॥ १०३२ ॥ 'भाव'

भावसुअसद्दकरणे, अहिगारो इत्थ होइ नायव्वो । नोसुअकरणे गुणजुंजणे, अ जह संभवं होइ ॥

अत्र अधुना भावश्रुते तस्य च शब्दकरणे भावपूर्वं प्रकाशपाठे श्रुतसामायिकस्याधिकारः कर्त्तव्यो भवति । नोश्रुत-करणे नोश्रुतकरणमाश्रित्य गुणकरणे योजनाकरणे च यथासम्भवं भवत्यधिकारः । तत्र गुणकरणे चारित्रसामायिकस्या-वतारस्तपःसंयमगुणात्मकत्वाच्चारित्रस्य, योजनाकरणे तु सत्यासत्यामृषामनोवाग्योजनारूपे चतुर्णां सामायिकानामवतारः । औदारिककाययोजनायां श्रुतचारित्रसामायिकयोरवतारः, क्रमाद् भङ्गिकश्रुतगुणने समितिगुप्तिपालने च सति ॥ १०३३ ॥

अथ सप्तभिरनुयोगद्वारैः सामायिककरणमाह 'कया'

कयाकयं केणकयं, केसु अ दव्वेसु कीरई वाँवि । काहे व कारओ नयओ, करणं कइविहं (च) कहं ॥

३५

पश्चिमार्द्धे नागं, शुक्लप्रतिपद्दिने किंस्तुघ्नं, रात्रौ तु बवं इत्यादि, करणं च तिथेरर्द्धं स्यात् । एषां ज्ञानोपायः—' पक्खतिहिओ दुगुणिय, दुरूवहीणा य सुक्कपक्खंमि । सत्तहिए देवसियं, तं चिय रूवाहियं रत्तिं । ३ ।' पक्षतिथयो द्विगुणिताः कार्याः, ततश्चेच्छुक्लपक्षः स्यात्तदा द्विरूपहीनाः कार्याः । ततः सप्तभिर्हृते दैवसिकं करणं स्यात्तच्चैवं रूपाधिकं रात्रौ स्यात् । तत्र पक्षतिथिर्यथाऽद्य तृतीया ३, सा द्विगुणा जाता ६, सापि शुक्लपक्षे द्विरूपहीना जाता ४, सप्तभिश्चात्र भागो न पूर्यतेऽतो लब्धं तृतीयादिने चतुर्थं तैतिलकरणं, रात्रौ तु रूपाधिकत्वे गरादि । कृष्णपक्षे तु द्विरूपहीनत्वाभावात् पष्ठं वणिक्, रात्रौ च रूपाधिकं विष्टिः ७, उक्तं च ' किण्हनिसि तइयदसमीसत्तमिचउद्दसीए अह विट्ठी । सुक्कचउत्थिक्कारसिनिसि अट्ठमि पुन्निमाए दिवा । ४ ।' सुद्धस्स पडिवइनिसिं पंचमिदिणि अट्ठमीए रत्तिं तु । दिवसस्स बारसी पुण्णिमाए रत्तिं बवं होइ । ५ ।' बहुलस्स चउत्थीए दिवा य तह सत्तमीए रत्तिमि । इक्कारसीय उ दिवा बवकरणं होइ नायवं । ६ ।' कृष्णपक्षे ३–१० निशि ७–१४ अह्नि विष्टिः । शुक्ले ४–११ निशि ८–१५ दिवा विष्टिः । शुद्धस्य शुक्लपक्षस्य १ निशि पञ्चमी ५ दिने ८ रात्रौ १२ दिने १५ रात्रौ बवं स्यात् । बहुलस्य कृष्णक्षस्य ४ दिवा ७ रात्रौ ११ दिवा बवं स्यात् । एवं क्रमेणाग्रतस्तिथ्यर्द्धमानानि बालवादीनि स्युरेतानि च मासमध्ये कृष्णचतुर्दशीं यावत् पुनः पुनरायान्तीति चलान्युच्यन्ते । ततः कृष्णचतुर्दशीपश्चिमार्द्धाद्दारभ्य शकुन्यादीनि ४ करणानि स्युस्तानि मासान्तरेकवारं आयान्तीति स्थिराण्युच्यन्ते ॥ १०२५ ॥ उक्तं कालकरणं । अथ भावकरणं, भावः पर्यायः तस्य च जीवाजीवोपाधिभेदेन वैविध्यात्तत्करणमप्यौघतो द्विधेत्याह ' जीव '

**जीवमजीवे भावे, अजीवकरणं तु तत्थ वन्नाई । जीवकरणं तु दुविहं, सुअकरणं नो अ सुअकरणं ॥**

भावे करणं द्विधा, जीवभावकरणं अजीवभावकरणं च, तत्राल्पवाच्यत्वादजीवभावकरणमादौ व्याख्याति । वर्णादीनि गन्धप्रयोगं विनाऽऽम्रादेर्नानावर्णान्तरगमनं, आदितो गन्धादिग्रहः । नन्विदं द्रव्यविश्रसाकरणमेव प्रागुक्तं, कथमत्र भावकरणं? उच्यते-इह भावाधिकारात्पर्यायप्राधान्यमाश्रित्योक्तं, द्रव्यविश्रसाकरणे तु द्रव्यप्राधान्यमाश्रित्येति शेषः। जीवकरणं तु द्विविधं, जीवभावरूपं श्रुतज्ञानभावकरणं, श्रुतरहितं जीवपर्यायरूपं नोश्रुतभावकरणं च ॥ १०२६ ॥ श्रुतभावकरणमाह 'बद्ध'

बद्धमबद्धं तु सुअं, बद्धं तु दुवालसंग निद्दिट्ठं। तव्विवरीअमबद्धं, निसीहमनिसीह बद्धं तु ॥ १०२७॥

श्रुतं द्विधा बद्धं अबद्धं च । बद्धं तु द्वादशाङ्गे निर्दिष्टं । उपलक्षणादन्यदपि गद्यपद्यात्मकं सर्वं बद्धमिति । तद्विपरीतं शास्त्रे ग्रथितं अबद्धं । बद्धं तु द्विधा, रहसि पाठादुपदेशाच्च छन्नं निशीथं तदन्यदनिशीथं ॥ १०२७ ॥ 'भूआ'

भूआपरिणयविगए, सद्दकरणं तहेव न निसीहं। पच्छन्नं तु निसीहं निसीहनामं जहऽज्झयणं ॥११२८॥

भूतं उत्पन्नं, अपरिणतं परिणामान्तरमगतमित्यर्थः, विगतं नष्टं इत्यादिषु शब्दकरणं उक्तिर्न निशीथं। अयं भावः 'उप्पज्जेइ वा विगमेइ वा धुवेइ वा' इत्याद्यर्थस्य प्रतिपादकं शास्त्रं न निशीथं प्रकाशपाठादुपदेशाच्च, प्रच्छन्नं यद्वा गुप्तार्थं निशीथं उच्यते ॥ १०२८ ॥ 'अग्गे'

अग्गेअणीअंमि जहा, दीवायण जत्थ एग तत्थ सयं। जत्थ सयं तत्थेगो, हम्मइ वा भुंजए वात्ति ॥

[illegible] पूर्वोऽयं पाठोऽस्ति 'जत्थेगो दीवायणो हम्मइ, तत्थ दीवायणसयं हम्मइ । जत्थ दीवायणसयं हम्मइ

द्विधाजीवभावकरणे श्रुतभावकरणम् ॥

तत्थेगो दीवायणो हम्मइ । १ ।' एतदाम्नाया भावान्न व्याख्यातं ॥ १०२९ ॥ ' एवं '

**एवं बद्धमबद्धं, आएसाणं हवंति पंचसया । जह एगा मरुदेवी, अच्चंतं थावरा सिद्धा ॥ १०३० ॥**

एवं प्रागुक्तं श्रुतं बद्धं । अबद्धं त्वादेशानां असम्भाव्यवचनानां पञ्चशतानि, यथा एका मरुदेवाऽत्यन्तं स्थावरादिवनस्पतिकायादुद्धृत्य सिद्धा, एवमन्येऽपि, यथा स्वयम्भूरमणमत्स्यानां पद्मपत्राणां च वलयवर्जसर्वाकारभावः २ । विष्णुऋषेः साधिकयोजनलक्षं वैक्रियं ३ करटोत्कुरुटसम्बन्धः ४ करटोत्कुरुटकृतकुणालाप्लावनात्रयोदशे वर्षे श्रीवीरस्य ज्ञानोत्पत्तिः, कुणालाविनाशात्तृतीये वर्षे करटोत्कुरुटौ साकेतपुरे मृत्वा सप्तमं नरकं गतौ इत्यादि ॥ १०३० ॥ उक्तं भावकरणं श्रुतकरणं । अथ नोश्रुतकरणं ' नोसु '

**नोसुअकरणं दुविहं, गुणकरणं तह य जुंजणाकरणं । गुणकरणं पुण दुविहं, तवकरणे संजमे अ तहा ॥**

नो निषेधे, नोश्रुतकरणं द्विविधं, गुणानां कृतिर्गुणकरणं, तथा योजनाकरणं । गुणकरणं द्विविधं, तपःकरणं संयमकरणं च ॥ १०३१ ॥ ' जुंज '

**जुंजणकरणं तिविहं, मण[1] वयं[2] काए[3] अ मणसि सच्चाई । सट्ठाणि तेसि भेओ, चउ[1] चउहा[2] सत्तहा[3] चेव ॥**

युज्यते कर्म्माणुभिरात्माऽनेनेति योजनाकरणं त्रिविधं, मनसि वचसि काये च । तत्र मनसि सत्यादीनि मनोविषयं सत्यादियोजनाकरणं, यथा सत्यमनोयोजनाकरणं, एवं सत्यमृषाऽसत्यामृषा मृषामनोयोजनाकरणान्यपि । एवं वाग्योगे-

उपि चतुर्द्धा योजनाकरणं । काययोजनाकरणं तु सप्तधा–औदारिकयोजनाकरणं, औदारिकमिश्रयोजनाकरणं, एवं वैक्रियं वैक्रियमिश्रं, आहारकं आहारकमिश्रं, कार्म्मणकाययोगकरणमिति । तत्रौदारिकयोजनाकरणं तत् यदौदारिकदेहव्यापारेण जीवः कर्म्म चिनोति । औदारिकमिश्रं तद् यदौदारिकदेही लब्ध्या प्रयत्नवशाद्वैक्रियादिदेहं कृत्वा पुनस्तं संहरन्नौदारिके तस्मिन् प्रदेशव्यापारं करोतीति । एवं वैक्रियमिश्रादीन्यपि । कार्म्मणकाययोजनाकरणं अन्तरगतौ शरीराऽपर्याप्ति यावत्सर्वत्र । ... स्थाने प्रत्येकं मनोवाक्कायरूपे तेषां योजनाकरणानां भेद उक्तरीत्या क्रमेण चतुर्द्धा चतुर्द्धा सप्तधा ...तानां स्यात् ।

...त्र ॥ १०३२ ॥ 'भाव'

भावसुअसद्दकरणे, अहिगारो इत्थ होइ नायव्वो । नोसुअकरणे गुणजुंजणे, अ जह संभवं होइ ॥

अत्र अधुना भावश्रुते तस्य च शब्दकरणे भावपूर्वं प्रकाशपाठे श्रुतसामायिकस्याधिकारः कर्त्तव्यो भवति । नोश्रुतकरणे नोश्रुतकरणमाश्रित्य गुणकरणे योजनाकरणे च यथासम्भवं भवत्यधिकारः । तत्र गुणकरणे चारित्रसामायिकस्यावतारस्तपःसंयमगुणात्मकत्वाच्चारित्रस्य, योजनाकरणे तु सत्यासत्यामृपामनोवाग्योजनारूपे चतुर्णां सामायिकानामवतारः । औदारिककाययोजनायां श्रुतचारित्रसामायिकयोरवतारः, क्रमाद् भक्तिकश्रुतगुणने समितिगुप्तिपालने च सति ॥ १०३३ ॥

अथ समभिरनुयोगद्वारैः सामायिककरणमाह 'कया'

कयाकयं केणकयं, केसु अ दव्वेसु कीरई वावि । काहे व कारओ नयओ, करणं कइविहं (च) कहं ॥

...

नन्वेतत्सामायिकं अस्याः क्रियायाः प्राक् क्षणे किं कृतं सत्क्रियते उताकृतं ? आद्यपक्षे सद्भावादेव करणानुपपत्तिः, द्वितीये तु वान्ध्येयादेरिव करणायोगः पूर्वमेकान्तेनासत्वादिति शिष्यप्रश्नमाशङ्क्योत्तरमाह–कृताकृतं सामायिकं, कृतं च अकृतं चेति कृताकृतं, अत्र नयमतभेदेन भावना कार्या १, तथा केन कृतं २, केषु द्रव्येषु क्रियते ३, कदा वा कारकोऽस्य ४, नयनः इति केनालोचनादिन्यायेन ५, करणं कतिविधं ६, कथं लभ्यते ? इति द्वाराणि ॥ १०३४ ॥ अत्र भाष्यकृत्क्रमेणाह 'उप्प'

**उप्पन्नाणुप्पन्नं,कयाकयं इत्थ जह नमुक्कारे (दा०१)। केणंति अत्थओ तं, जिणेहिं सुत्तं गणहरेहिं(दा०२)॥**

कृताकृतं उत्पन्नानुत्पन्नं क्रियते द्रव्यपर्यायोभयरूपत्वात्। पर्यायतयोत्पन्नं द्रव्यतयाऽनुत्पन्नमित्यर्थः। अत्र च यथा प्राग्नमस्कारे नयैर्भावना कृता तथा कार्या १। 'केने'ति केन कृतमिति द्वारेऽर्थतोऽर्थमाश्रित्य जिनवरैः, सूत्रं त्वाश्रित्य गणधरैः कृतं, व्यवहारतस्त्वेवं, निश्चयतस्तु तत्स्वामिना कृतमिति। 'नणु निग्गमे गयं चिय केण कयं तंति का पुणो पुच्छा ?। भण्णइ स बज्झकत्ता इहंतरंगो विसेसोऽयं।१।' ननु 'उद्देसे निद्देसे निग्गमे' इत्यत्र सामायिकस्य निर्गमे भण्यमाने श्रीवीरात्तन्निर्गतमित्यादिकथनेन केन कृतं तदित्येतद्गतमेव पुनरपीह का पृच्छा? भण्यते–स तीर्थकरादिः सामायिकस्य बाह्यकर्त्ता तत्रोक्ता, इह त्वयं विशेषो यदन्तरङ्गः कर्त्ता जिज्ञासितः, स च सामायिकानुष्ठाता साध्वादिः द्वा० २ ॥ १७५ ॥ 'तं के'

**तं केसु कीरई तत्थ, नेगमो भणइ इट्ठदव्वेसुं। सेसाण सव्वदव्वेसु, पज्जवेसुं न सव्वेसुं (दा०३) १७६॥**

तत् केषु द्रव्येषु स्थित्वा क्रियते ? तत्र नैगमो भणति-इष्टद्रव्येषु मनोज्ञपरिणामकारणत्वात्, तदुक्तं तैः 'मणुण्णं मोयणं सुगा मणुण्णं सयणासणं । मणुण्णंमि अगारंमि मणुण्णं झायए मुणी । १ ।' शेषाणां सर्वद्रव्येष्विति यत्रेष्टेऽनिष्टे वा द्रव्ये स्थितस्य शुभपरिणामः स्यादिति । 'पज्जवे०' सर्वेषु पर्यायेषु न, सर्वपर्यायेष्ववस्थानाभावात्, तथाहि यो यत्र निषद्यादौ स्थितः न स तत्र तत्सर्वपर्यायेषु, एकभागे एव स्थितत्वात् । 'नणु भणियमुवग्घाए केसुत्ति इहं कुओ पुणो पुच्छा । केसुत्ति तत्थ विसओ इह केसु ठियस्स तल्लाभो । १ ।' ननूपोद्घाते केषु सामायिकं इति प्राग्भणितं, इह कुतः पृच्छा ? अत्रोच्यते-केष्विति तत्र विषय उक्तः यथा 'सव्वगयं सम्मत्तं' इत्यादि, इह तु केषु द्रव्येषु स्थितस्य तल्लाभः स्यादिति पृच्छा । तेन न पौनरुक्त्यं । 'तो कह सव्वद्व्वावत्थाणं ? णणु जाइमेत्तवयणाओ । धम्माइसव्वदव्वाधारो सव्वो जणोऽवस्सं । २ ।' ननु ततः कथं सर्वद्रव्यावस्थानं शेषनया वदन्तीत्युक्तं ? उच्यते-जातिमात्रवचनात् सामान्येन कथनात्, यतोऽवश्यं सर्वोऽपि जनो लोकः, धर्मादीनि द्रव्याण्याधारो यस्य स तादृशः धर्मास्तिकायाधर्मास्तिकायादिषड्द्रव्याधारवानित्यर्थः । 'विसओ वि उवग्घाए केसुत्तीहं स एव हेउत्ति । सद्धेयनेयकिरियानिबंधणं जेण सामइयं । १ ।' अथवोपोद्घाते सर्वद्रव्याणि सामायिकस्य विषये स्युरित्युक्तं, इह तु स एव सामायिकलाभः सर्वद्रव्येषु हेतुभूतेषु स्यादित्युच्यते, येन सामायिकं श्रद्धेयानि ज्ञेयानि चारित्रक्रियाहेतुभूतानि च द्रव्याणि निबन्धनं कारणं यस्य तत्तथा । नाऽपिविषयहेत्वोरेकत्वं, विषयस्य गोचररूपत्वात् जीवरक्षानिमित्तः सर्वजीववत्, हेतोस्तूपष्टम्भकत्वात्, दयायाः कर्म्मक्षयोपशमवत् । 'अहवा कयाकयाइसु कज्जं केण च कयं च कत्ति । केसुत्ति करणभावो, तइयत्थे सत्तमि काउं । १ ।' अथवा कृताकृतादिद्वारेषु प्रथमे द्वारे कर्त्रा यत् क्रियते तत्कार्यं

सामायिककरणे तृतीयं द्वारम् ॥

सामायिकमुक्तं, केन कृतमिति द्वितीये द्वारे सामायिकस्यैव कर्त्ता निर्दिष्टः, केष्विति तृतीयद्वारे तु तृतीयार्थे सप्तमीं कृत्वा करणमुक्तं। कैर्द्रव्यैः करणभूतैः सामायिकं क्रियते इत्युपोद्घातेन सह न पौनरुक्त्यं द्वा० ३ ॥ १७६ ॥ 'काहु'

**काहु ? उद्दिट्ठे नेगम, उवट्ठिए संगहो अ ववहारो। उज्जुसुओ अक्कमंते, सद्दु समत्तंमि उवउत्तो (दा० ४) ॥**

कदा सामायिकस्य कारकः स्यादिति प्रश्ने नैगम उद्दिष्टे मन्यते, कोऽर्थः—शिष्यः क्षमाश्रमणादनु गुरुणा 'उद्दिसामो खमासमणाणं' इत्यादिना सामायिकाध्ययने उद्दिष्टमात्रे शिष्योऽनधीयानोऽपि सामायिकस्य कर्त्ता स्यात्। अत्र पूर्वोक्त (वनगमन) प्रस्थितप्रस्थककर्तृदृष्टान्तो वाच्यः। यस्मादुद्देशोऽपि तस्य हेतुस्तस्मिंश्च कारणे कार्योपचारः। सङ्ग्रहो व्यवहारश्च मन्येते उपस्थितः सन् कारको भवेत्, उद्देशादनु समुद्देशे क्रियमाणे वाचनायै यदा वन्दनं दत्वोपस्थितः स्यात्तदाऽऽसन्नतरकारणत्वात् सामायिकस्यकारकः। ऋजुसूत्रो वक्ति आक्रमन्निति सामायिकं पठितुमारब्धः कारक इति। शब्दादयो वदन्ति—सामायिकपाठे समाप्ते सत्युपयुक्त एव कारकः स्यात्, कोऽर्थः सूत्रमपठन्नपि तदर्थोपयुक्तः सामायिकस्य कारकः स्यात् द्वा० ४ ॥ १७७ ॥

अथ नयतो न्यायत इति द्वारं 'आलो'

**आलोअणा[1] य विणए[2], खित्त[3] दिसाऽभिग्गहे[4] अ काले[5] य। रिक्ख[6] गुणसंपया[7]ऽविअ, अभिवाहारे अ अट्ठमए॥**

आलोचना १ विनयः २ क्षेत्रं ३ दिगभिग्रहं ४ कालः ५ ऋक्षसंपत् ६ गुणसम्पत् ७ अभिव्याहारोऽष्टमो नयः ८ ॥ १७८ ॥ अत्र आलोचनाद्यष्टद्वाराणां गाथान्तर्व्याख्यायमानानां भाष्यगाथा अन्तरा २ वक्ष्यन्ते इति सावधानैर्द्वारं

सामायिककरणे कदे-ति तुर्वं द्वारम् ॥

द्वारं निर्व्यं, गहनेनं माव्यं । भाष्यं 'पव'

**पव्वज्जाए जुग्गं, तावइ आलोअणा गिहत्थेसुं । उवसंपयाइ साहूसु, सुत्ते अत्थे तदुभए अ ॥१७९॥**

प्रव्रज्याया यद्योग्यं प्राणिजातं पुंस्त्रीक्लीबभेदं तदन्वेषणीयं । तावत्यालोचना अवलोकना वा गृहस्थेषु कार्या यथा द्रव्यतो न क्लीबादिः, क्षेत्रतो नानार्यक्षेत्रजः, कालतः शीतोष्णादिना न क्लाम्यति, भावतो नीरोगानलसादिः । एवमालोचनाया गोग्यतानिर्णयादनु सामायिकं दद्यात्र शेषाणां निषिद्धदीक्षाणामिति नयः, एवं गृहस्थेषूक्तं । साधुषु पुनः सामायिकस्य सूत्रार्थे तदुभये चोपसम्पदि आलोचना स्यात् । इह यदा कोऽपि नवदीक्षित एव ग्लानत्वादिहेतुनाऽनधीतसामायिको विस्मृतसामायिको वा स्वगुर्वभावेऽन्यत्र सामायिकसूत्रार्थाद्युपसम्पद्यते तदाऽसावालोचनां दत्ते, अत्र विधिः सामाचार्यामुक्त एव, स न यावन्मात्रं सूत्रं जानाति तावतैव प्रतिक्रमणादि कुर्यादेवमपि स चारित्रपरिणामोपेतत्वाद्यतिरेव ॥ १७९ ॥ गतमालोचनाद्वा० १ । अथ विनीतस्येति 'आलो'

**आलोइए विणीअस्स, दिज्जए तं पसत्थखित्तंमि । अभिगिज्झ दो दिसाओ, चरंतिअं वा जहाकमसो ॥**

आलोचिते सति विनीतस्य गुर्वङ्घ्रिधावनाद्यनुरागवतस्तद्दीयते । भाष्यं–'अणुरत्तो भत्तिगओ, अमुई अणुयत्तओ विसेसन्नू । उज्जुत्तग ऽपरितंतो इच्छियमत्थं लहइ साहू । १ ।' भक्तिगतो भक्तिस्थितः, अमोची ताडितोऽपि गुरुपार्श्वामोचको, अनुवर्त्तको गुरुचित्तानुवर्त्तनाशीलः, विशेषज्ञः प्रस्ताववेत्ता, उद्युक्तः उद्यमपरः, अपरितान्तोऽनिर्विण्णः । गतं विनीतद्वा० २ । अथ क्षेत्रद्वा०

सामायिककरणे नयत इति द्वारम् ॥

३ 'पसत्थखेत्तंमी 'ति प्रशस्ते क्षेत्रे दीक्षा दीयते भाष्यं–' उच्छुवणे सालिवणे पउमसरे कुसुमिए य वणसंडे । गंभीरसाणुणादे पयाहिणजले जिणहरे वा । १ ।' गम्भीरे लतावृक्षाद्याश्रिते, सानुनादे प्रतिशब्दबहुले, प्रदक्षिणावर्त्तजले स्थाने, जिनगृहे वा । 'दिज्ज न उ भग्गझामियसुसाणसुन्नामणुन्नगेहेसु । छारंगारकयारामेज्झाईदव्वदुट्ठे वा । २ ।' भग्ने गृहे, ध्यामिते ज्वलिते स्थाने, श्मशाने, शून्ये गृहे, अमनोज्ञगेहेषु । क्षाराङ्गारकचवरामेध्यादिद्रव्यैर्दुष्टे वा क्षेत्रे न तु देयात्, द्वा० ३ । दिगभिग्रहमाह– 'अभिगिज्झे'त्यादि अभिगृह्य स्वीकृत्य, द्वे दिशौ प्राच्युदीच्यौ, दीक्षा देया, चरन्त्यां चेति यस्यां दिशि युगप्रधानकेवलार्हन्तो विहरन्तः स्युः, यथाक्रमश इति क्रमेण प्रधानास्वेतासु दिक्षु दीक्षेत । भाष्यं–' पुव्वाभिमुहो उत्तरमुहो व दिज्जाऽहव पडिच्छिज्जा । जाए जिणादओ वा दिसाए जिणचेइयाइं वा । १ ।' दीक्षां दद्यादथवा प्रतीच्छेत्स्वीकुर्यात्, यस्यां दिशि जिनादयो वा, आदितः सातिशयर्षयः जिनचैत्यानि वा स्युस्तदभिमुखा दद्यात् ॥ १८० ॥ गतं दिग्द्वा० ४ । अथ कालः ' पडि '

**पडिकुट्ठदिणे वज्जिअ, रिक्खेसु अ मिगसिराइ । भणिएसुं पियधम्माईगुणसंपयासु तं होइ दायव्वं ॥**

प्रतिक्रुष्टं निषिद्धं दिनं वर्जयित्वा शुभे मुहूर्त्ते दीयते । ' चाउद्दसिं पन्नरसिं वज्जिज्जा अट्ठमिं च नवमिं च । छट्ठिं च चउत्थिं बारसिं च दुण्हंपि पक्खाणं । १ ।' द्वयोरपि पक्षयोः । गतं कालद्वा० ६, अथ ऋक्षसम्पत्–ऋक्षेषु मृगशीर्षादिषु शास्त्रभणितेषु । 'मिगसिर अद्दा पुस्सो तिन्निय पुव्वाइ मूलमस्सेसा । हत्थो चित्ता य तहा दस वुड्ढिकराइं नाणस्स । १ ।' तिस्रः पूर्वाः, पूर्वा० फा०, पू० षा०, पू० भा० । तथा ' तिसु उत्तरासु तह रोहिणीइ कुज्जा य सेह निक्खमणं । गणिवायए अणुन्ना महव्वयाणं च आरुहणं । २ ।' तथा ' संझागयं रविगयं विड्डेरं सग्गहं विलंबं च । राहुहयं गहभिन्नं च वज्जए सत्तनक्खत्ते । ३ ।' यत्सन्ध्यायां भं

पूर्वद्वारिकेषु शुभेषु पूर्वदिशा गन्तव्ये अपरया यातो विड्वरं, उदेति तन्मन्ध्यागतं अर्कभाचतुर्दशं पंचदशं वा, रवेर्भं रविगतं, संझागयं क्रूरग्रहाश्रितं सग्रहं। रविणा भुक्त्वा मुक्तं विलंबि, यत्र मे ग्रहणं जातं तद्राहुहतं, ग्रहविदारितं ग्रहभिन्नं। 'अत्थवणे संझागय रविगय चड्डियं ठिओ य आइच्चो। विड्डेरमवद्दारि य सग्गह कूरग्गहठियं तु। १।' आइचपिट्ठिओ जं विलंबि राहुहयं तु जहिं गहणं। मज्झे गहो जस्स गच्छइ तं होइ गहभिन्नं। २।' स्पष्टार्थे गाथे 'संझागयंमि कलहो आइच्चगए य होयनिव्वाणी। विड्डेरं परविजओ सग्गहंमि य विग्गहो होइ। १।' आदित्यगते भेऽनिर्वाणी अनिर्वृतिवान् भवति। 'दोसो असक्कजन्तू होइ कुभत्तं विलंबिनक्खत्ते। राहुहयंमि य मरणं गहभिन्ने सोणिओग्गालो। १।' दोषः अशक्तजन्तुः कुभक्तं च भवति, शोणितोद्गालो रक्तप्रवाहः। उक्ता ऋक्षसम्पत् द्वा० ६। अथ गुणसम्पत् 'पियधम्मे' त्यादि. प्रियधर्मादिगुणसम्पत्सु सतीषु तत् सामायिकं दातव्यं भाति। 'पियधम्मो दढधम्मो संविग्गोऽवज्जभीरु असढो य। खंतो दंतो गुत्तो थिरव्वय जिइंदियो उज्जू। १।' प्रियो धर्मो यस्य सः, संविग्नो मोक्षोत्कण्ठितः, अवद्यभीरुः, क्षान्तः, दान्तः, ऋजुः, उक्ता गुणसम्पत्, द्वा० ७ ॥ १८१ ॥ 'अभि'

**अभिवाहारो कालिअ-सुअंमि सुत्तत्थतदुभएणं ति। दव्वगुणपज्जवेहि अ, दिट्ठीवायंमि बोद्धव्वो ॥१८२॥**

अभिव्याहारः शिष्यगुरोर्वचनप्रतिवचनरूपः, स च कालिकश्रुते आचारादौ सूत्रतोऽर्थतस्तदुभयतश्चेति। यथा शिष्येण 'इच्छाकारेणेदमङ्गाद्युद्दिशत' इत्युक्ते, गुरुराह, उद्दिसामो खमासमणाणं हत्थेणं, इत्यादि, अहमिदं उद्दिशामि वाचयामीत्यर्थः क्षमाश्रमणानां हस्तेनेति आप्तोपदेशेन न तु स्वबुद्ध्या, सूत्रतोऽर्थतस्तदुभयतश्च। दृष्टिवादे तु सोऽभिव्याहारो द्रव्यगुणपर्यायै-

नयत इति द्वारे अभिव्याहारद्वारम् ॥

ज्ञेयः, यथा उद्दिशामि सूत्रतोऽर्थतो द्रव्यगुणपर्यायैरनन्तगमसहितैरिति । गुरोरभिव्याहारे सति शिष्यो ब्रूते-उद्दिष्टमिदं मम, इच्छाम्यनुशास्तिं पूज्यानामिति । एवमभिव्याहाराऽऽख्यं अष्टमं द्वारं, 'कयाकयं' इति गाथोक्ते नयत इति पञ्चममूलद्वारं सम्पूर्णं । व्याख्याता 'आलोइए विणीअस्से'ति प्रतिद्वारगाथा ॥ १८२ ॥ अथ करणं कतिविधमित्याह 'उद्दे'

**उद्देसे[1] समुद्देसे[2], वायणं[3] मणुजाणणं च आयरिए। सीसम्मि उद्दिसिजंतमाइ, एअं तु जं कइहा ॥१८३॥**

गुरुशिष्ययोः सामायिकक्रियाव्यापारणं करणं । तत्राचार्ये करणं चतुर्द्धा, उद्देश १ वाचना २ समुद्देशा ३ ऽनुज्ञा ४ भेदात्, गाथाभङ्गभयाद् व्यत्ययः, शिष्ये तूद्दिश्यमानवाच्यमानसमुद्दिश्यमानानुज्ञायमानानि करणानि । 'एअं तु जं कइह'त्ति एतदेवं चतुर्द्धा तत्, यदुक्तं-करणं कतिधेति । इह प्राग्यन्नामाद्यनेकधा करणमुक्तं तत्पूर्वगृहीतसामायिकमाश्रित्य, एतत्तु प्रतिपत्तिमाश्रित्येति न दोषः, द्वा० ६ ॥ १८३ ॥ अथ कथं द्वा० ७ 'कह'

**कह सामाइअलंभो ? तस्सव्वविघाइदेसवाघाई । देसविघाईफड्डुगअणंतवुड्ढीविसुद्धस्स ॥ १०३५ ॥**

कथं सामायिकलाभः स्यात् ? उच्यते-तस्य सामायिकस्य सर्वघातीनि देशघातीनि च कर्म्माणूनां स्पर्द्धकानि कर्म्माणुवृन्दानि स्युः, तत्र ज्ञानावरणदर्शनमोहनीयानां सर्वघातिषु सर्वेषु स्पर्द्धकेषु क्षीणेषु देशघातिनां त्वनन्तस्पर्द्धकेषु क्षीणेष्वनन्तगुणवृद्ध्या प्रतिसमयं विशुद्धयमानः शुभशुभतरपरिणामो भावतः ककारं लभते । ततोऽनन्तगुणवृद्ध्यैव प्रतिसमयं विशुद्ध्यमानः सन् रेफमेवं शेषानपि वर्णान्, तत आह-देशविघातिस्पर्द्धकानन्तवृद्ध्या विशुद्धस्य सतः ॥ १०३५ ॥ 'एवं'

एवं ककारलंभो, सेसाणवि एवमेव कमलंभो। एअं तु भावकरणं, करणे अ भए अ जं भणिअं ॥

ककारस्य लाभः। शेषाणामपि वर्णानामेवमेव क्रमाल्लाभो ज्ञेयः। यदि भावहीना अज्ञाना वा 'करेमि भंते! सामाइयं' इत्यादि पठन्ति परं तेषां क्षयोपशमः कोऽपि तादृग् न, परं यः सावधान एकमना अर्थानुगतं सूत्रं पठति तस्यैवं कर्म्मक्षयलाभः स्यात्। इह प्रागुपक्रमद्वारे क्षयोपशमात्सामायिकं जायते इत्युक्तं, उपोद्घाते तु कथमितिद्वारे क्षयोपशमप्राप्तिः कथं स्यादिति पृष्टे 'दिट्ठे सुए अणुभूए' इत्याद्युत्तरं चोक्तं, अत्र तु कथं प्रश्ने केषां कर्म्मणां क्षयोपशम इति विभागोक्त्या पौनरुक्त्यं न ज्ञेयं। 'एअं तु भावकरणं' ति एतदेव पूर्वोदितं यत्सामायिककरणं तद्भावकरणं। एवं च 'करणे अ भए अ' इत्यत्र यत्करणमिति द्वारं भणितं तद् व्याख्यातं। एतद्व्याख्यानाच्च सूत्रेऽपि करोमीति व्याख्यातं ॥ १०३५ ॥ गतं मूलद्वारगाथायाः 'करणे' इति द्वारं १। अथ 'भए अ अंते' इति व्याख्याति 'होइ'

होइ भयंतो भयअंतगो अ, रयणा भयस्स छब्भेआ। सव्वंमि वन्निएऽणुक्कमेण अंतेवि छब्भेआ ॥१८४॥

भदंतः कल्याणकरः, प्राकृते (आमन्त्रणे) भंते! इति स्यात्। यद्वा भवान्तकृत्त्वाद् भवान्तस्तथा भयस्यान्त इति च। तत्र भये नामस्थापनाद्रव्यक्षेत्रकालभावैः षड्भेदाः षट्प्रकारा रचनेति निक्षेपः स्यात्तत्र नामादिषु सर्वविभक्त्यन्तेष्वर्थयोजनया नामभयादि स्वधिया ज्ञेयं। सर्वस्मिन्नामादिषड्विधे भये वर्णितेऽन्तेऽन्तशब्देऽपि नामादिषड्भेदाः स्युः, नामान्तस्थापनान्तादि स्वधिया ज्ञेयं ॥ १८४ ॥ 'एवं'

'भए अ अंते' इति पदद्वयस्य व्याख्या ॥

एवं सव्वंमिऽवि वन्निअंमि, इत्थं तु होइ अहिगारो । सत्तभयविप्पमुक्के, तहा भवंते भयंते अ ॥१८५॥

सर्वस्मिन्नामादिभेदैरन्ते वर्णितेऽत्राधिकारो यः प्रतिक्रमणसङ्ग्रहण्यां वाच्यः सप्तभयविमुक्तस्तेन, तथा भवान्तो भदन्तश्च ताभ्यां इति ॥ १८५ ॥ अथ भाष्यं ' आमंतेइ करेमी भदंत ! सामाइयंति सीसोऽयं । आहामंतणवयणं गुरुणो किं कारण-मिणंति ? । १ । ' ' करेमि भंते ! सामाइयं ' इति शिष्योऽयं गुरुं आमन्त्रयति । आह परः–ननु गुरोरामन्त्रणवचनमादौ कृतमिति किं कारणं ? ' भण्णइ गुरुकुलवासोवसंगहत्थं जहा गुणत्थीह । निच्चं गुरुकुलवासी हवेज्ज सीसो जओऽभिहियं । २ । नाणस्स होइ भागी थिरतरओ दंसणे चरित्ते च । धन्ना आवकहाए गुरुकुलवासं न मुंचंति । ३ । ' भण्यते–गुरुकुलवासोपसंग्रहार्थं गुरोरामन्त्रणं, यथा इह गुणार्थी शिष्यो नित्यं गुरुकुलवासी भवेत्, यतोऽभिहितं सिद्धान्ते ' नाण-स्से 'त्यादि, गुरुकुलवासी ज्ञानस्य भागी भागवान् भवति स्थिरतरो दर्शनचारित्रे च स्यात्, ततो धन्या यावत्कथया यावज्जीवं । ' आवस्सयं पि निच्चं गुरुपामूलंमि देसियं होइ । वीसुंपि संवसंतो कारणओ जइभिसिज्जाए । ४ । ' भदंतेत्या-मन्त्रणेनावश्यकमपि गुरुपादमूले कार्यं इति दर्शितं भवति, यतो वसतिसङ्कीर्णतादिकारणतो विष्वगपि अभिशय्यायां अन्यवसतौ संवसतः कल्पे इयं सामाचारी उक्ता, यथा–' जइ खुड्डलगा वसहीतो अन्नत्थ गंतूण कइवयसाहूणो वसंति, तत्राचार्यसमीपे पडिक्कमिउं पाउसियकालग्रहणोत्तरकालं सूत्रार्थपौरुषीं कृत्वाऽन्यस्यां गच्छन्तीत्यादि ' । ' एवं चिय सव्वा-वस्सयाइं आपुच्छिऊण कज्जाइं । जाणावियमामंतणवयणाओ जेण सव्वेसिं । ५ । सामाइयमाईयं भयंतसद्दो य जं तदाईए । तेणाणुवत्तइ तओ करेमि भंतेति सव्वेसु । ६ । ' एवमेव सर्वावश्यकानि चतुर्विंशतिस्तवादीनि गुरुमापृच्छय

' भए अ अंते ' इति पदद्वयस्य व्याख्या ॥

कार्याणि इत्यामन्त्रणवचनाद् ज्ञापितं, येन सर्वेषामावश्यकानां सामायिकं आदौ मतं आदिमतं, भदंतशब्दश्च यत्तदादौ, तेनानुवर्त्तने, ततः 'करोमि भदंतेद 'मिति सर्वावश्यकेषु। 'किच्चाकिच्चं गुरवो विदन्ति विणयपडिवत्तिहेउं च। ऊससासाइ पमोत्तुं तदणापुच्छाए पडिसिद्धं।७।' कृत्यं अकृत्यं चेदं इति गुरवो विदन्ति, तथा विनयप्रतिपत्तिहेतुं च, उच्छ्वासादि मुक्त्वा तदनापृच्छया सर्वं कार्यं प्रतिषिद्धं। 'गुरुविरहंमिवि ठवणा, गुरूवएसोवदंसणत्थं च। जिणविरहंमिऽवि जिणबिंबसेवणामंतणं सहलं।८।' गुरुविरहे गुरोरभावेऽपि गुरुस्थापना गुरूपदेशोपदर्शनार्थमेव। जिनविरहे जिनाभावेऽपि जिनविम्बसेवनामन्त्रणं सफलं स्यात्। 'रन्नो व परोक्खस्सवि जह सेवा मंतदेवयाए वा। तह चेव परोक्खस्सवि गुरुणो सेवा विणयहेउं।९।' राज्ञो वा परोक्षस्याऽप्रत्यक्षस्यापि यथा सेवा मंत्रदेवताया वा अप्रत्यक्षाया वा अपि सेवा तद्भक्तिरूपा क्रियते, तथैव परोक्षस्यापि गुरोः सेवा विनयहेतुः। यद्वा 'भंते' इत्यात्मन एवामन्त्रणं, यथा सर्वक्रियासूपयुक्तः स्याद्, यद्वा ज्ञानदर्शनचारित्राणि गुरूणि 'तेसु गुरुसन्नं काऊण भणइ करेमि भंते! सामाइयं' इति ॥ १८५ ॥ गतं 'भए अ अंते' पदद्वयं द्वा० ३। तत्र सामायिकं 'साम'

सामं समं च सम्मं, इगमिति सामाइअस्स एगट्ठा। नामं ठवणा दविए, भावंमि अ तस्स निक्खेवा ॥

सामं, समं, सम्यक्, एगमग्रे इक इति प्रत्येकं पदं, तच्च देश्युक्त्या प्रवेशार्थे वर्त्तते, अत्र पदयोजनां स्वयमग्रे वक्ष्यति। तथा सामायिकस्य एकार्थिकानि नामानि, तेषां सामादीनां नामादिभिर्निक्षेपः स्यात् ॥ १०३७॥ नामस्थापनासामादीनि मुक्त्वा द्रव्यसामादीन्याह 'सह'

सामस्य निक्षेपाः॥

**महुरपरिणाम सामं, समं तुला सम्म खीरखंडजुई। दोरे हारस्स चिई, इगमेआइं तु दव्वंमि ॥ १०३८ ॥**

मधुरपरिणामिद्रव्यं शर्करादिद्रव्यं सामद्रव्यं, समं सद्भूतार्थालोचनायां तुला तोलनोपकरणं, द्रव्यसम्यक् क्षीरखण्डयोर्युतिर्योगः सम्यग् मिलनमित्यर्थः। तथा द्रव्येकं भविष्यद्धारपर्यायस्य मुक्ताव्रजस्य दवरके चितिः प्रवेशनं, एतान्याहरणानि द्रव्यविषयानि ॥ १०३८ ॥ भावसामादीन्याह 'आयो'

**आयोवमाए परदुक्खमकरणं रागदोसमज्झत्थं। नाणाइतिगं तस्साइ, पोअणं भावसामाई ॥१०३९॥**

आत्मनोपमया आत्मवत् परस्यापि दुःखानामकरणं भावसामं, रागद्वेषमाध्यस्थ्यं द्वयोरनासेवनया मध्यवर्त्तित्वं चित्तस्य भावसमं, ज्ञानादित्रयमेकत्र योजनं भावसम्यक्, यतो रत्नत्रयमेव सम्यक्मोक्षहेतुत्वात्, एकैकपक्षस्त्वसम्यक्, तथा तस्य सामादेरात्मनि प्रोतनं भावेकं। अथ योजना–आत्मनि साम्न इकं निपातनात् सामायिकं, एव समसम्यक्शब्दाभ्यामपि इकयोगे सामायिकशब्दनिपातः ॥ १०३९ ॥ सामायिकैकार्थिकान्याह 'सम'

**समया सम्मत्त पसत्थ, संति सिव हिअ सुहं अनिंदं च। अदुगुंछिअमगरहिअं, अणवज्जमिमेऽवि एगट्ठा ॥**

समता माध्यस्थ्यं, सम्यक्त्वं रत्नत्रययोगः, प्रशस्तं मुक्तिदत्वात्, शान्तिः शमवत्त्वात्, शिवं निरुपद्रवत्वात्, हितं आयति सुन्दरत्वात्, शुभं शुभाशयत्वात्, अनिन्द्यं विश्वमान्यत्वात्, अगर्हितं गर्ह्यकर्म्मरहितत्वात्, अनवद्यं निष्पापत्वात्। इमेऽत्रोक्ताऽपिशब्दात् सामाइयं समइयं इत्युपोद्घातनिर्युक्त्या अप्येकार्थाः ॥ १०४० ॥ अथ 'करेमि भंते ! सामाइयं'

इति पदार्थे उक्ते चालनामाह 'को का'

को कारओ? करंतो किं कम्मं? जं तु कीरई तेण। किं कारयकरणाण य, अन्नमणन्नं च? अक्खेवो॥१०४१॥

'करेमि भंते! सामाइयं' इत्यत्र कः कारकः इत्याह? सामायिकं कुर्वन्नात्मैव। किं कर्म्म? इत्यत्राह–यत्तु क्रियते तेनात्मना, तस्य गुणरूपं सामायिकमेव, तुशब्दात् किं करणं? इति प्रश्ने उद्देशादिचतुर्धेत्युत्तरं। एवं सत्याह 'किं कारककरणयोश्च-शब्दात्कर्म्मणश्च मिथोऽन्यत्वमनन्यत्वं वा? अन्यत्वे सामायिकवतोऽपि तत्फलस्य मोक्षस्याभावस्तदन्यत्वात् मिथ्यादृष्टेरिव, अनन्यत्वे तस्योत्पत्तिविनाशाभ्यां आत्मनोऽप्युत्पत्तिविनाशाप्तिः, इत्याक्षेपश्चालना॥ १०४१॥ अथ प्रत्यवस्थानं 'आया'

आया हु कारओ मे, सामाइय कम्म करणमाया य। परिणामे सइ आया, सामाइयमेव उ पसिद्धी।१०४२॥

ममात्मैव कारकः, सामायिकस्य कर्त्ता, तथाप्युक्तदोपाभावः, यतः परिणामे सत्यात्मा सामायिकं परिणामश्च कथञ्चित्पू-र्वरूपात्त्यागेनोत्तररूपापत्तिः। ततः परिणामे सत्यात्मनो नित्यानित्याद्यनेकरूपता। द्रव्यगुणपर्यायाणामप्येवमेव भेदाभेद-सिद्धिः ननो नैकान्तेन कर्तृकर्म्मकरणानामनन्यत्वं तद्गुणत्वात्, न चान्यत्वं तद्गुणत्वादेव। ततश्चात्मैव कर्त्ता, कर्म्म, करणं चेति तत्त्वं. इति प्रसिद्धिः स्थापना॥ १०४२॥ अत्रार्थे युक्तिमाह 'एग'

एगत्ते जह मुट्ठिं, करेइ अत्थंतरे घडाईणि। दव्वत्थंतरभावे, गुणस्स किं केण संबद्धं ॥ १०४३॥

एकत्वेऽभेदेऽपि कर्तृकर्म्मकरणभावो दृष्टः, यथा मुष्टिं करोति, अत्र देवदत्तः कर्त्ता, तस्य मुष्टिः कर्म्म, तस्यैव प्रय-



चालना-प्रत्यव-स्थाने॥

त्नविशेषः करणं। अर्थान्तरे तु भेदः स्पष्ट एव, यथा घटादीनि, तत्र चक्री दण्डादिना घटं करोति। इह तु सामायिकं गुणः, स गुणिनः कथञ्चिदेव भिन्नो न सर्वथा, एकान्तेन द्रव्यादर्थान्तरभावे पृथग्वस्तुत्वे सति गुणस्य किं केन सम्बद्धं ? न किंचित्केनचित्सम्बद्धमिति भावः, यतो ज्ञानादयोऽपि गुणास्ते चात्मनो भिन्नास्ततो ज्ञानाभावात्सर्वव्यवस्थानुत्पत्तिः ॥ १०४३ ॥ उक्तं सामायिकद्वा० ४। अथ सर्वद्वारं ५ 'नामं'

**नामं ठवणा दविए, आएसे निरवसेसए चेव। तह सव्वधत्तसव्वं च, भावसव्वं च सत्तमयं ॥१०४४॥**

नाम्नि, स्थापनायां, द्रव्ये, आदेशे, निरवशेषे च सर्वं स्यात्। तथा सर्वधत्तसर्वं भावसर्वं च ॥ १०४४ ॥ भाष्यं 'दवि'

**दविए चउरो भंगा, सव्वमसव्वे अ देवदेसे अ। आएस सव्वगामो, नीसेसे सव्वगं दुविहं ॥ १८६ ॥**

द्रव्यसर्वे चत्वारो भङ्गाः 'सव्वेत्यादि' कोऽर्थः—पटादिद्रव्यं सर्वैस्तन्त्वाद्यवयवैः पूर्णं सर्वमुच्यते। तस्यैव द्रव्यस्य स्वावयवोद्देशस्तन्त्वादिर्यदा कृत्स्नतया विवक्ष्यते तदा देशोऽपि सर्वः, एवं द्वौ भेदौ, तथा पटादिद्रव्यस्य तद्देशस्य वाऽसम्पूर्णत्वेऽसर्वत्वं। अथ भङ्गाः—द्रव्यं सर्वं देशः सर्वः १ द्रव्यं सर्वं देशोऽसर्वः २ द्रव्यमसर्वं देशः सर्वः ३ द्रव्यं असर्वं देशोऽसर्वः ४। अत्र द्वितीयभङ्गः प्ररूपणामात्रं, शेषाः स्युः। अथादेशसर्वं, तत्रादेशो व्यवहारः, स च बहुतरे प्रधाने वाऽऽदिश्यते, यथा बहुतरे भुक्ते, स्तोके वा शेषे, सर्वं भुक्तमिति, मुख्यनरेष्वागतेषु सर्वो ग्रामः समेत इति। अत्र च प्रधानपक्षमाश्रित्याह—'आएस सव्वगामो' आदेशसर्वे सर्वो ग्रामः। निःशेषसर्वं द्विधा, सर्वापरिशेषसर्वं तद्देशापरिशेषसर्वं च। तत्र सर्वसमुदयमध्ये

सर्व-शब्दस्य निक्षेपादि॥

यत्र न किञ्चित् परिशिष्यते तत्सर्वापरिशेषसर्वं, एवं द्वितीयमपि ॥ १८६ ॥ ' अणि '

**अणिमिसिणो सव्वसुरा, सव्वापरिसेससव्वगं एअं। तद्देसापरिसेसं, सव्वे काला जहा असुरा ॥१८७॥**

अनिमेषिणो-निमेषरहिताः सर्वे सुराः, एतत्सर्वापरिशेषसर्वं, सर्वदेवानां निर्निमेषत्वात्। ' तद्देसा० ' तेषां देवानां देश एको निकायस्तत्तापरिशेषं निःशेषसर्वं यथाऽसुराः सर्वे कालाः ॥ १८७ ॥ ' सो ह '

**सो हवइ सव्वधत्ता, दुपडोआरा जिआ य अजिआ य। दव्वे सव्वघडाई, सव्वधत्ता पुणो कसिणं ॥१८८॥**

स भवति सर्वधत्ता सर्वधत्तसर्वमित्यर्थः, द्विप्रत्यवतारा यत्र जीवाजीवाख्यं वस्तु सत्तं-देशयुक्तया स्थापितं, यस्यां विवक्षायां सा सर्वधत्ता, द्विप्रकारा, यथा जीवा अजीवाश्च, सर्वविश्वस्य जीवाजीवमध्ये सङ्कलनात्। द्रव्यसर्वस्य सर्वधत्तसर्वस्य चायं विशेषः—' दव्वे ' द्रव्यसर्वे घटादेरेकं द्रव्यं सम्पूर्णं गृह्यते, सर्वधत्ता पुनः कृत्स्नं समस्तं वस्तुजातं व्याप्य स्थिता ॥ १८८ ॥ ' भावे '

**भावे सव्वोदइओदयलक्खणओ जहेव तह सेसा। इत्थ उ खओवसमिए, अहिगारोऽसेससव्वे अ ॥१८९॥**

भावसर्वे सर्व उदयलक्षण औदयिको भावः शुभोऽशुभश्च। यथा चायमुक्तस्तथा शेषा अपि स्वलक्षणतो वाच्याः। यथा सर्वः क्षायिकः शुभः, सर्वक्षायोपशमिकः शुभाशुभः, सर्वपरिणामिकः शुभाशुभश्च मोहनीयकर्मोपशमसम्भवात् सर्व औपशमिको भावः शुभः, क्षायिकाद्याः प्राग् व्याख्याता एव। अत्र क्षायोपशमिकभावसर्वेऽधिकारोऽशेषसर्वे चेति सर्वापरिशेषसर्वे ॥ १८९ ॥ उक्तं सर्वद्वा० ५। अथानयं व्याख्याति ' कम्म '

**कम्ममवज्जं जं गरिहिअंति, कोहाइणो व चत्तारि। सह तेण जो उ जोगो, पच्चखाणं हवइ तस्स॥१०४५॥**

कर्म्म अवद्यं तद्भण्यते यद्गर्हितमिति, क्रोधादयो वा चत्वारोऽवद्यं तेषामवद्यहेतुत्वात्कारणे कार्योपचारः। सह तेनावद्येन योगो व्यापारः स सावद्ययोगस्तस्य प्रत्याख्यामि ॥ १०४५ ॥ गतं अवद्यं द्वा० ६ । अथ योगमाह ' दव्वे '

**दव्वे मणवइ काए, जोगा दव्वा दुहा उ भावंमि। जोगा सम्मत्ताई, पसत्थ इअरो उ विवरीओ॥१०४६॥**

द्रव्ययोगा मनोवाक्काययोग्यद्रव्याणि । भावे द्विधा, प्रशस्तः सम्यक्त्वज्ञानचरणानि, इतरोऽप्रशस्तो विपरीतो मिथ्यात्वादि । युज्यतेऽनेनात्मा कर्म्मणेति योगः ॥१०४६॥ गतं योगद्वा० ७ । प्रतिषेधस्याख्यानं आदरेण कथनं प्रत्याख्यानं, तन्निक्षेपमाह–' नामं ठवणा दविए खित्तमइच्छा अ भावओ तं च । नामाभिहाणमुत्तं ठवणाऽऽगारक्खनिक्खेवो । १ ।' नामप्रत्याख्यानं १, स्थापनाप्रत्याख्यानं २, द्रव्यप्रत्याख्यानं ३, क्षेत्रप्रत्याख्यानं ४, अदित्साप्रत्याख्यानं ५, भावप्रत्याख्यानं च ६ । तत्र नामप्रत्याख्यानं प्रत्याख्यानेति यदभिधानं कस्यापि स्यात् । स्थापनाप्रत्याख्यानं आकारनिक्षेपोऽक्षनिक्षेपश्च, कोऽर्थः ? चित्रादौ प्रत्याख्यातुर्या स्थापना, प्रत्याख्यातृप्रत्याख्यानयोरभेदोपचारात्, अक्षवराटकादौ वा स्थापना इदं प्रत्याख्यानमिति । १ । एषा गाथा वृत्तौ न । ' दव्वं '

**दव्वंमि निण्हगाईं, निव्विसयाई अ होइ खित्तंमि। भिक्खाईणमदाणे, अइच्छ भावे पुणो दुविहं॥१०४७॥**

द्रव्ये निह्नवादि, निह्नवादीनां प्रत्याख्यानमित्यर्थः, प्रत्याख्यानप्रत्याख्यात्रोरभेदात्, आदितोऽनुपयुक्तादेः प्रत्याख्यानं,

क्षेत्रप्रत्याख्यानं निर्विषयादि यो निर्विषयः कृतो देशं त्याजितस्तस्य देशरूपक्षेत्रनिषेधात्, आदितः पुरादिनिषेधग्रहः। दातुम-
निच्छादिना, तत्र प्रत्याख्यानं भिक्षादीनां अदाने, आदितो द्रव्यादेरदाने। भावप्रत्याख्यानं भावः कर्मक्षयस्तदर्थं भावादुप-
योगाद्वा प्रत्याख्यानं, तद्द्विधा ॥ १०४७ ॥ ' सुअ '

सुअ–णोसुअ सुअ दुविहं, पुव्वमपुव्वं तु होइ नायव्वं । नोसुअपच्चक्खाणं, मूले तह उत्तरगुणे अ ॥१०४८॥

श्रुतप्रत्याख्यानं नोश्रुतप्रत्याख्यानं च । आद्यं द्विधा, पूर्वश्रुतप्रत्याख्यानं अपूर्वश्रुतप्रत्याख्यानं च । आद्यं प्रत्याख्या-
नाख्यं पूर्वं, द्वितीयं त्वातुरप्रत्याख्यानादिग्रन्थः। नोश्रुतप्रत्याख्यानं द्विधा, मूलगुणप्रत्याख्यानं, मूलगुणाः प्राणातिपातादयः,
उत्तरगुणप्रत्याख्यानं च, उत्तरगुणाः पिण्डविशुद्ध्यादयः। आद्यं द्विधा, देशेन सर्वेण च। सर्वेण चेहाधिकारः ॥ १०४८ ॥
उक्तं प्रत्याख्यानद्वा० ८। अथ यावज्जीवयेति ' जीव '

जावद्वधारणंमि, जीवणमवि पाणधारणे भणिअं । आ पाणधारणाओ, पावनिवित्ती इहं अत्थो ॥

यावच्छब्दोऽत्र मर्यादानिश्चये, जीवनं प्राणधारणे, ततः आ प्राणधारणात्, प्राणधारणं यावत् पापनिवृत्तिरितीहार्थः
॥ १०४९ ॥ अथ जीवितशब्दनिक्षेपः ' नामं '

नामं ठवणा दविए, ओहे भव तब्भवे अ भोगे अ। संजम जस कित्तीजीविअं च, तं भण्णई दसहा ॥

जीवितं दशधा भण्यते–नामजीवितं, स्थापनाजी०, द्रव्यजी०, ओघजी०, भवजी०, तद्भवजी०, भोगजी०, संयमजी०,

जीवित-
निक्षेपाः ॥

यशोजी०, कीर्त्तिजीवितं च ॥ १०५० ॥ 'दव्वे'

**दव्वे सच्चित्ताई आउअसद्दव्वया भवे ओहे । नेरइयाईण भवे, तब्भव तत्थेव उप्पत्ती ॥ १९० ॥**

द्रव्यजीवितं-येन सचित्तादिना द्रव्येण जीवितं धार्यते तद्द्रव्यं उपचाराज्जीवितं, यथा घृतमायुः । ओघः सामान्यं तत्र जीवितं भवेत्, किमित्याह-आयुःसद्द्रव्यताऽऽयुःकर्मसहचारिता जीवस्य । इदं च जीवितं सर्वसंसारिणां सदैव स्यात्, आयुर्द्रव्याणां नित्यं भावात् । भवजीवितं नैरयिकादीनां स्वस्वभववर्त्तमानानां । तद्भवजीवितं तत्रैव नृभवादौ भूयः भूयः उत्पत्तिः, एतदौदारिकदेहानामेव स्यात् ॥ १९० ॥ 'भोगं'

**भोगंमि चक्किमाई, संजमजीअं तु संजयजणस्स । जसं किंत्ती अ भगवओ, संजमनरजीवअहिगारो ॥**

भोगजीवितं चक्र्यादीनां, संयमजीवितं संयतजनस्य स्यात्, तत्र दानजा कीर्त्तिः, पराक्रमजं यशः, तयोर्जीविते भगवतोऽर्हतः, अन्ये तु यशकीर्त्तिजीवितमेकमेवाहुः, किन्तु संयमविपक्षमसंयमजीवितं ख्याति, ततो दशधा । इह संयमजीवितेन नरभवजीवितेन चाधिकारः ॥ १०५१ ॥ अथ 'करणे भए य' इत्यादिगाथायाः 'तिविहेणं'ति पदं व्याख्यान् गृहस्थान् यतींश्चाश्रित्य सावद्ययोगप्रत्याख्यानं भेदसङ्ख्ययाऽऽह 'सीआ'

**सीआलं भंगसयं, तिविहं तिविहेण समिइगुत्तीहि । सुत्तप्फासिअनिज्जुत्तिवित्थरत्थो गओ एवं ॥१०५२॥**

सप्तचत्वारिंशं-सप्तचत्वारिंशदधिकं भङ्गशतं गृहिणां प्रत्याख्यानं 'तिविहं तिविहेणे'त्याद्यग्रे व्याख्यास्यते । सप्त-

सावद्ययोगप्रत्याख्यानभेदाः ॥

चत्वारिंशं भेदशतं तु भाष्यते–' सीयालं भंगसयं, गिहिपच्चक्खाणभेयपरिमाणं । तं च विहिणा इमेणं भावेयव्वं पयत्तेणं । १ । तिन्नि तिया तिन्नि दुया, तिन्निक्किक्का य हुन्ति जोगेसु । तिदुएक्कं तिदुएक्कं तिदुएक्कं चेव करणाइं । २ । पढमे लब्भइ एगो, सेसेसु पएसु तिय तिय तियं च । दो नव तिय दो नवगा, तिगुणिय सीयालभंगसयं । ३ ।' त्रयस्त्रिकास्त्रयो द्विकास्त्रय एककाश्च योगेषु कृतकारितानुमतिभेदात्त्रिषु सावद्यव्यापारेषु, त्रिको द्विक एकः, त्रिको द्विक एकः, त्रिको द्विक एककः, करणानि मनोवाक्कायरूपाणि त्रीणि । एतैश्च योगकरणैः ४९ भङ्गाः स्युः । तत्र प्रथमे योगत्रिककरणत्रिकरूपे संयोगपदे एककः एकभङ्गरूपो लभ्यते । शेषेषु पदेषु त्रिकं, त्रिकं, त्रिकं, द्वौ नवकौ, एकं त्रिकं, द्वौ नवकौ इति, स्थापना ।

| | | |
|---|---|---|
| ३३३ | २२२ | १११ |
| ३२१ | ३२१ | ३२१ |
| १३३ | ३९९ | ३९९ |

योगा एते ४९ भेदास्त्रिगुणाः कालत्रयगुणिताः १४७ भङ्गाः । अत्र भावना–' न करोति न कारयति कुर्वन्तं नानुजानीते, मनसा वाचा कायेन १, इत्याद्यो मूलभेदः । अत्राह–' न करेईच्चाइतियं गिहिणो कह होइ देसविरयस्स ? । भन्नइ विसयस्स वहिं, पडिसेहो अणुमईएवि । ४ ।' न करोतीत्यादित्रिकं देशविरतस्य गृहिणः कथं भवति ? गुरुः–भण्यते, विषयस्य त्रिकरणगोचरस्य बहिः सर्वसावद्येऽनुमतेरपि निषेधः स्यात् । उक्तं च ' तं किंचिदप्पओयणमप्पप्पं वा विसेसिउं वत्थुं । पच्चक्खिज्ज न दोसो सयंभुरमणाइमच्छुव्व । ५ ।' यत्किञ्चिदप्रयोजनं कार्यानर्हं अप्राप्यं वा–यत्क्षीराब्धिजलादिवस्तु विशिष्य त्रिविधं त्रिविधेन प्रत्याख्यायान्न दोषः, स्वयम्भूरमणादिमत्स्यवत् । अत्र भाष्यं–' केई भणंति गिहिणो तिविहं तिविहेण नत्थि संवरणं । त न जओ निद्दिठं पन्नत्तीए विसेसेउं

। १ ।' संवरणं प्रत्याख्यानं त्रिविधेन नास्ति, तन्न यतः प्रज्ञप्त्यां भगवत्यां विशिष्य विशेषेण त्रिविधं त्रिविधेन प्रत्याख्यानं निर्दिष्टं । शिष्यः 'तो कह निज्जुत्तीएऽणुमइनिसेहोत्ति ? सो सविसयंमि । सामन्नेणं नत्थि उ तिविहं तिविहेण को दोसो ? । २ ।' ततः कथं प्रत्याख्याननिर्युक्त्यां 'दुविहं तिविहेणं पढमो' इत्युक्त्याऽनुमतिप्रत्याख्याननिषेधः कृतः ? उच्यते, स स्वविषये एव, न तु विषयबाह्ये । सामान्येन तु नास्ति त्रिविधं त्रिविधेन भङ्गस्ततः को दोषः । तथा 'पुत्ताईसंतइनिमित्तमित्तमेगारसिं पवन्नस्स । जंपंति केइ गिहिणो दिक्खाभिमुहस्स तिविहं पि । ३ ।' केचिदेवं जल्पन्ति दीक्षाभिमुखस्य पुत्रादिसन्ततिनिमित्तमात्रं, तावता पुत्रादयो गृहभारार्हाः स्युरित्यादिहेतोरेकादशीं प्रतिमां प्रपन्नस्य गृहिणस्त्रिविधं त्रिविधेन प्रत्याख्यानं भवेत् । आह 'कहं पुण मणसा करणं कारावणं अणुमई य । जह वयतणुजोगेहिं करणाई तह भवे मणसा । ४ ।' अत्र परः प्राह कथं मनसा करणादि स्यात् ? उच्यते, यथा वाक्तनुयोगाभ्यां तथा मनसापि करणादि भवेत् । हेतुमाह–'तयहीणत्ता वयतणुकरणाईणमहव मणकरणं । सावज्जजोगमणणं पन्नत्तं वीयरागेहिं । ५ ।' वाक्तनोः करणादीनां करणकारणानुमतीनां तदऽधीनत्वात्तस्य मनोऽधीनत्वात् । अथवा मनःकरणमिदं वीतरागैः प्रज्ञप्तं यत्सावद्ययोगस्य मननं चिन्तनं । 'कारावणं पुण मणसा चिंतेइ य करेउ एस सावज्जं । चिन्तेइ य कए पुण सुट्ठु कयं अणुमई होइ । ६ ।' कारापणं पुनर्मनसा चिन्तयति, एष सावद्यं करोतु, अन्येन कृते पुनश्चिन्तयति सुष्ठु कृतं, एवमनुमतिः स्यात् । गत आद्यो भेदः स चैकविध एव । तथा 'तिविहं दुविहेणं' इति भङ्गक उच्यते–यथा न करोति न कारयति कुर्वन्तं नानुजानाति मनसा वाचा १, न करोति न कारयति कुर्वन्तं नानुजानाति मनसा कायेन २, एवं वाचा कायेन ३, एते-

सावद्ययोगप्रत्याख्यानभेदाः ॥

त्रिभिर्द्वितीयो मूलभेदः २ । न करोति न कारयति कुर्वन्तं नानु० मनसा १, एवं वाचा २, एवं कायेन ३, एष त्रिधा
तृतीयो मूलभेदः ३ । तथा 'दुविहं तिविहेणं' एष भङ्ग उच्यते–यथा न करोति न कारयति मनसा वाचा कायेन १,
एवं न करोति कुर्वन्तं नानु० २, एवं न कारयति कुर्वन्तं नानुजा० मनसा वाचा कायेनेति तुर्यो मूलभेदः ४ । अथ
'दुविहं दुविहेणं'ति भङ्ग उच्यते–यथा न करोति न कारयति मनसा वाचा १, एवं न करोति कुर्वन्तं नानुजानाति २, न
कारयति कुर्वन्तं नानु० ३, एते ३ भङ्गाः मनोवाग्भ्यां लब्धाः, एवमेव मनःकायाभ्यां ३, तथा मनोवाग्भ्यां ३, एवं भङ्गाः
९, पञ्चमो नवधा मूलभेदः ५ । अथ 'दुविहं एगविहेणं'ति भङ्गः, न करोति न कारयति मनसा १, एवं न करोति कुर्वन्तं
नानुजानाति २ न कारयति कुर्वन्तं नानु० ३, एवं ३ भङ्गा मनसा लब्धाः एवं वाचा त्रयं, कायेनापि त्रयं, जाताः ९, षष्ठो
नवधा मूलभेदः ६ । अथ 'एगविहं तिविहेणं' भङ्गाः–न करोति मनोवाक्कायैः १ एवं न कारयति २, कुर्वन्तं नानुजा०
मनोवाक्कायैः ३, एष त्रिधा सप्तमो भेदः ७ । अथ 'एगविहं दुविहेणं' भङ्गः, न करोति मनोवाग्भ्यां १, एवं मनःकायाभ्यां २,
एवं वाक्कायाभ्यां ३, न करोतीति पदेन यथा भङ्गा ३, तथा न कारयतीति पदेनापि ३, कुर्वन्तं नानुजानाति अत्रापि ३,
एवं भङ्गाः ९, अष्टमो नवधा भेदः । अथ 'एगविहं एगविहेणं'ति भङ्गः, न करोति मनसा १, एवं न कारयति २, कुर्वन्तं
नानु० ३, एवं वाचापि ३, कायेनापि ३, एवं (नवधा) नवमो भेदः ९ । अत्राद्ये भङ्गे एको भेदः १, द्वितीयतृतीयतुर्येषु प्रत्येकं
भङ्गत्रयं, पञ्चमषष्ठयोर्नव नव, सप्तमे त्रिकं, अष्टमनवमयोर्नव नवेति, भङ्गाः सर्वे मीलिताः ४९, अतीतं निन्दामि, प्रत्युत्पन्नं
संवृणोमि, अनागतं प्रत्याख्यामीति कालत्रयगुणिताः १४७ भङ्गाः, उक्तं च–'लद्धफलमाणमेयं भंगाओ भवंति अउण-

सावद्य-योगप्रत्याख्यान-भेदाः ॥

पन्नासं । तीयाणागयसंपइगुणियं कालेण होइ इमं । ७ ।' लब्धं च तत्फलं च लब्धफलं तस्य मानं प्रमाणमेतत्, यथा सर्वेषामपि मूलभेदानां भेदभङ्गाः ४९ भवन्ति ते च प्राग् दर्शिता एव, लब्धफलमानं ४९ भङ्गरूपं तीतानागतसम्प्रतिकालेन गुणितमिदं भवति, यथा 'सीयालं भंगसयं, कह ? कालतिएण होइ गुणणाओ । तीयस्स पडिक्कमणं पच्चुप्पन्नस्स संवरणं । ८ ।' पच्चक्खाणं च तहा होइ एसस्स एव गुणणाओ । कालतिएणं भणियं जिणगणहरवायगेहिं च । ९ ।' सप्तचत्वारिंशं भङ्गशतं स्यात्कथमित्याह–कालत्रिकेण गुणनात्, यथाऽतीतस्य सावद्यस्य प्रतिक्रमणं निन्दादिना, प्रत्युत्पन्नस्य वर्त्तमानस्य संवरणं अकरणेन, एष्यतो भविष्यत्कालसम्बन्धिनश्च प्रत्याख्यानं निषेधेन, एवं कालत्रिकेण गुणनात् जिनैर्गणधरैर्वाचकैश्च भणितं । स्थापना–

| तिविहं तिविहेणं | तिविहं दुविहेणं | तिविहं एगविहेणं | दुविहं तिविहेणं | दुविहं दुविहेणं | दुविहं एगविहेणं | एगविहं तिविहेणं | एगविहं दुविहेणं | एगविहं एगविहेणं | |
|---|---|---|---|---|---|---|---|---|---|
| ३ | ३ | ३ | २ | २ | २ | १ | १ | १ | योगा |
| ३ | २ | १ | ३ | २ | १ | ३ | २ | १ | करणानि |
| १ | ३ | ३ | ३ | ९ | ९ | ३ | ९ | ९ | लब्धफलं |

अथ प्रकृतगाथायामेव साधुप्रत्याख्यानभेदानाह–' तिविहं तिविहेणं समिइगुत्तीही 'त्यादि, त्रिविधं त्रिविधेन, अनेन सर्वसावद्ययोगप्रत्याख्यानादर्थतः २७ भेदा उक्ताः, यथा मनसा न करोति १, न कारयति २, नानुजानाति ३, एवं वाक्कायाभ्यामपि त्रिकं त्रिकं चेति भेदाः ९, कालत्रयगुणाः २७, इदं च प्रत्याख्यानजातं

सामायिकं समितिगुप्तिभिः पालिताभिः स्यात् । तत्रेर्यादिकाः समितयस्ताश्च प्रवीचाररूपाः, प्रवीचारश्चारित्रे प्रवृत्तिरिति । गुप्तयस्तु प्रवीचाराप्रवीचाररूपाः शुभप्रवृत्त्यशुभाऽप्रवृत्तिलक्षणा मनोगुप्त्यादयः । अन्ये त्वाहुः ' अष्टौ प्रवचनमातरः सामायिकसूत्रेण संगृहीताः-यथा ' करेमि भंते ! सामाइयं 'ति समितय आत्ताः, ' सव्वं सावज्जं जोगं पच्चक्खामी 'ति गुप्तयः । समितयः सत्क्रियाप्रवृत्तौ, गुप्तयस्त्वसत्क्रियानिग्रहे । अमूषु सामायिकं १४ पूर्वाणि च मातानि । इह ' सीयालं भंगसयं तिविहं तिविहेणं ' त्युक्तितः कालत्रयसावद्ययोगसंवरणं तथा योगत्रयं करणत्रयं च निरूपितं । तेन च सर्वं सामायिकसूत्रं स्पृष्टं, यथा ' करेमि भंते ! सामाइयं 'ति वर्तमानकालसम्बन्धिनः सावद्ययोगस्य संवरणहेतुपदं ' सव्वं सावज्जं जोगं पच्चक्खामि जावज्जीवाए 'त्ति भविष्यत्कालसंबंधिनः प्रत्याख्यानपदं । ' तस्स भंते पडिक्कमामी 'ति अतीतकालसंबंधिनः प्रतिक्रमणपदं । तथा ' तिविहं तिविहेणं 'त्यादीनि भङ्गकपदानि । एतानि चानया गाथया प्रायः स्पृष्टानि, तत आह ' सुत्ते 'त्यादि । एवं सामायिकनिर्युक्तिसारार्थो भङ्गजालकथनेन गतः ॥ १०५२ ॥ उक्तमेवार्थं स्पष्टयति ' सामा '

**सामाइअं करेमि, पच्चक्खामी पडिक्कमामित्ति । पच्चुप्पन्नमणागयअईअकालाण गहणं तु ॥१०५३॥**

सामायिकं करोमि, सावद्यं प्रत्याख्यामि, प्राकृतात्प्रतिक्रमामीति यथाक्रमं प्रत्युत्पन्नाऽनागताऽतीतकालानां ग्रहणं । अथ तस्य भदंत प्रतिक्रमामीति यत्प्राग्व्याख्यातं तत्रोच्यते-यद्यपि प्रतिक्रमामीति क्रियायाः सावद्ययोगः कर्म्म, कर्म्मणि च द्वितीया तत्सम्बन्ध्याने तमिति स्यात्, परमवयवावयविसम्बन्धेऽत्र षष्ठी, ततोऽयमर्थः-योऽसौ त्रिकालविषयः सावद्ययोगस्तस्यातीतं सावद्यांशं प्रतिक्रमामि ॥ १०५३ ॥ परः प्राह ' तिवि '

सामायिकस्य त्रिकालिकता ॥

**तिविहेणंति न जुत्तं, पडिवयविहिणा समाहिअं। जेण अत्थविगप्पणयाए, गुणभावणयत्ति को दोसो ?॥**

'तिविहेणं'त्यत्र त्रिविधेनेति न युक्तं उपलक्षणत्वात् त्रिविधमपि, किमित्याह—येन प्रतिपदविधिना समाहितं, प्रतिपदं अस्यार्थ उक्तः, तद्यथा 'मणेणं'इत्यादि, अत्रोच्यते—अर्थविकल्पनया गुणभावनयेति वा को दोषः? अर्थविकल्पनार्थं भेदोपदर्शनं, गुणभावना—गुणाभ्यासः, ताभ्यां हेतुभ्यां, कोऽर्थः—एवं ह्युक्ते सामान्यविशेषरूपत्वं सर्वस्याप्यर्थस्य दर्शितं स्यात्, यतः 'तिविहं तिविहेणे'ति सामान्यरूपता दर्शिता 'मणेणं' इत्यादिना तु विशेषरूपता। तथा एवमाख्याते यः सामायिकरूपो गुणस्तस्य पुनः पुनराख्यानात्मिका भावना स्यात्, भावना च कर्म्मक्षयहेतुरिति। 'तस्स भंते!' इति पुनर्भदंतशब्दग्रहणं अनुस्मरणार्थं, सर्वक्रियान्ते गुरोः प्रत्यर्पणं कार्यमिति ज्ञप्त्यर्थं च। यदुक्तं भाष्ये 'सामाइयपच्चप्पणवयणो वाऽयं भदंतसद्दोत्ति। सव्वकिरियावसाणे भणियं पच्चप्पणमणेणं। १।' सामायिकप्रत्यर्पणवचनोऽयं भदन्तशब्द इति सर्वक्रियावसाने गुरोः प्रत्यर्पणं कार्यमिति भणितं ॥ १०५४ ॥ प्रतिक्रमामीति प्रतिक्रमणं मिथ्यादुःकृतमुच्यते, अतस्तन्निक्षेपमाह 'दव्वं'

**दव्वम्मि निण्हगाई, कुलालमिच्छंति तत्थुदाहरणं। भावंमि तदुवउत्तो, मिआवई तत्थुदाहरणं॥१०५५॥**

द्रव्यप्रतिक्रमणं प्रतिक्रमणप्रतिक्रमित्रोरभेदोपचाराद् निह्नवादिः, तत्र द्रव्यप्रतिक्रमणे कुलालमिथ्यादुःकृतं उदाहरणं—यथा कापि कुलालकुट्यां साधुषु स्थितेष्वेकः क्षुल्लः कर्करैर्भव्यभाण्डानि काणानि कुर्व्वन् कुलालवारितो 'हा मिथ्यादुःकृत'मिति वदन् पुनः पुनः छिद्रयति। कुलालेन कर्णमोटं दत्वा क्षुल्लवारितेन 'हा मिथ्यादुःकृतमि'ति वदता पुनः पुनः कर्णौ

मोदितानीति । भावप्रतिक्रमणं सम्यग्दृष्टी, तदुपयुक्तो मिथ्यादुःकृतोपयुक्तः । तत्र मृगावत्युदाहरणं:—कौशाम्ब्यां श्री वीरस्वामिनो समवसरणे चन्द्रसूर्यागमे चेटकराजसुता मृगावती साध्वी व्याक्षिप्तचित्ता वेलामजानन्ती साध्वीषु सर्वास्वपि गतासु स्थिता, चन्द्रार्कगमनेन तमसि जाते उपाश्रयमायाताऽऽलोचयन्त्यार्यचन्दनया ताडिता सम्यक् मिथ्यादुःकृतं ददती पादयोः पतिता केवलं प्राप ॥ १०५५ ॥ अथ 'निन्दामी'ति 'मच'

सच्चरित्तपच्छयावो, निंदा तीए चउक्कनिक्खेवो । दव्वे चित्तयरसुआ, भावेसु बहू उदाहरणा ॥१०५६॥

सच्चारित्रस्य सत्त्वस्य पश्चात्तापः—स्वप्रत्यक्षं जुगुप्सा निन्दा, तस्य नामादिश्चतुष्को निक्षेपः । द्रव्ये चित्रकरदारिका—चित्रकारस्य नगातिख्यातिप्रसिद्धस्य प्रिया कनकमालाख्या, प्राग्भवे तस्यैव जितशत्रुनामनृपस्य कनकमञ्जरीनाम्ना राज्ञोऽभीष्टाऽपि निजकं स्ववेषं परिधाय सदा स्वं निनिन्द । भावे बहूदाहरणानि, तानि च योगसङ्ग्रहे वक्ष्यन्ते । निन्दालक्षणं चेदं—'जं । दुट्ठु कयं वा । दुट्ठु कारियं दुट्ठु अणुमयं हत्ति । अंतो अंतो डज्झइ पच्छातावेण वेवंतो । १ ।' अन्तः अन्तः मध्ये मध्ये दहति पश्चातापेन वेपमानः ॥ १०५६ ॥ 'गर'

गरहावि तहाजाईअमेव नवरं परप्पगासणया । दव्वंमि मरुअनायं, भावे साहू उदाहरणम् ॥१०५७॥

गर्हापि तथाजातीयैव निन्दाजातीयैव, नवरमयं भेदः, परप्रकाशनया गर्हा स्यात् । द्रव्यगर्हायां मरुकस्य ज्ञातं—दृष्टान्तः, यथैको मरुक उपाध्यायसूने—अहं स्वप्ने स्नुषया समं उषित इति । 'भावे साहू उदाहरणं'ति भावेऽप्रमत्तः साधु-

निन्दा-निक्षेपोदाहरणानि ॥

रुदाहरणं–' गंतूण गुरुसगासं काऊण य अंजलिं विणयमूलं । जह अप्पणो तह परे जाणावण एस गरिहा उ । १ । ' यथा आत्मना पापस्य ज्ञानं तथा परस्मिन् ज्ञापनं ॥ १०५७ ॥ किं निन्दामि ? किं गर्हे ? इत्यत आह–' आत्मानं ' अतीतसावद्यकारिणं, तथा तं 'व्युत्सृजामि ' विशेषेण उत्सृजामीति त्यजामीति व्युत्सर्गः, स नामादिभेदाच्चतुर्द्धा, तत्र ' दव्व '

**दव्वविउस्सगे खलु, पसन्नचंदो भवे उदाहरणं। पडिआगयसंवेगो, भावंमिवि होइ सो चेव ॥१०५८॥**

द्रव्यव्युत्सर्गो गणोपधिदेहान्नादित्यागः आर्त्तादिध्यानैः कायोत्सर्गो वा, तत्र प्रसन्नचन्द्रो युध्यमान उदाहरणं, स एव प्रत्यागतसंवेगः पुनरपि प्राप्तसंवेगो भावोत्सर्ग उदाहरणं भवति ॥ १०५८ ॥ अथ निगमयति ' साव '

**सावज्जजोगविरओ, तिविहं तिविहेण वोसिरिअ पावं। सामाइअमाईए, एसोऽणुगमो परिसमत्तो॥१०५९॥**

त्रिविधेन करणेन त्रिविधं पापं व्युत्सृज्य, सामायिकादौ–सामायिकारम्भे, मोऽलाक्षणिकः, कर्त्ता सावद्ययोगविरतः स्यात् । एषोऽनुगमः–सूत्रपाठः परिसमाप्तः ॥ १०५९ ॥ अथ नयाः ' विज्जा '

**विज्जाचरणनएसुं, सेस समोआरणं तु कायव्वं। सामाइअनिज्जुत्ती, सुभासिअत्था परिसमत्ता ॥१०६०॥**

विद्याचरणनययोर्ज्ञानक्रियानययोर्मध्ये शेषाणां नैगमादीनां समवतारणं कर्त्तव्यं । तुशब्दात्तौ ज्ञानक्रियानयौ वाच्यौ इति विशिनष्टि । सामायिकनिर्युक्तिः सुभाषितार्था सुष्ठूक्तार्था ॥ १०६० ॥ अथ ज्ञानक्रियानयावाह ' नायं '

**नायंमि गिण्हिअव्वे, अगिण्हिअव्वम्मि चेव अत्थंमि । जइअव्वमेव इअ जो, उवएसो सो नओ नामं ॥**

ज्ञानक्रियानयौ ॥

ग्रहीतव्ये उपादेयेऽग्रहीतव्ये हेये चैवार्थे ज्ञाते सति यतितव्यं मुक्त्यर्थे यत्नः कार्यः, अतो ज्ञानमेव मुक्त्यङ्गं अज्ञानात् प्रवृत्तस्य मुक्त्यभावात्, यतः ' पढमं नाणं तओ दया० ' ' गीयत्थो य विहारो० ' एतदेव गाथादलं क्रियानयार्थे याख्यायते । ज्ञाने ग्रहीतव्येऽग्रहीतव्ये च यतितव्यमेव क्रियायां, ततः क्रियैव मुक्त्यङ्गं अक्रियस्य मुक्त्यभावात्, ' यतः क्रियैव फलदा पुंसां न ज्ञानं फलदं मतं । न हि स्त्रीभक्ष्यभोगज्ञो ज्ञानादेव सुखी भवेत् ।१। ' तथा ' सुबहुं पि सुयमहीयं ' इति योऽन्याऽन्यनिमार्गेनोपदेशः स नयो नाम, ज्ञाननयः क्रियानयश्चेत्यर्थः ॥ १०६१ ॥ अथाचार्यः ' सवे '

सव्वेसिंपि नयाणं, बहुविहवत्तव्वयं निसामित्ता । तं सव्वनयविसुद्धं, जं चरणगुणट्ठिओ साहू ॥१०६२॥

सर्वेषामपि नयानां बहुविधां वक्तव्यतां निशम्य तत्सर्वनयानां विशुद्धं सम्मतं यच्चरणगुणस्थितः साधुः, चरणं चारित्रं गुणो ज्ञानं तयोः स्थितः साधुरिति मोक्षसाधकः, यतः ' संजोगसिद्धी ' इत्यादि ॥१०६२॥ इति सामायिकनिर्युक्तिः सम्पूर्णा ।

नित्यं( यस्मात् )जगाद भगवान् सामायिकमेव निरूपमोपायं । शारीरमानसानेकदुःखनाशस्य मोक्षस्य ॥ १ ॥

इति श्रीमाणिक्यशेखरसूरिविरचितायामावश्यकनिर्युक्तिदीपिकायां सामायिकाध्ययनं समाप्तम् ।

---

अथ चतुर्विंशतिस्तवः, यच्चूर्णिः–' सामायिकव्यवस्थितेन पच्छकालं उक्कित्तणादीणिवि अवस्स कायव्वाणि ' तत्रानन्तराध्ययने सावद्ययोगविरतिरूपं सामायिकमुक्तं इह तु तदुपदेष्टृणामर्हतामुत्कीर्त्तनं कार्यमित्यस्याध्ययनस्य चत्वार्यनुयोगद्वाराणि स्युस्तत्रोपक्रमः सामायिकाध्ययनवद्ज्ञेयो निक्षेपस्तु त्रिधा ओघनिष्पन्नः, नामनिष्पन्नः, सूत्रालापकनिष्पन्नश्च । तत्रौ-

घनिष्पन्नोऽध्ययनमिति । नामनिष्पन्नस्त्वेवं ' चउ '

**चउवीसगत्थयस्स उ, णिक्खेवो होइ णामणिप्फण्णो। चउवीसगस्स छक्को, थयस्स उ चउविहो होइ ॥**

चतुर्विंशतिस्तवाध्ययनस्य नाम्ना निष्पन्नो निक्षेपो न्यासो भवति, यथा चतुर्विंशतिस्तव इति। तत्रापि चतुर्विंशतेः शब्दस्य षट्कः षड्विधः, स्तवस्य तु चतुर्विधो निक्षेपः ॥ १०६३ ॥ तद्यथा ' नामं '

**नामं ठवणा दविए, खित्ते काले तहेव भावे अ। चउवीसगस्स एसो, निक्खेवो छविहो होइ ॥ १९१ ॥**

नामचतुर्विंशतिः, स्थापनाचतुर्विंशतिरित्यादि । तत्र नामचतुर्विंशतिरिति यस्य जीवस्याजीवस्य वा चतुर्विंशतिरिति नाम क्रियते, चतुर्विंशतीतिशब्दो वा । स्थापनाचतुर्विंशतिरक्षादावियं चतुर्विंशतिरिति स्थापना । द्रव्यचतुर्विंशतिर्द्रव्याणां सचित्ताचित्तमिश्ररूपाणां द्विपदचतुष्पदापदरूपाणां वा चतुर्विंशतिः। क्षेत्रचतुर्विंशतिर्भरतादीनां । एवं काले समयादीनां, भावे कृष्णादिपर्यायाणां । इह सचित्तद्विपदतीर्थकृद्द्रव्यचतुर्विंशत्याऽधिकारः ॥ १९१ ॥ ' नामं '

**नामं ठवणा दविए, भावे अ थयस्स होइ निक्खेवो। दव्वथओ पुप्फाई, संतगुणुक्कित्तणा भावे ॥१९२॥**

नामस्तवः, स्थापनास्तव इत्यादि । आद्यौ स्पष्टौ । द्रव्यस्तवः पुष्पादिः, कारणे कार्योपचारात्, पुष्पादिभिः पूजा द्रव्यस्तवः इत्यर्थः । इह चूर्णि(र्णौ) 'आदिग्रहणेण वत्थगंधालंकारादिग्रहणं'। भावस्तवः सद्गुणोत्कीर्त्तना–सतां विद्यमानानां गुणानां कीर्त्तना कथना ॥ १९२ ॥ ' दव्व '

दव्वथओ भावथओ, दव्वथओ बहुगुणत्ति बुद्धि सिआ। अनिऊणमइवयणमिणं, छज्जीवहिअं जिणा बिंति ॥

द्रव्यस्तवो भावस्तवश्च द्वावपि पुण्यार्थमधिकृतौ। तथापि 'द्रव्यस्तवो बहुगुणः' एवं चेद्बुद्धिः स्यात्, इदं अनिपुणमतीनां वचनं यतो जिनाः षड्जीवहितं ब्रुवते ॥ १९३ ॥ तथा 'छजीव'

छज्जीवकायसंजमु, दव्वथए सो विरुज्झई कसिणो। तो कसिणसंजमविऊ, पुप्फाईअं न इच्छंति ॥१९४॥

षड्जीवनिकायानां संयमः—संघट्टनादित्यागः, द्रव्यस्तवे स कृत्स्नः पूर्णो विरुध्यते, ततः कृत्स्नसंयमविदः साधवः पुष्पादिकं द्रव्यस्तवं नेच्छन्ति ॥ १९४ ॥ भाष्यं 'अक'

अकसिणपवत्तगाणं, विरयाविरयाण एस खलु जुत्तो। संसारपयणुकरणो, दव्वथए कूवदिट्ठंतो ॥१९५॥

अकृत्स्नप्रवर्त्तकानां अधिकारात्संयमे, तत एव विरताविरतानां एष द्रव्यस्तवो युक्तः। संसारस्य प्रतनुकरणः पतनुकरः शुभानुबन्धित्वात् प्रभूततरनिर्जराहेतुत्वाच्च। तत्र द्रव्यस्तवे कूपदृष्टान्तो यथा—तृषामलाद्यार्त्तो लोकः कूपं खनन् तृषादिना विशेषतो बाध्यते तथापि तदुत्थाम्भसैव तृषाद्यपनयत्यन्ये च सुखिनः स्युः, एवमिहापि यद्यपि सावद्यं तथापि तत एषां धर्मध्यानं ॥ १९५ ॥ अथ सूत्रालापकनिष्पन्ननिक्षेपस्यावसरः, स चानुगमे सति स्यात्, अनुगमो द्विधा, सूत्रानुगमो निर्युक्त्यनुगमश्च। तत्र निर्युक्त्यनुगमस्त्रिधा—निक्षेपोपोद्घातसूत्रस्पार्शिकभेदात्, तत्राद्योऽनुगतो वक्ष्यते च, द्वितीयस्तु 'उद्देसे निद्देसे' इत्यादि गाथाभ्यां ज्ञेयः। तृतीयस्तु सूत्रानुगमे सति स्याद्यतः 'सुत्तं सुत्ताणुगमो सुत्तालावगकओ य निक्खेवो।

भावस्तवाधिक्यम् ॥

सुत्तप्फासियनिज्जुत्ति नया य समगं तु वच्चंति । १ ।' सूत्रं, सूत्रानुगमः, सूत्रालापककृतश्च निक्षेपः, सूत्रस्पर्शिकनिर्युक्ति-र्नयाश्च समकमेव व्रजन्ति चलन्तीत्यर्थः । एषां विषयविभागः पुनरेवं ' होइ कयत्थो वोत्तुं सपयच्छेयं सुयं सुयाणुगमो । सुत्तालावगनासो नामाइन्नासविणियोगं । १ । सुत्तप्फासियनिज्जुत्तिनियोगो सेसओ पयत्थादी । पायं सो च्चिय नेगमनयाइमय-गोयरो भणिओ । २ ।' श्रुतानुगमः सपदच्छेदं पदविच्छेदसहितं श्रुतं उक्त्वा कृतार्थो भवति । सूत्रालापकस्य न्यासो निक्षेपः नामादिन्यासस्य विनियोगं व्यापारं कृत्वा कृतार्थः स्यात् । शेषं पदार्थादिः पदार्थपदविग्रहादिः सूत्रस्पर्शिनिर्युक्तेर्नियोगो व्यापारः स्यात् । स एव प्रायो नैगमनयादीनां मतस्य गोचरः । सूत्रानुगमेऽस्खलितादिगुणोपेतं सूत्रमुच्चार्यं-

**लोगस्सुज्जोयगरे, धम्मतित्थयरे जिणे । अरिहंते कित्तइस्सं, चउवीसंपि केवली ॥ १ ॥ सूत्रम्**

' लोगस्सुज्जोयगरे ' इत्यादि-लोकस्योद्योतकरान्, धर्म्मप्रधानं तीर्थं कुर्वन्तीति धर्म्मतीर्थकरान्, जिनान् रागद्वेषजेतॄन्, अर्हतः कीर्त्तयिष्यामि-नामभिः स्तोष्ये, चतुर्विंशतिमपि केवलिनः ॥ १ ॥ अत्र निर्युक्तिः ' णामं '

**णामं[1] ठवणा[2] दविए[3], खित्ते[4] काले[5] भवे[6] अ भावे[7] अ । पज्जव[8]लोगे अ तहा, अट्ठविहो लोगणिक्खेवो ॥१०६४॥**

लोक्यते बुद्ध्यते तैस्तैः पर्यायैरिति लोकः, सोऽष्टधा नामलोक इत्यादिः पर्यवलोकान्तः ॥१०६४॥ भाष्यकृद् द्रव्यादि-लोकान् व्याख्याति ' जीव '

**जीवमजीवे रूवमरूवी, सपएसमप्पएसे अ । जाणाहि दव्वलोगं, णिच्चमणिच्चं च जं दव्वं ॥ १९६ ॥**

जीवाजीवान् रूप्यरूपिभेदान् सप्रदेशाप्रदेशभेदानित्येवंभूतं द्रव्यलोकं जानीहि । तत्र सकर्म्माणो जीवाः, पुद्गलाश्च रूपिणः । अन्ये जीवा धर्म्माधर्म्माकाशाः कालश्चारूपिणः । एकैकाणवः कालश्चाप्रदेशाः, एकैकाणून् कालं च विना सर्वद्रव्याणि सप्रदेशानि. द्रव्यमेव लोको द्रव्यलोकस्तं जानीहि । अस्यैव व्यापकं धर्म्मं दर्शयति–नित्यानित्यं च यद् द्रव्यं सर्वमपि, नयवशादभिलाप्याऽनभिलाप्यादि, स द्रव्यलोकः ॥ १९६ ॥ स्थापना

जीवाजीवयोर्नित्यानित्यताम्॥

| |
|---|
| संसारिजीवा रूपी १ |
| नारकादिपर्यायेण |
| द्व्यादिसमयेषु समप्रदेशः नारकादौ आद्यसमयोऽन-घोऽप्रदेशः । |
| जीवो द्रव्यतया नित्यः पर्यायतोऽनित्य । |
| अरूपी सिद्ध स द्वितीया-दिसमये समप्रदेशः । |
| आद्यसमयसिद्धोऽनन्तर-सिद्धोऽप्र० । |
| द्रव्यार्थतया नित्यः पर्या-यार्थतयाऽनित्यः |
| एवं जीवानाद्रित्योक्त्वा अथाजीवाः |
| रूपी पुद्गलास्तिकाय. द्व्य-णुकादि. द्विप्रदेशावगाढा-दिः द्व्यादिसमयस्थितिः द्व्यादिगुणकृष्णादि. सप्र० |
| अणुः एकप्रदेशावगाढ. एक समयस्थिति. एक-गुणकृष्णादिरप्रदेश. । |
| अरूपिणो धर्माधर्माका-शास्तिकाया. समप्रदेशा, कालोऽप्रदेश, द्रव्यतो नित्याः पर्यायतोऽनित्याः |

अथ जीवाजीवयोर्नित्यानित्यतामाह ' गइ '

गइ सिद्धा भविआया, अभविअ पुग्गल अणागयद्धा य । तीअद्ध तिन्नि काया, जीवाजीवट्ठिई चउहा ॥१९७॥

नामागिकाप्पगने इत्र ज्ञातव्येया, किन्तु जीवाजीवयोर्द्रव्यत्वेन नित्यत्वेऽपि गत्यादिपर्यायियोगाच्चतुर्विधा स्थितिः स्यात् ।

जीवा गत्या, सिद्धत्वेन, भव्यत्वेन, अभव्यत्वेन च । अजीवास्तु पुद्गलापुद्गलत्वेन, अनागतकालाः अतीतकालाः । त्रयो धर्म्माध-र्म्माकाशास्तिकायाः स्वस्वरूपेण, क्रमात् सादिसान्ताः, सादिअनन्ताः, अनादिसान्ताः, अनाद्यनन्ताः जीवाः ॥१९७॥ 'आगा'

**आगासस्स पएसा, उड्ढं च अहे अ तिरियलोए अ । जाणाहि खित्तलोगं, अणंत जिणदेसिअं सम्मं ॥१९८॥**

ऊर्ध्वमधश्च तिर्यग्लोके च ये आकाशस्य प्रकृष्टा देशा विभागाः प्रदेशाः सन्ति तं क्षेत्रलोकं जानीहि । अनन्तमित्यत्र प्राकृतत्वादनुस्वारलोपः, जिनैर्देशितं उक्तं सम्यक् ॥ १९८ ॥ ' सम '

**समयावलिअमुहुत्ता, दिवसमहोरत्तपक्खमासा य । संवच्छरजुगपलिआ, सागरओसप्पि परिअट्टा ॥१९९॥**

सामायिकाध्ययनवत् समयादिकः कालः काललोकः इति शेषः ॥ १९९ ॥ ' णेर '

**णेरइअदेवमणुआ, तिरिक्खजोणीगया य जे सत्ता । तंमि भवे वट्टंता, भवलोगं तं विआणाहि ॥ २०० ॥**

नैरयिकाद्यास्तिर्यग्योनिगता ये सत्त्वास्ते तस्मिन् भवे वर्त्तमाना यमनुभावमनुभवन्ति तं भवलोकं, भव एव लोको भवलोकः ॥ २०० ॥ ' ओद '

**ओदइए ओवसमिए[2], खइए[3] अ तहा खओवसमिए[4] अ । परिणामि[5] सन्निवाए[6], अ छव्विहो भावलोगो उ । २०१।**

औदयिकः १ औपशमिकः २ क्षायिकः ३ क्षायोपशमिकः ४ पारिणामिकः ४ सांनिपातिकः ६ एष षड्विधो भावलोकः । तत्र कर्म्मण उदयेन निर्वृत्त औदयिकः, एवं उपशमेन औपशमिकः, क्षयेण क्षायिकः, उदितकर्म्मांशस्य क्षयेणानुदितस्योपशमेन

न क्षायोपशमिकः, परिणाम एव पारिणामिकः, संनिपातो द्व्यादिभावानां संयोगस्तत्र भवः सांनिपातिकः, स चौघतोऽनेकभेदो अविरुद्धास्तु १५ भेदाः, उक्तं च-' ओदइअखओवसमे परिणामेक्केक्को गइचउक्केऽवि । खयजोगेण वि चउरो तदभावे उवसमेणंपि । १ । उवसमसेढी एक्को केवलिणोऽवि य तहेव सिद्धस्स । अविरुद्धसंनिवाइय भेदा एमेव पन्नरस । २ ।' तत्रौदयिकक्षायोपशमिकपारिणामिक इत्येवं भावत्रयीरूप एकको भङ्गो गतिचतुष्केऽपि चिन्त्यः, यथा-नरकगतौ यथा-औदयिकः, क्षायोपशमिकः, पारिणामिकः, नारकाणामौदयिको भावो नरकगत्यादिः, क्षायोपशमिकस्तु पञ्चेन्द्रियतादि, पारिणामिकस्तु जीवत्वादिरेवं भावत्रयगतो नरकगतौ भङ्गः १, एवं शेषगतिष्वपि, ततो भङ्गाः ४ जाताः, तथैव एवं भावत्रयकृताः चत्वारो भङ्गाः, क्षायिकभावयोगे भावचतुष्केऽपि ४ भङ्गाः स्युः, क्षायिकभाववतां क्षायिकसम्यग्दृष्टीनां सर्वगतिष्वपि सम्भवात् , एवं पूर्वभङ्गाः ८, तदभावे क्षायिकाभावे औपशमिकेनापि भङ्गाः ४ प्राप्याः, आदावेव सम्यक्त्वाप्तौ चतुर्गतिष्वपि औपशमिकभावभावात् एवं १२ भेदाः । तथा दर्शनसप्तकं क्षपयित्वोपशमश्रेणीं कुर्वत औदयिकादिपञ्चभावकृतो भङ्गः १ स्यात्, केवलिनस्त्वौदयिकक्षायिकपारिणामिकैः ३ भावैः कृतः क्षायोपशमिकस्तस्य नास्त्यतीन्द्रियाः केवलिन इत्युक्तेः, सिद्धस्यापि क्षायिकपारिणामिकभावकृतः १, इति सर्वे भङ्गाः १५ अविरुद्धसांनिपातिकस्य, तत्र द्वियोगे १ त्रियोगे ५ चतुर्योगे ८ पञ्चयोगे १ । विरुद्धसांनिपातिकभेदाः २६ स्युः यथा-औदयिकादिभावपञ्चकस्य द्विकसंयोगे १०, त्रिकसंयोगेऽपि १० चतुष्कयोगे ५, पञ्चयोगे १ एते २६ विरुद्धा उच्यन्ते, क्वापि प्राप्यत्वेन शेषाणामप्राप्यत्वेन च विरुद्धत्वात् । तेषु पण्णामेव विस्तारितानां प्रस्तुताः १५ उक्तरीत्याऽप्यत्वादविरुद्धाः, तत्र उक्तं-'अविरुद्धसंनिवाइय' त्ति एकैको भावः सर्वभावाभावश्च जीवानां न भवत्येव । स्थापना—

भावलोके भङ्गाः ॥

| | | |
|---|---|---|
| औद० | औप० | १ |
| औद० | क्षायो० | २ |
| औद० | क्षायि० | ३ |
| औद० | पारि० | ४ |
| औप० | क्षायो० | ५ |
| औप० | क्षायि० | ६ |
| औप० | पारि० | ७ |
| क्षायो० | क्षायि० | ८ |
| क्षायो० | पारि० | ९ |
| क्षायि० | पारि० | १० |

द्विकसयोगे १०

| | | | |
|---|---|---|---|
| औद० | औप० | क्षायो० | १ |
| औद० | औप० | क्षायि० | २ |
| औद० | औप० | पारि० | ३ |
| औद० | क्षायो० | क्षायि० | ४ |
| औद० | क्षायो० | पारि० | ५ |
| औद० | क्षायि० | पारि० | ६ |
| औप० | क्षायो० | क्षायि० | ७ |
| औप० | क्षायो० | पारि० | ८ |
| औप० | क्षायि० | पारि० | ९ |
| क्षायो० | क्षायि० | पारि० | १० |

त्रिकसंयोगे १०

| | | | | |
|---|---|---|---|---|
| औद० | औप० | क्षायो० | क्षायि० | १ |
| औद० | औप० | क्षायो० | पारि० | २ |
| औद० | औप० | क्षायि० | पारि० | ३ |
| औद० | क्षायो० | क्षायि० | पारि० | ४ |
| औप० | क्षायो० | क्षायि० | पारि० | ५ |

चतुर्योगे ५

औद० औप० क्षायो० क्षायि० पारि०

पंचयोगे १ एवं २६

तेषु क्षायिकपारि० इति भङ्गः सिद्धस्य, औद० क्षायिक पारि०, औद० क्षायो० पारि० एतौ भङ्गौ स्तः, एकः केवलिन. एकः छद्मस्थस्य । औद० औप० क्षायो० पारि० १, औद० क्षायो० क्षायि० पारि० १, एतौ छद्मस्थस्य, पञ्चयोगे १ छद्मस्थस्य । एवं षड्भङ्गा अविरुद्धास्तेषु गतिचतुष्के ३ स्युः यथा त्रियोगछद्मस्थस्य एको भङ्गः, चतुर्योगे द्वौ भङ्गौ, एते त्रयो गतिचतुष्केन गुणिताः १२ ।

॥ २०१ ॥ 'तिव्वो'

तिव्वो रागो अ दोसो अ, उइन्नो जस्स जंतुणो। जाणाहि भावलोअं, अणंतजिणदेसिअं सम्मं ॥२०२॥

निव्रो रागो अ दोसो अ, उइन्नो जस्स जंतुणो। जाणाहि भावलोअं, अणंतजिणदेसिअं सम्मं। तं जन्तुं तेन रागद्वेषरूपभावेन लोक्यत्वात् भावलोकं जानीहि । अनन्ते-

यस्य जन्तोरुदीर्णो उदयं प्राप्तः

निनैः ॥ २०२ ॥ 'दव्व'

दव्वगुणखित्तपज्जवे भवाणुभावे अ भावपरिणामे। जाण चउव्विहमेअं, पज्जवलोगं समासेणं ॥ २०३ ॥

द्रव्यस्य गुणा वर्णादयस्तथा क्षेत्रस्य पर्याया अगुरुलघवो भरतादिभेदा वा ऊर्ध्वलोकादयः भवस्य नारकादेरनुभावस्ती-

व्रदुःखादिः, उक्तं च–'अच्छिनिमीलियमित्तं नत्थि सुहं दुक्खमेव अणुबद्धं। नरए नेरइयाणं अहोनिसिं पच्चमाणाणं। १।'

अक्षिनिमीलितमात्रमपि सौख्यं नास्ति, अनुबद्धं सततं दुःखमेवास्ति। 'असुभा उव्वियणिज्जा सद्दरसा रूवगंधफासा य। नरए

नेरइयाणं दुक्कयकम्मोवलित्ताणं। २।' नरके शब्दादयोऽशुभा वेदनीयाः इत्यादि। तथा भावानां जीवाजीवानां परिणामस्तेन

तेन सुरनारकादिभावेन कुण्डलकलशादिभावेन च परिणमनमित्यर्थः, जानीहि ॥ २०३ ॥ द्रव्यगुणादीनाह 'वन्न'

वन्नरसगंधसंठाणफाससट्ठाणगइवन्नभेए अ। परिणामे अ बहुविहे, पज्जवलोगं विआणाहि ॥ २०४ ॥

वर्णाः कृष्णादयः ५, रसास्तिक्तादयः ५, लवणस्य मधुररसत्वेनागणितत्वात्। गन्धौ सुगन्धो दुर्गन्धश्च। संस्थानानि परिमण्ड-

लवृत्तत्र्यस्रचतुरस्रायतभेदात् ५, स्पर्शा मृदुखरस्निग्धरूक्षशीतोष्णगुरुलघुभेदाः ८। स्थानमवगाहनारूपं, तच्चैकप्रदेशाद्यनेकधा,

पर्याय-
लोकः ॥

गती द्वे, अस्पृशद्गतिः, स्पृशद्गतिश्च। तत्र इह भवे जीवो यावत्स्वाकाशप्रदेशेष्ववगाढस्तावत एव प्रदेशानूर्ध्वमपि ऋजुश्रेण्याऽवगाहमानस्य प्रदेशान्तराणि समयान्तरं चास्पृशतो या गतिः सा अस्पृशद्गतिः, सा तु सिद्धानामेव। एतल्लक्षणद्वयाभावे स्पृशद्गतिः सा सर्वसंसारिणामेव स्यात्। वर्णादीनां भेदा एकगुणकृष्णादयः। इयता 'दवगुण' इति व्याख्यातं, परिणामांश्च बहुविधान् श्वेतवर्णादिसुगन्धादिपुद्गलानां कृष्णवर्णादिदुर्गन्धादिपुद्गलानां भावपरिणमनरूपाननेन तु भावपरिणामेति द्वारं। शेषद्वारद्वयं तु प्राग्व्याख्यातमेव। पर्याय एव लोकः पर्यायलोकस्तं ॥ २०४ ॥ 'आलु'

**आलुक्कइ अ पलुक्कइ, लुक्कइ संलुक्कई अ एगट्ठा। लोगो अट्ठविहो खलु, तेणेसो वुच्चई लोगो ॥**

आलोक्यते इत्यालोकः, प्रलोक्यते इति प्रलोकः, संलोक्यते इति संलोकः, एकार्थिका एते शब्दाः यतश्चालोक्यते इत्यादि, तेन लोकशब्दार्थकथनेनैष नामलोकादिरष्टविधः खलु लोकः सामान्यतो लोक उच्यतेऽत्र लोकोद्योतकरत्वे सर्वे लोका अधिक्रियन्ते ॥ १०६५ ॥ अथोद्योतमाह 'दुवि'

**दुविहो खलु उज्जोओ, नायवो दवभावसंजुत्तो। अग्गी दव्वुज्जोओ, चंदो सूरो मणी विज्जू॥१०६६॥**

उद्योत्यते प्रकाश्यते वस्त्वनेनेत्युद्योत उद्योतकारी वस्तुविशेष इत्यर्थः, स द्विधा द्रव्यभावाभ्यां संयुक्तः द्रव्योद्योतो भावोद्योतश्चेति। अग्निर्द्रव्योद्योतः, 'विज्जू' विद्युत्, अग्न्यादीनां घटादिद्रव्योद्योतनेऽपि तद्गतनित्यानित्यादिसम्यक्स्वरूपानुद्योतनात् ॥ १०६६ ॥ 'नाणं'

धर्म-निक्षेपाः ॥

नाणं भावुज्जोओ जह भणियं सव्वभावदंसीहिं। तस्स उवओगकरणे, भावुज्जोअं विआणाहि ॥१०६७॥

यथा भगवद्भिः सर्वदर्शिभिर्वस्तुस्वरूपं भणितं, तथा तस्य यद्ज्ञानं स भावोद्योतः, सम्यग् वस्तुबोधात् । तदपि नाविशेषेणोद्योतः, किन्तु तस्य ज्ञानस्योपयोगकरणे सति भावोद्योतं जानीहि, कोऽर्थः–अर्हत्प्रणीतवस्तुस्वरूपोपयोगे ज्ञातुर्भावोद्योतत्वस्य न करणेऽन्यत्र उल्लाह ॥ १०६७ ॥ 'लोग'

लोगस्सुज्जोअगरा, दव्वुज्जोएण न हु जिणा हुंति। भावुज्जोअगरा पुण, हुंति जिणवरा चउव्वीसं॥१०६८॥

भावोद्योतेनोद्योतकरा भावोद्योतकरा मध्यमपदलोपी समासः ॥ १०६८ ॥ 'दव्व'

दव्वुज्जोउज्जोओ, पगासई परिमियम्मि खित्तंमि। भावुज्जोउज्जोओ, लोगालोगं पगासेइ ॥ १०६९ ॥

द्रव्योद्योतानां अर्कादीनां उद्योतः प्रकाशः परिमिते क्षेत्रे वस्तु प्रकाशयति, 'पहासई'ति वा पाठः प्रभासते दीप्यते इति, भावोद्योतस्य ज्ञानस्योद्योतो लोकालोकं ॥ १०६९ ॥ अथ करशब्दं धर्मतीर्थकरानित्यत्र वक्ष्यमाणत्वात् मुक्त्वा धर्मं व्याख्याति 'दुह'

दुह दव्वभावधम्मो, दव्वे दव्वस्स दव्वमेवऽहवा। तित्ताइसभावो वा गम्माइत्थी कुलिंगो वा ॥१०७०॥

धर्मो द्विविधो द्रव्यतो भावतश्च । तत्र द्रव्ये जीवादौ धर्मो ज्ञानादिर्द्रव्यधर्मः, द्रव्यस्यानुपयुक्तस्य धर्मोऽनुष्ठानं द्रव्यमेव धर्मो वा द्रव्यधर्मो धर्मास्तिकायः, तिक्तादिर्वा द्रव्यस्य स्वभावो द्रव्यधर्मः, गम्यादिर्वा स्त्रीविषयो द्रव्यधर्मः ।

गती द्वे, अस्पृशद्गति, स्पृशद्गतिश्च। तत्र इह भवे जीवो यावत्स्वाकाशप्रदेशेष्ववगाढस्तावत एव प्रदेशानूर्ध्वमपि ऋजुश्रेण्याऽवगाहमानस्य प्रदेशान्तराणि समयान्तरं चास्पृशतो या गतिः सा अस्पृशद्गतिः, सा तु सिद्धानामेव। एतल्लक्षणद्वयाभावे स्पृशद्गतिः सा सर्वसंसारिणामेव स्यात्। वर्णादीनां भेदा एकगुणकृष्णादयः। इयता 'दव्वगुण' इति व्याख्यातं, परिणामांश्च बहुविधान् श्वेतवर्णादिसुगन्धादिपुद्गलानां कृष्णवर्णादिदुर्गन्धादिपुद्गलानां भावपरिणमनरूपाननेन तु भावपरिणामेति द्वारं। शेषद्वारद्वयं तु प्राग्व्याख्यातमेव। पर्याय एव लोकः पर्यायलोकस्तं ॥ २०४ ॥ 'आलु'

आलुक्कइ अ पलुक्कइ, लुक्कइ संलुक्कई अ एगट्ठा। लोगो अट्ठविहो खलु, तेणेसो वुच्चई लोगो ॥

आलोक्यते इत्यालोकः, प्रलोक्यते इति प्रलोकः, संलोक्यते इति संलोकः, एकार्थिका एते शब्दाः यतश्चालोक्यते इत्यादि, तेन लोकशब्दार्थकथनेनैष नामलोकादिरष्टविधः खलु लोकः सामान्यतो लोक उच्यतेऽत्र लोकोद्योतकरत्वे सर्वे लोका अधिक्रियन्ते ॥ १०६५ ॥ अथोद्योतमाह 'दुवि'

दुविहो खलु उज्जोओ, नायव्वो दव्वभावसंजुत्तो। अग्गी दव्वुज्जोओ, चंदो सूरो मणी विज्जू॥१०६६॥

उद्योत्यते प्रकाश्यते वस्त्वनेनेत्युद्योत उद्योतकारी वस्तुविशेष इत्यर्थः, स द्विधा द्रव्यभावाभ्यां संयुक्तः द्रव्योद्योतो भावोद्योतश्चेति। अग्निर्द्रव्योद्योतः, 'विज्जू' विद्युत्, अग्न्यादीनां घटादिद्रव्योद्योतनेऽपि तद्गतनित्यानित्यादिसम्यक्स्वरूपानुद्योतनात् ॥ १०६६ ॥ 'नाणं'

नाणं भावुज्जोओ जह भणियं सव्वभावदंसीहिं। तस्स उवओगकरणे, भावुज्जोअं विआणाहि ॥१०६७॥

यथा सर्वभावदर्शिभिर्वस्तुस्वरूपं भणितं, तथा तस्य यद्ज्ञानं स भावोद्योतः, सम्यग् वस्तुबोधात् । तदपि नाविशेषेणो-द्योतः, किन्तु तस्य ज्ञानस्योपयोगकरणे सति भावोद्योतं जानीहि, कोऽर्थः–अर्हत्प्रणीतवस्तुस्वरूपोपयोगे ज्ञातुर्भावोद्योत-त्वम्, न त्वनुपयोगेऽपीत्याह ॥ १०६७ ॥ 'लोग'

लोगस्सुज्जोअगरा, दव्वुज्जोएण न हु जिणा हुंति। भावुज्जोअगरा पुण, हुंति जिणवरा चउवीसं॥१०६८॥

भावोद्योतेनोद्योतकरा भावोद्योतकरा मध्यमपदलोपी समासः ॥ १०६८ ॥ 'दव्वु'

दव्वुज्जोउज्जोओ, पगासई परिमियम्मि खित्तंमि। भावुज्जोउज्जोओ, लोगालोगं पगासेइ ॥ १०६९ ॥

द्रव्योद्योतानां अर्कादीनां उद्योतः प्रकाशः परिमिते क्षेत्रे वस्तु प्रकाशयति, 'पहासई'ति वा पाठः प्रभासते दीप्यते इति, भावोद्योतस्य ज्ञानस्योद्योतो लोकालोकं ॥ १०६९ ॥ अथ करशब्दं धर्म्मतीर्थकरानित्यत्र वक्ष्यमाणत्वात् मुक्त्वा धर्मं व्याख्याति 'दुह'

दुह दव्वभावधम्मो, दव्वे दव्वस्स दव्वमेवऽहवा। तित्ताइसभावो वा गम्माइत्थी कुलिंगो वा ॥१०७०॥

धर्मो द्विविधो द्रव्यतो भावतश्च । तत्र द्रव्ये जीवादौ धर्म्मो ज्ञानादिर्द्रव्यधर्म्मः, द्रव्यस्यानुपयुक्तस्य धर्म्मोऽनुष्ठानं द्रव्यमेवाऽथवा द्रव्यधर्म्मो धर्म्मास्तिकायः, तिक्तादिर्वा द्रव्यस्य स्वभावो द्रव्यधर्म्मः, गम्यादिर्वा स्त्रीविषयो द्रव्यधर्म्मः ।

तत्र केषांश्चिन्मातुलदुहिता गम्या भोग्या अन्येषामगम्येति । तथा कुलिङ्गो वा कुतीर्थिकधर्म्मो द्रव्यधर्म्मः ॥ १०७० ॥ 'दुह'

**दुह होइ भावधम्मो, सुअचरणे वा सुअंमि सज्झाओ । चरणंमि समणधम्मो, खंतीमाई भवे दसहा ॥**

भावधर्म्मो द्विधा श्रुतधर्म्मश्चरणधर्म्मश्च । श्रुते इति श्रुतविषयो धर्म्मः स्वाध्यायः सर्वं श्रुतज्ञानं । चरणे इति .चरणविषयो धर्म्मः श्रमणधर्म्मः क्षान्त्यादिरूपो दशधा भवेत् ॥ १०७१ ॥ अथ पाठान्तरं 'दुविहो य होइ धम्मो दव्वधम्मो य भावधम्मो य । धम्मत्थिकाय दव्वे दव्वस्स व जस्स जो भावो । १ । भावंमि होइ दुविहो सुयधम्मो खलु चरित्तधम्मो य । सुयधम्मो सज्झाओ चरित्तधम्मो समणधम्मो । २ ।' प्रागुक्तार्थयुक्त्या व्याख्येयं । अथ तीर्थं 'नामं'

**नामं ठवणातित्थं, दव्वतित्थं च भावतित्थं च । एक्केक्कंपि अ इत्तोऽणेगविहं होइ णायव्वं ॥ १०७२ ॥**

नामतीर्थं स्थापनातीर्थमित्यादि । इतो नामादिनिक्षेपादनु एकैकं नामादितीर्थमनेकविधं ज्ञातव्यं । तत्र नामतीर्थमनेकधा जीवाजीवविषयादिभेदात् । स्थापनातीर्थं तु साकारानाकारस्थापनाभेदात् ॥ १०७२ ॥ द्रव्यभावतीर्थे ज्ञशरीरादिभेदादनेकधा स्यातां, तत्र ज्ञशरीरादिव्यतिरिक्ते द्रव्यभावतीर्थे व्याख्याति 'दाहो'

**दाहोवसमं तण्हाइ, छेअणं मलपवाहणं चेव । तिहि अत्थेहि निउत्तं, तम्हा तं दव्वओ तित्थं ॥१०७३॥**

द्रव्यतीर्थं मागधादि तच्च, दाहस्योपशमो यस्मिन् तत् दाहोपशमं, तथा तृष्णायाः छेदनं, मलप्रवाहनं च । एभिस्त्रिभिरर्थैः करणभूतैर्निश्चयेन युक्तं अर्थं तस्मात्तद्द्रव्यतस्तीर्थं पृषोदरादित्वान्निपाते तीर्थमिति सिद्धं । नोआगमतो भावतीर्थं क्रोधा-

दिनिग्राहकं गमनं ॥ १०७३ ॥ तत आह । ' कोहं '

कोहंमि उ निग्गहिए, दाहस्सोवसमणं हवइ तित्थं। लोहंमि उ निग्गहिए, तण्हावुच्छेअणं होइ॥१०७४॥ कर-निक्षेपाः ॥

क्रोधनिगृहीते तथ्यं तात्त्विकं दाहस्योपशमनं भवति, लोभे निगृहीते तृष्णाव्यवच्छेदनं ॥ १०७४ ॥ ' अट्ठ '

अट्ठविहं कम्मरयं, बहुएहि भवेहिं संचिअं जम्हा। तवसंजमेण धुव्वइ, तम्हा तं भावओ तित्थं ॥

बहुभिर्भवैः सञ्चितं अष्टविधं कर्मरजो यस्मादत्र शासने तपःसंयमाभ्यां धाव्यते तस्मात्तच्छासनं ॥ १०७५ ॥ ' दंस '

दंसणनाणचरित्तेसु, निउत्तं जिणवरेहिं सव्वेहिं। एएण होइ तित्थं एसो अन्नोऽवि पज्जाओ ॥१०७६॥

दर्शनादिषु त्रिष्वर्थेषु सर्वजिनवरैर्नियुक्तं नियोजितं, एतेन त्रिष्वर्थेषु तिष्ठतीति त्रिस्थं, निपाते तीर्थं शासनमेव । एषोऽन्योऽपि ॥ १०७६ ॥ अथ करः ' नाम '

णामकरो ठवणकरो, दव्वकरो खित्तकालभावकरो। एसो खलु करगस्स उ, णिक्खेवो छव्विहो होइ ॥

कर एव करकस्तस्य स्वार्थे कः ॥ १०७७ ॥ द्रव्यकरादीन् व्याख्याति ' गोम '

गोमहिसुट्टिपसूणं, छगलीणंपि अ करा मुणेयव्वा। तत्तो अ तणपलाले, भुसकट्ठंगारपलले य ॥१०७८॥

गोमहिष्युष्ट्रपशूनां, पशुः छागः, छागीनामपि करा राजदेयभागा ज्ञातव्याः, गोकरः महिषीकर इत्यादि, ततः तृणं, पलालं, बुसं-तुषकं, काष्ठं, अङ्गारा लीहालकास्तेषां कर एव कारः पूरणे ॥ १०७८ ॥ ' सिउं '

सिउं[11]बर[12]जंघाए[13] बालिवद्दकए[14] घए[15] अ चम्मे[16] अ। चुल्लगकरे[17] अ भणिए, अट्ठारसमा करु[18]प्पत्ती ॥ १०७९ ॥

शीता हलकर्षः, उदुम्बरो गृहस्य। जङ्घाया जङ्घाबलवतां दूरदेशव्यवसायिनां करः। बलीवर्दाः। पृष्टवाहास्तत्करः, घृतकरः यद् घृतं उत्तरति तत्करः, चर्म्मकरः, चुल्लको भोजनं तदेव करः, इह कराः सप्तदश स्वाभाविकाः सदैव प्रवर्त्तमाना ज्ञेयाः, अष्टादशकरस्योत्पत्तिः स्वकल्पनोत्था, कोऽर्थः प्रागुक्त१७कराधिकः स्वेच्छया कृतोऽष्टादशः करः, स चौत्पत्तिक इति प्रसिद्धः ॥ १०७९ ॥ 'खित्तं'

खित्तंमि जंमि खित्ते, काले जो जंमि होइ कालंमि। दुविहो अ होइ भावे, पसत्थु तह अप्पसत्थो अ॥

क्षेत्रे यः करः स्यात् स 'खित्ते'त्ति क्षेत्रविषयः करः, एवं कालकरोऽपि, प्रशस्त आदेयोऽप्रशस्तोऽनादेयः ॥ १०८० ॥ तत्राप्रशस्तत्यागात्प्रशस्ताप्तिरित्यादौ तमेवाह 'कल'

कलहकरो डमरकरो, असमाहिकरो अनिव्वुइकरो अ। एसो उ अप्पसत्थो, एवमाई मुणेयव्वो ॥१०८१॥

कलहो वाकलिस्तत्करणशीलः। डमरः कायकलिः, असमाधिः पीडा, अनिर्वृत्तिरस्वास्थ्यं, एष त्वेवमादिरप्रशस्तकरः ॥ १०८१ ॥ 'अत्थ'

अत्थकरो अ हिअकरो, कित्तिकरो गुणकरो जसकरो अ। अभयकर निव्वुइकरो, कुलगर तित्थंकरंतकरो

अर्थः सुशास्त्रार्थग्रहणं तत्करणशीलः, हितं परिणामसुन्दरं, कीर्त्तिर्दानादिजा, गुणा ज्ञानादयः, यशः पराक्रमजं

पराक्रमश्चात्र भावारिजयः, शेषं स्पष्टं । कुलं एकाचार्यसन्ततिः, अन्तकरः कर्म्मान्तकारी ॥ १०८२ ॥ इह भावधर्म्मेण भाव-
तीर्थेन प्रशस्तभावकरेण नाधिकारः । अथ ' जिण ' इत्यादि ' जिय '

जियकोहमाणमाया, जियलोहा तेण ते जिणा हुंति। अरिणो हंता रयं हंता, अरिहंता तेण वुच्चंति ॥

स्पष्टा, किन्तु क्रोधादिजयनाज्जिनाः, अरीन् हन्तारः, रजो हन्तारः, पृषोदरादित्वादर्हन्तः ॥ १०८३ ॥ ' कित्ते '

कित्तेमि कित्तणिज्जे, सदेवमणुआसुरस्स लोगस्स। दंसणनाणचरित्ते, तवविणओ दंसिओ जेहिं ॥१०८४॥

सदेवमनुजासुरस्य लोकस्य, कीर्त्तनीयान्नामभिः स्तव्यान्, 'कित्तेमी'ति कीर्त्तयिष्यामि, यैर्दर्शनज्ञानचारित्राणि तपोविनयश्च
दर्शितः ॥ १०८४ ॥ ' चउ '

चउवीसंति य संखा, उसभाईआ उ भण्णमाणा उ। अविसद्दग्गहणा, पुण एरवयमहाविदेहेसुं ॥१०८५॥

चतुर्विंशतिरिति सङ्ख्या, ते च भण्यमाना ऋषभादयः, अन्यथाऽनन्ताः, अपिशब्दग्रहणात् पुनरैरवतमहाविदेहेषु ये तेऽत्रा-
नुक्ता अपि ज्ञाता ज्ञेयाः ॥ १०८५ ॥ ' कसि '

कसिणं केवलकप्पं, लोगं जाणंति तहय पासंति। केवलचरित्तनाणी, तम्हा ते केवली हुंति ॥१०८६॥

कल्पशब्द उपमार्थे ततश्च केवलकल्पं केवलज्ञानमिव कृत्स्नं सम्पूर्णं लोकं जानन्ति विशेषरूपतया, पश्यन्ति सामान्य-
रूपतया, केवलचारित्रिणः सर्वोत्तमचारित्रिणः, रत्नत्रयाभिद्धार्य चारित्रोक्तिश्चारित्रेणैव केवलज्ञानलाभज्ञप्त्यै, केवलज्ञानिनश्च

' जिण ' इत्यादि-पदानां व्याख्या ॥

केवलशब्दः सम्पूर्णार्थः, तस्मात्ते केवलिनो भवन्ति । अथ चालनाप्रत्यवस्थाने स्वयमुच्येते—लोकस्योद्योतकरानित्यत्र लोकाऽलोकस्येति किं नोक्तं ? उच्यते—इह लोकशब्देन पञ्चास्तिकाया गृह्यन्ते, अत आकाशास्तिकायभेदरूपोऽलोकोऽप्यात्तः । तथा लोकोद्योतकृत्त्वं अवधिज्ञात्रादिषु चन्द्रादिषु चास्तीति तन्निरासाय धर्म्मतीर्थकरानिति । इदं विशेषणद्वयं लोकोक्त्या विभङ्गज्ञानिष्वपि स्यात्ततो जिनानित्युक्तं । ततोऽप्युपशान्तमोहादिनिरासायार्हत इति । अर्हतः छद्मस्थतानिरासाय केवलिन इति ॥ १०८६ ॥ 'उसभमजियं चेत्यादिसूत्रगाथाः ३

**उसभमजिअं च वंदे, संभवमभिणंदणं च सुमइं च। पउमप्पहं सुपासं, जिणं च चंदप्पहं वंदे ॥ २ ॥**
**सुविहिं च पुप्फदंतं, सीअल सिज्जंस वासुपुज्जं च। विमलमणंतं च जिणं, धम्मं संतिं च वंदामि।।३॥**
**कुंथुं अरं च मल्लिं, वंदे मुणिसुव्वयं नमिजिणं च। वंदामि रिट्ठनेमिं, पासं तह वद्धमाणं च ॥ ४ ॥**

'सुविहिं च पुप्फदंतं 'ति सुविधेर्द्वितीयं नाम । 'वन्दामि अरिनेमिं ' इति चूर्णौ, भवपङ्कमग्नस्य जगदुद्धरणाय वृषभोपमत्वेन वृषभः । भावारिभिरजितत्वादजितः । सर्वातिशयानां सम्भवनात्सम्भव इत्यादि । सर्वार्हतां गुणानुरूपाणि नामानि ज्ञेयानि, एवं च सर्वेऽप्यर्हन्तो वृषभाः, सर्वे चाजिताः स्युरित्यादि। तथापि नाम्नां विशेषकारणान्याह। अथ निर्युक्ति ' उरू '

**उरूसु उसभलंछण,उसभं सुमिणंमि तेण उसभजिणो॥ अक्खेसु जेण अजिआ,जणणी अजिओ जिणो तम्हा**

ऊर्वोरूर्ध्वमुखो वृषभो लाञ्छनं स्वप्ने आदौ ऋषभं माताऽपश्यत् १ । प्रभोर्गर्भस्थे जननी राज्ञा सह क्रीडन्ती अक्षेषु

पार्श्वेऽजिनाऽभूत् ॥ १०८७ ॥ 'अभि'

अभिसंभूआ सासत्ति, संभवो तेण वुच्चई भयवं । अभिणंदई अभिक्खं, सक्को अभिणंदणो तेण ॥१०८८॥

अभिसम्भूतानि गर्भतो जातानि सस्यानीति सम्भवस्तेनोच्यते, प्रभोर्गर्भस्थे इति सर्वत्र ज्ञेयं ३ । 'अभिनन्दई' अभीक्ष्णं तदा शक्रोऽभिनन्दत्यानन्दयत्यर्हन्नित्यादिना पितरौ ॥ १०८८ ॥ 'जण'

जणणी सव्वत्थ विणिच्छएसु सुमइत्ति तेण सुमइजिणो । पउमसयणंमि जणणीइ डोहलो तेण पउमाभो ॥

जननी सर्वार्थानां विनिश्चयेषु सुमतिः सुष्ठु मतिर्जाता यथा विधवयोः सपत्न्योरेकपुत्रार्थे धनार्थे च विवादे राज्ञी प्रोचे— सम्पूर्णो यातः प्रौढः सन्नशोकतले निविश्य विवादं भङ्क्ष्यति तावद्विलम्बेतां, ततोऽन्यया प्रपन्नं पुत्रमात्रा तु न, ततः सा सत्या माता सत्कृता च ५ । 'पउ' पद्मशयने स्वापाय जनन्या दोहदः सुर्गाऽपूरि, पद्मवर्णश्च प्रभुस्तेन पद्मप्रभः ६ ॥ १०८९ ॥ 'गब्भ'

गब्भगए जं जणणी जाय सुपासा तओ सुपासजिणो । जणणीए चंदपियणंमि, डोहलो तेण चंदाभो ॥

प्राग् विषमपार्श्वा तदा सुष्ठुपार्श्वा जाता । 'जणणीए' चन्द्रपाने दोहदश्चाणिक्यवत् कलावता पुंसाऽपूरि ८ ॥ १०९० ॥ 'सव्व'

सव्वविहीसु अ कुसला, गब्भगए तेण होइ सुविहिजिणो । पिउणो दाहोवसमो, गब्भगए सीयलो तेणं ॥

माता सर्वविधिषु विशेषतः कुशलाऽभूत्, पुष्पकलिकोपमदन्तत्वात् पुष्पदन्तोऽपि ९ । 'पिउ, पितुः पूर्वोत्पन्नोऽसाध्यपि-

'उसभम-जियं चे'-त्यादिसूत्र-गाथात्रय-व्याख्या ॥

त्तदाहस्य राज्ञीकरस्पर्शादुपशमोऽभूत् ॥ १०९१ ॥ ' मह '

महरिहसिज्जारुहणंमि, डोहलो तेण होइ सिज्जंसो। पूएइ वासवो जं, अभिक्खणं तेण वसुपुज्जो ॥

महार्हायां महायोग्यायां शय्यायामारोहणे दोहदोऽभूत्तच्चैवं–राजकुलक्रमायातायां आरोहकाशिवकृद्देवताश्रितायां शय्यायां मातुरारोहे श्रेयोऽभूदिति, छान्दसत्वात् श्रेयांसः ११ । 'पूएइ' वासवो गर्भगेऽर्हत्यभीक्ष्णं जननीं पूजयतीति वासवपूज्यः पृषोदरादित्वाद्वासुपूज्यः १२ ॥ १०९२ ॥ ' विम '

विमलतणुबुद्धि जणणी, गब्भगए तेण होइ विमलजिणो। रयणविचित्तमणंतं, दामं सुमिणे तओऽणंतो

जननी विमलतनुबुद्धिस्तन्वा मत्या च निर्म्मलाऽभूत् १३ । ' रय ' अनन्तं अतिदीर्घं दाम माला स्वप्ने मात्रा दृष्टं १४ ॥ १०९३ ॥ ' गब्भ '

गब्भगए जं जणणी, जाय सुधम्मत्ति तेण धम्मजिणो। जाओ असिवोवसमो, गब्भगए तेण संतिजिणो ॥

जननी पिता च प्राक् श्राद्धत्वेऽस्थिरौ सन्तौ तदा श्राद्धव्रतस्थिरत्वेन सुधर्म्माणौ जातौ १५ ॥ १०९४ ॥ ' थूहं '

थूहं रयणविचित्तं कुंथुं सुमिणंमि तेण कुंथुजिणो। सुमिणे अरं महरिहं, पासइ जणणी अरो तम्हा ॥

माता स्वप्ने, कौ पृथ्व्यां स्थितं कुस्थं पृषोदरादित्वात् कुन्थुं रत्नस्तूपमपश्यत् । १७ । 'सुमि०' अरं चक्राङ्गं रत्नमयं महार्हं, तथा ' सर्वोत्तमे महासत्त्वकुले य उपजायते । तस्याभिवृद्धेरसौ अर उदाहृतः । १ ।' तस्य कुलस्याभिवृद्धयेऽसौ पुत्रोऽर

इति गंगाया शुद्धेरुक्तः १८ ॥ १०१५ ॥ 'वर'

वरसुरहिमल्लसयणंमि, डोहलो तेण होइ मल्लिजिणो। जाया जणणी जं सुव्वयत्ति मुणिसुव्वओ तम्हा ॥

'मल्लगणगंमी'ति मालाशय्याविषये दोहदः १९। 'जाया' जननी पिता च सुष्ठु श्राद्धव्रतो, मनुते सर्वं वेत्तीति मुनिः, स नामो गुरुनश्च २० ॥ १०९५ ॥ 'पण'

पणया पच्चंतनिवा दंसियमित्ते जिणंमि तेण नमी। रिट्ठरयणं च नेमिं उप्पयमाणं तओ नेमी ॥१०९७॥

पुर रुग्धा स्थिताः प्रत्यन्तनृपाः सीमसन्धिभूपा जिने दर्शितमात्रे इति, कोऽर्थः–सगर्भे मातरि अट्टालकस्थायां दर्शितायां प्रणताः। २१। 'रिट्ठ०' माता स्वप्ने रिष्टरत्नमयीं नेमिं–चक्रधारां उत्पतन्तीं ददर्श। अरिष्टं नमयतीत्यरिष्टनेमिर्वा २२ ॥ १०९७ ॥ 'सप्पं'

सप्पं सयणे जणणी, तं पासइ तमसि तेण पासजिणो। वड्ढइ नायकुलंति अ, तेण जिणो वद्धमाणुत्ति ॥

तमसि ध्वान्ते गतफणं सर्पं शयने प्रत्यक्षं पश्यति, दृशिधातोश्छांदसत्वात् पार्श्वः २३। 'वड्ढं' ज्ञातानां क्षत्रियाणां कुलं हिरण्यादिना वर्द्धते' २४ ॥ १०९८ ॥ 'एवं मए अभिथुआ' इत्यादि सूत्रम्

एवं मए अभिथुआ विहुयरयमला पहीणजरमरणा। चउवीसंपि जिणवरा, तित्थयरा मे पसीयंतु ॥५॥

एवं मयाऽभिस्तुताः, विधुतरजोमलाः, बध्यमानं कर्म रजः प्राग्बद्धं तु मलं। प्रहीणजरामरणाः, चतुर्विंशतिः अपि

'उसभमजियं चे'-त्यादिसूत्रगाथात्रयव्याख्या ॥

तदाहस्य राज्ञीकरस्पर्शादुपशमोऽभूत् ॥ १०९१ ॥ 'मह'

**महरिहसिज्जारुहणंमि, डोहलो तेण होइ सिज्जंसो। पूएइ वासवो जं, अभिक्खणं तेण वसुपुज्जो ॥**

महार्हायां महायोग्यायां शय्यायामारोहणे दोहदोऽभूत्तच्चैवं–राजकुलक्रमायातायां आरोहकाशिवकृद्देवताश्रितायां शय्यायां मातुरारोहे श्रेयोऽभूदिति, छान्दसत्वात् श्रेयांसः ११ । 'पूएइ' वासवो गर्भगेऽर्हत्यभीक्ष्णं जननीं पूजयतीति वासवपूज्यः पृषोदरादित्वाद्वासुपूज्यः १२ ॥ १०९२ ॥ 'विम'

**विमलतणुबुद्धि जणणी, गब्भगए तेण होइ विमलजिणो। रयणविचित्तमणंतं, दामं सुमिणे तओऽणंतो**

जननी विमलतनुबुद्धिस्तन्वा मत्या च निर्म्मलाऽभूत् १३ । 'रय' अनन्तं अतिदीर्घं दाम माला स्वप्ने मात्रा दृष्टं १४ ॥ १०९३ ॥ 'गब्भ'

**गब्भगए जं जणणी, जाय सुधम्मत्ति तेण धम्मजिणो। जाओ असिवोवसमो, गब्भगए तेण संतिजिणो ॥**

जननी पिता च प्राक् श्राद्धत्वेऽस्थिरौ सन्तौ तदा श्राद्धव्रतस्थिरत्वेन सुधर्म्माणौ जातौ १५ ॥ १०९४ ॥ '[illegible]'

[illegible]

इति मंजया सूरिकृतः १८ ॥ १०९५ ॥ 'वर'

**वरसुरहिमल्लसयणंमि, डोहलो तेण होइ मल्लिजिणो। जाया जणणी जं सुव्वयत्ति मुणिसुव्वओ तम्हा ॥**

'मल्लसयणंमी'ति माल्यशय्याविषये दोहदः १९। 'जाया' जननी पिता च सुष्ठु श्राद्धव्रतो, मनुते सर्वं वेत्तीति मुनिः, स जातो सुव्रतश्च २०॥ १०९५॥ 'पण'

**पणया पच्चंतनिवा दंसियमित्ते जिणंमि तेण नमी। रिट्ठरयणं च नेमिं उप्पयमाणं तओ नेमी ॥१०९७॥**

पुरं कृत्वा स्थिताः प्रत्यन्तनृपाः सीमसन्धिभूपा जिने दर्शितमात्रे इति, कोऽर्थः—सगर्भे मातरि अट्टालकस्थायां दर्शितायां प्रणताः। २१। 'रिट्ठ०' माता स्वप्ने रिष्टरत्नमयीं नेमि—चक्रधारां उत्पतन्तीं ददर्श। अरिष्टं नमयतीत्यरिष्टनेमिर्वा २२॥ १०९७॥ 'सप्पं'

**सप्पं सयणे जणणी, तं पासइ तमसि तेण पासजिणो। वड्ढइ नायकुलंति अ, तेण जिणो वद्धमाणुत्ति ॥**

तमसि ध्वान्ते सप्तफणं सर्पं शयने प्रत्यक्षं पश्यति, दृशिधातोश्छांदसत्वात् पार्श्वः २३। 'वड्ढ' ज्ञातानां क्षत्रियाणां कुलं हिरण्यादिना वर्द्धते २४॥ १०९८॥ 'एवं मए अभिथुआ' इत्यादि सूत्रम्

**एवं मए अभिथुआ विहुयरयमला पहीणजरमरणा। चउवीसंपि जिणवरा, तित्थयरा मे पसीयंतु ॥ ५॥**

एवं मयाऽभिष्टुताः, विधूतरजोमलाः, बध्यमानं कर्म्म रजः प्राग्बद्धं तु मलं। प्रहीणजरामरणाः, चतुर्विंशतिः अपि

'उसभमजियं चे'त्यादिसूत्रगाथात्रयव्याख्या ॥

जिनवराः, अपिशब्दादन्येऽपि तीर्थकरा मे प्रसीदन्तु । यद्यपि ते रागादिरहितत्वान्न प्रसीदन्ति तथापि तानचिन्त्यचिन्तामणीनुद्दिश्यान्तःकरणशुद्ध्या स्तोतॄणां तत्पूर्वकैवेष्टफलाप्तिः स्यात् ॥ ५ ॥ ' कित्तियवंदिय ' इत्यादि सूत्रम्

**कित्तियवंदियमहिआ, जेए लोगस्स उत्तमा सिद्धा। आरुग्गबोहिलाभं, समाहिवरमुत्तमं दिंतु ॥ ६ ॥**

कीर्त्तिताः स्वनामभिः वन्दिताः—स्तुताः, महिता[1] भावपूजया ये एते प्राणिलोकस्य मध्ये निर्गतकर्म्ममलत्वेनोत्तमाः प्रधानाः, सितं बद्धं कर्म्म ध्मातं दग्धमेषामिति सिद्धाः। आरोग्यं मोक्षं, बोधिलाभं सुधर्म्माप्तिं, समाधिवरं ज्ञानादिरूपं भावसमाधिं वरं उत्तमं सर्वोत्कृष्टं ददतु ॥ ६ ॥ अथ सूत्रस्पर्शिनिर्युक्तिः, स्तवकीर्त्तनवन्दनैकार्थिकान्याह ' थुति '

**थुतिथुणणवंदणनमंसणाणि एगट्ठिआणि एयाणि। कित्तण पसंसणावि अ, विणयपणामे अ एगट्ठा॥१०९९**

स्तुतिः लघ्वी, स्तवनं महद्, वन्दनं गुणग्रहणं, नमस्करणं वाचा, कीर्त्तनप्रशंसने विनयप्रणामौ चैकार्थाः ॥१०९९॥ ' मिच्छ '

**मिच्छत्तमोहणिज्जा नाणावरणा चरित्तमोहाओ। तिविहतमा उम्मुक्का, तम्हा ते उत्तमा हुंति॥११००॥**

मिथ्यात्वमोहनीयमिति दर्शनसप्तकं, ज्ञानावरणं पञ्चधा, चारित्रमोहं १२ कषाय ९ नोकषायभेदैरेकविंशतिधाऽस्मात्रिविधतमस उन्मुक्तास्तस्मात्ते उत्तमाः स्युः ॥ ११०० ॥ ' आरो '

**आरोग्गबोहिलाभं समाहिवरमुत्तमं च मे दिंतु। किं नु हु निआणमेअंति ? विभासा इत्थ कायव्वा॥११०१॥**

१ पुष्पादिभिः पूजिताः इति हारि० वृत्तौ अन्यत्र च ।

'कित्तियवंदिये'तिसूत्रगाथाव्याख्या ॥

पूर्वार्द्धं स्पष्टं, किं प्रश्ने, नुर्वितर्के, हुः स्थापने, निदानमेतदिति। गुरुराह–विभाषेति विविधा भाषा विषयविभागस्थापनाऽत्र कार्या यथा–नेदं निदानं कर्मबन्धहेतुरभावात्, यतः मिथ्यात्वविरतिकषायप्रमादयोगा बन्धकराः, न चोक्तयाऽऽशयामेषामेकोऽप्यस्ति, न चार्हन्तः स्तुता आरोग्यादि ददति अरागत्वात्, न च न ददति, तद्ध्यानेनैव तत्प्राप्तेः, तत एषा याञ्जाऽसत्यामृषा ज्ञेया ॥ ११०१ ॥ तदाह 'भासा'

'कित्तिय-वंदिये'ति-सूत्रगाथा-व्याख्या ॥

भासा असच्चमोसा, नवरं भत्तीइ भासिआ एसा। न हु खीणपिज्जदोसा, दिंति समाहिं च बोहिं च ॥

नवरं केवलं एषा याचनीयरूपाऽसत्यामृषाभेदामध्यवर्त्तिनी भाषा भक्त्या भाषिता, क्षीणप्रेमद्वेषाः समाधिं बोधिं च नाऽऽशंसेव ददति ॥ ११०२ ॥ किन्तु 'जं ते'

जं तेहिं दायवं, तं दिन्नं जिणवरेहिं सव्वेहिं। दंसणनाणचरित्तस्स, एस तिविहस्स उवएसो ॥११०३॥

तैः यद्दातव्यमभूत्तद्दत्तं, तत्किमित्याह–'दंसण'दर्शनादेस्त्रिविधस्यैष आरोग्यादिकृदुपदेशः, दर्शनज्ञानचारित्राणां समुदितानामेव मोक्षसाधकत्वज्ञप्त्यै त्रिविधस्येति विशेषणं ॥ ११०३ ॥ ननु किं तेषामधुना सामर्थ्यरहितानां स्तुत्या ? उच्यते 'भत्ती'

भत्तीइ जिणवराणं, खिज्जंती पुव्वसंचिआ कम्मा। आयरिअनमुक्कारेण, विज्जा मंता य सिज्झंति॥११०४॥

जिनवराणां भक्त्या पूर्वसञ्चितानि कर्माणि क्षीयन्ते, यथाऽऽचार्यनमस्कारेण विद्यामन्त्राश्च सिद्ध्यन्ति, तत्सिद्ध्यन्तराय-

कर्म्मक्षयात् ॥ ११०४ ॥ ' भत्ती '

**भत्तीइ जिणवराणं, परमाए खीणपिज्जदोसाणं। आरुग्गबोहिलाभं समाहिमरणं च पावंति ॥११०५॥**

परमया जिनवराणां भक्त्याऽऽरोग्यादि प्राप्नुवन्ति ॥ ११०५ ॥ अथ जिनभक्तिमात्रादेव पुनर्बोधिलाभो भावीतिवादिनं क्रियाप्रमादिनं प्रत्युपदेशगाथे ' लद्धि ' ' लद्धि '

**लद्धिल्लिअं च बोहिं, अकरिंतोऽणागयं च पत्थंतो। दच्छिसि जहंतं विब्भल ! इमं च अन्नं च चुक्किहिसि ॥**

**लद्धिल्लिअं च बोहिं, अकरिंतोऽणागयं च पत्थंतो। अन्नंदाइं बोहिं, लब्भिसि कयरेण मुल्लेण ? ॥११०७॥**

लब्धां बोधिं-सुबुद्धिं सदनुष्ठानेन सफलामकुर्वन्, च एवार्थे, अनागतां च बोधिं प्रार्थयन् यथा द्रक्ष्यसि वीक्षिष्यसे तथा शृणु हे विह्वल ! जड ! इमां च बोधिं आश्रित्य 'चुकिहिसि' भ्रंशिष्यसे। द्वितीयगाथायां अन्यामिदानीं बोधिं कतरेण मूल्येन लप्स्यसे ? अयं भावः-बोधौ सत्यां इह क्रियावतोऽन्यभवेऽपि बोधिः स्यान्नान्यस्य, यश्च ग्रन्थिभेदादन्वाद्यबोधिलाभः स राधावेधाभः। अत्र क्षेपकगाथे-' बोही दवे भावे, दवे पउमाइ भावनाणाई। नाणाइतिहालद्धी जोगे जोगं च कुवंतो। १। कोट्ठगइ पत्थयंतो, मच्छं चुकिहिसि तुमंपि एमेव। निव्वयणं वत्तवो तो गिण्ह इमं जिणवरुत्तं। २।' बोधिर्द्विधा द्रव्ये भावे च। द्रव्ये पद्मादेर्बोधिः, भावे ज्ञानादेर्बोधिः। तत्र ज्ञानादित्रिविधलब्धियोगः, तद्योगं रत्नत्रयं च कुर्वन् भावे बोधिवान् स्यात्। यथा जम्बुकः कोष्ठगतायां उदरगतायामिव मांसपेश्यां सत्यां मत्स्यं प्रार्थयन् मत्स्यात् मांसाच्च भ्रष्टः, शिष्य ! त्वमप्येवं प्राप्तां

बोधिं प्रमादेनाकुर्वन्नन्यां प्रार्थयन्नस्याः परस्याश्च बोधेर्भ्रश्यमीति निर्वचनं निरुक्तं वक्तव्यः । तत इमां जिनवरोक्तां बोधिं गृहाण ॥ ११०६–११०७ ॥ न च चैत्याद्यालम्बनं चेतस्याधाय प्रमाद्यं यतः 'चेइ'

चेइयकुलगणसंघे, आयरिआणं च पवयण सुए अ। सव्वेसु वि तेण कयं, तवसंजममुज्जमंतेणं ॥ ११०८ ॥

चैत्यान्यर्हतां, कुलं च(चा)न्द्रकुलादि, गणः कुलानां सङ्घातः कोटीगणादिः, सङ्घः साध्व्यादिः, आचार्याः, णं वाक्यालङ्कारे । चशब्दादुपाध्यायादयः । प्रवचनं शासनं । श्रुतं १२ अङ्गानि, सर्वेष्वप्येषु तेन कृत्यं कृतं, किंरूपेण ? तपसंयमोद्यमवता ॥ ११०८ ॥ 'चंदेसु निम्मलयरे'ति सूत्रम्

चंदेसु निम्मलयरा, आइच्चेसु अहिअं पयासयरा। सागरवरगंभीरा, सिद्धा सिद्धिं मम दिसंतु ॥७॥

पञ्चम्यर्थे सप्तमी, चन्द्रेभ्यो निर्मलतराः कर्ममलकलङ्काभावात् । आदित्येभ्योऽप्यधिकं प्रकाशकराः लोकालोकोद्योतकरत्वात् । सागरवरः स्वयम्भूरमणस्ततोऽपि गम्भीराः अलभ्यपारत्वात्, सिद्धा निर्वृत्ताः, सिद्धिं दिशन्तु ददतु । अत्र निर्युक्तिः ॥ ७ ॥ 'चंदा'

चंदाइच्चगहाणं पहा पयासेइ परिमिअं खित्तं । केवलिअनाणलंभो, लोगालोगं पगासेइ ॥ ११०९ ॥

केवलिकं सम्पूर्णं ज्ञानं तल्लाभः ॥ ११०९ ॥ उक्तोऽनुगमः, नयाः सामायिकवत् । इति श्री चतुर्विंशतिस्तवाध्ययनं २ ।

'चंदेसु निम्मलयरे' तिसूत्रगाथाव्याख्या ॥

कर्म्मक्षयात् ॥ ११०४ ॥ ' भत्ती '

**भत्तीइ जिणवराणं, परमाए खीणपिज्जदोसाणं। आरुग्गबोहिलाभं समाहिमरणं च पावंति ॥११०५॥**

परमया जिनवराणां भक्त्याऽऽरोग्यादि प्राप्नुवन्ति ॥ ११०५ ॥ अथ जिनभक्तिमात्रादेव पुनर्बोधिलाभो भावीतिवादिनं क्रियाप्रमादिनं प्रत्युपदेशगाथे ' लद्धि ' ' लद्धि '

**लद्धिल्लिअं च बोहिं, अकरिंतोऽणागयं च पत्थंतो। दच्छिसि जहंतं विब्भल ! इमं च अन्नं च चुक्किहिसि ॥**

**लद्धिल्लिअं च बोहिं, अकरिंतोऽणागयं च पत्थंतो। अन्नंदाइं बोहिं, लब्भिसि कयरेण मुल्लेण ? ॥११०७॥**

लब्धां बोधि-सुबुद्धिं सदनुष्ठानेन सफलामकुर्वन्, च एवार्थे, अनागतां च बोधिं प्रार्थयन् यथा द्रक्ष्यसि वीक्षिष्यसे तथा शृणु हे विह्वल ! जड ! इमां च बोधिं आश्रित्य 'चुक्किहिसि' भ्रंशिष्यसे। द्वितीयगाथायां अन्यामिदानीं बोधिं कतरेण मूल्येन लप्स्यसे ? अयं भावः-बोधौ सत्यां इह क्रियावतोऽन्यभवेऽपि बोधिः स्यान्नान्यस्य, यश्च ग्रन्थिभेदादन्वाद्यबोधिलाभः स राधावेधाभः। अत्र क्षेपकगाथे-' बोही दवे भावे, दवे पउमाइ भावनाणाई। नाणाइतिहालद्धी जोगे जोगं च कुवंतो। १। कोट्ठगइ पत्थयंतो, मच्छं चुक्किहिसि तुमंपि एमेव। निवयणं वत्तवो तो गिण्ह इमं जिणवरुत्तं। २।' बोधिर्द्विधा द्रव्ये भावे च। द्रव्ये पद्मादेर्बोधिः, भावे ज्ञानादेर्बोधिः। तत्र ज्ञानादित्रिविधलब्धियोगः, तद्योगं रत्नत्रयं च कुर्वन् भावे बोधिवान् स्यात्। यथा जम्बुकः कोष्ठगतायां उदरगतायामिव मांसपेश्यां सत्यां मत्स्यं प्रार्थयन् मत्स्यात् मांसाच्च भ्रष्टः, शिष्य ! त्वमप्येवं प्राप्तां

इति श्रीमन्माणिक्यशेखरसूरिविहितदीपिकायुतं श्री आवश्यक-
सूत्रगतं द्वितीयं चतुर्विंशतिस्तवनमध्ययनं संपूर्णतामगमत्
प्रथमो विभागः ।